# BIBLIOTHECA INDICA;

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED

UNDER THE SUPERINTENDENCE

OF

THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES

Nos. 301, 321, 322, 323, 324, and 334.

---

# Sama Veda Sanhita,

WITH

THE COMMENTARY

OF

# SÁYAṆA ÁCHÁRYA.

EDITED BY

PAṆḌITA SATYAVRATA SÁMAŚRAMÍ,

EDITOR OF THE HINDU COMMENTATOR.

VOL. III

Calcutta.



PRINTED BY N. K. SIRCAR AT THE GAṆEŚA PRESS

1876.



# सामवेदसंहिता,

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहिता।

—ෆ—

श्रीलश्री

वङ्गदेशीयासियाटीक्-समाजाभ्यर्थनया

——000——

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

**श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण**

वङ्गसामगेन

टीकिता यथावसरं शोधिता च।

——000——

तृतीयो भागः

## उत्तरार्च्चिकः

प्रथमादि-प्रपाठकत्रयात्मकः॥

**कलिकातः**

गणेशयन्त्रे मुद्रितः।

शाकाः १७९७.

# सामवेदसंहिता,

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहिता।

—∞—

श्रीलश्री

वङ्गदेशीयासियाटीक्-समाजाभ्यर्थनया

——000——

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

वङ्गसामगेन

टीकिता यथावसरं शोधिता च।

——000——

तृतीयो भागः

## उत्तरार्चिकः

प्रथमादि-प्रपाठकत्रयात्मकः॥

कलिकातः

गणेशयन्त्रे मुद्रितः।

शाकाः १९९७.

BIBLIOT...

OLLECTION OF OR...

ारादिक्रमेण सूची ॥

UBLISHED UNDER THE SUPERIN...

ASIATIC SOCIETY OF

NEW SERIES,

प्रथम

Nos. 339, 340, 342, 347, 348, 3...



# Sama Veda Sanhita.

WITH THE COMMENTARY OF

SA´YANA A´CHA´RYA,




EDITED BY

SATYAVRATA SA´MAS´RAMI´,

OF THE HINDU COMMENTATOR.

VOL. III.




CALCUTTA.

BY N. K. SIRCAR, AT THE GANE... PRESS.

1876.

# ॥ मन्त्राणामकारादिक्रमेण सूची ॥

[ ज ]

| मन्त्रप्रतीकम् | | | | पृष्ठम् |
|---|---|---|---|---|
| एषमूर्धणद्यामते ( ५, २, ५, ६ = ऊ० ) | ... | ... | ... | २८६ |
| एषस्यपीतये ( ५, २, ४, ५ = ऊ० ) | ... | .. | ... | २८२ |
| एषश्मसयो ( ५, २, ४, ४ = ऊ० ) | | ... | ... | ,, |
| एषस्यमानुषीष्वा ( ५, २, ४, ३ = ऊ० ) | . | .. | ... | २८१ |
| एषहितोवि ( ५, २, ३, ४ = ऊ० ) | ... | | ... | २७७ |
| कण्वाइन्द्रंयदक्रत ( ५, २, १८, २ = ऊ० ) | | .. | .. | ३०१ |
| कण्वाइवभृगवः ( ६, १, ६, १ = ऊ ६, १, १६ ) | | .. | .. | ४०६ |
| कदामर्त्तम ( ५, २, २२, ३ = ऊ ६, १, ७ ) | | ... | ... | ३१८ |
| कविमिवप्रशंस्यं ( ५, १, १८, २ = ऊ ५, १, ११ ) | | ... | .. | १५० |
| कविर्वेधस्या ( ५, ७, १३, ३ = ऊ पमाविसोमो ) | | ... | ... | ३१९ |
| केतुंकृण्वन्नकेतवे ( ६, २, १४, ३ = ऊ० ) | | ... | .. | ५४२ |
| गर्भंमातुः पितुः ( ६, २, ७, २ = ऊ० ) | | ... | ... | ४६२ |
| गायन्तित्वा ( ५, २, २३, १ = ऊ० ६, १, ८—२३, १, १—५ ) | | | .. | ३१९ |
| गिरस्तइन्द्र ( ४, १, ३, ७ = ऊ० ) | | .. | ... | ११ |
| गिरावज्रोन ( ५, १, १०, ३ = ऊ० ) | ... | ... | ... | २०१ |
| गोषाइन्दो ( ४, १, ३, ९ = ऊ० ) | ... | .. | ... | ११ |
| घृतम्पवस्व ( ६, २, १, ३ = ऊ० ) | ... | ... | ... | ५१३ |
| चमूषच्छ्येनो ( ५, १, १, ३ = ऊ शिशुञ्जज्ञानं हर्यतम् ) | | ... | ... | १६६ |
| जनीयन्तोन्वग्रवो ( ६, ३, ८, १ = ऊ० ) | .. | ... | .. | ५३६ |
| जुष्टइन्द्राय ( ५, १, ३, ८ = ऊ० ) | ... | ... | ... | १८३ |
| ज्योतिर्यज्ञस्य ( ४, १, १, १ = ऊ ८, २, ११—१९, २, २ ) | | | ... | १ |
| तंवःसखायो ( ४, १, १९, १ = ऊ ३, २, १२—८, १, १०—११ ) | | | ... | ७५ |
| तंहिस्वराजं ( ५, १, १८, २ = ऊ ४, २, १६—१८, २, ७ ) | | | ... | २२४ |
| तन्नेयज्ञोअजायत ( ६, २, १९, २ = ऊ० ) | .. | ... | ... | ५०७ |

[ अ ]

मन्त्रप्रतीकम् — पृष्ठम्

मन्त्रप्रतीकम् | पृष्ठम्

मन्त्रप्रतीकम्                                                                 पृष्ठम्

मन्त्रप्रतीकम् | पृष्ठम्

| मन्त्रप्रतीकम् | पृष्ठम् |
|---|---|
| यत्वानीःसन्वाहद्यो (५, २, २३, ३ = ऊ गायन्तिला) ... ... | ३८० |
| यदद्यसूर (६, १, २, १ = ऊ०) ... ... ... | ३९२ |
| यदिन्द्रचित्र (४, २, १४, १ = ऊ ४, १, १९—२३, २, १९) .. | १६० |
| यदिन्द्रप्राग् (५, १, १३, १ = ऊ ४, २, १५) ... ... | २११ |
| यदीमुतेभिर् (६, ३, २, ३ = ऊ २०, १, १—२१, १, १२) ... | ५१६ |
| यद्वाहमेदघ्नमे (५, १, १३, २ = ऊ ४, २, १५) ... ... | २२१ |
| यद्वीडावीन्द्र (४, १, ९, १ = ऊ० ) ... ... ... | २८ |
| यन्मन्यसे (४, २, १४, २ = ऊ ४, १, १९—२३, २, २९) ... | १६० |
| यसग्ने इत्स्तु (६, २, १४, १ = ऊ०) ... ... ... | ४८३ |
| यश्चिद्धिला (५, २, २१, २ = ऊ ६, १, ७) ... ... | ३७७ |
| यस्यतइन्द्रः (४, १, १८, २ = ऊ ३, २, ११—२१, १, १४) ... | ७३ |
| यस्यते वस्वं ४, १, ९, २ = ऊ०) ... ... .. | २७ |
| युङ्क्ष्वाह्निकेशिना (५, २, २३, ३ = ऊ गायन्तिला) ... | ३८१ |
| युञ्जन्तिब्रध्नं (६, ३, १२, १ = ऊ०) ... ... | ५४१ |
| युञ्जत्यस्यकाम्या (६, ३, १२, २=ऊ०) ... ... | ५४२ |
| येनदेवाःपवित्रेण (५, २, ८, ५ = ऊ०) .. ... | २९७ |
| येसोमासःपरावति (४, २, ११, १ = ऊ ४, १, १६) ... ... | १५२ |
| रयिन्नश्चित्रं (४, १, ४, १० = ऊ०) ... ... | १६ |
| रसन्नो मित्रो (४, १, ११, ३ = ऊ इन्द्रायेन्दो) .. ... | ३१ |
| राजानोनप्रशस्तिभिः (४, २, १, ६ = ऊ प्रकाव्यमुशनेव) ... | १०७ |
| रायाहिरण्यया (४, १, ८, २ = ऊ०) .. ... | २६ |
| रेवतीर्नः (४, १, १४, १ = ऊ ३, २, ७) .. ... | ५२ |
| वयन्तेअस्यराधसो (५, १, १६, १ = ऊ अभीनोवाजसातमं) ... | २३३ |
| वसुरग्निर्वसु (४, १, २२, २ = ऊ अग्नेत्वन्नो) ... ... | ९६ |
| वाजीवाजेषु (६, ३, १७, २ = ऊ०) ... ... | ५४९ |
| वावृधानःशवसा (६, ३, १९, २ = ऊ १२, २, ११) ... ... | ५५५ |
| वाश्राअर्षन्तीन्दवः (५, १, ३, ७ = ऊ०) ... ... | १८२ |

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम्॥ ७॥

## ॥ अथ सप्तमोऽध्यायः आरभ्यते* ॥

तत्र

प्रथमखण्डे,† प्रथम-तृचे—

प्रथमा।

१ २ ३ १ २ ३ १ २ ३ २
ज्योतिर्यज्ञस्य पवते मधु प्रियं
३ २ ३ १ २ ३ २ ३ १ २
पिता देवानां जनिता विभूवसुः।
१ २ ३ १ २ ३ १ २ ३क २र
दधाति रत्नꣳ स्वधयोरपीच्यं
३ १ २ ३ १ २ ३ १र २र
मदिन्तमो मत्सर इन्द्रियो रसः॥ १‡॥

"यज्ञस्य" अग्निष्टोमादेः "ज्योतिः" दीपकः सोमः "प्रियम्" इन्द्रादीनां प्रियभूतं "मधु" मधुरसं "पवते" पूयते दशापवि-

---

* 'त्रिमात्रलोमिकमिदानीं षष्ठमहः'—इति वि०।

† 'त्रयस्त्रिंशद्देवताष्टकम्'—इति वि०।

‡ ऋ० वे० ७, ३, १९, ५।

तेन शोध्यत इत्यर्थः। स सो विशेष्यते—"पिता" पालकः "जनिता" फलस्य उत्पादकः "विभूवसुः" प्रभूतधनः तेन सम्पादयितुं शक्यत्वात् तादृशः सोमरसः "स्वधयोः" ["स्वधे"—इति द्यावापृथिव्योर्नाम (निघ० ३, ३०, १)] "अपीच्यम्" [—इति चान्तर्हितस्य (निघ० ३, २५, ६)] द्यावापृथिव्यो-र्मध्येऽन्तर्हितं "रत्नं" रमणीयं धनं "दधाति" स्थापयति यजमानेषु। स एव पुनर्विशेष्यते—"रसः" रसयिता "मदिन्तमः" मादयितृतमः "मत्सरः" स सोमः "इन्द्रियः" इन्द्रेण जुष्टः इन्द्रिय-वर्द्धको वा* ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ १ २ ३क २र ३
अभिक्रन्दन्कलशंवाज्यर्षति

१ २ ३ ० ३ १ २ ३ १
पतिर्दिवःशतधारोविचक्षणः।

१ २ ३ २ ३ १ २
हरिर्मित्रस्यसदनेषुसीदति

३ १ २ ३ १ २ ३ १ २
मर्मृजानोविभिःसिन्धुभिर्वृषा ॥ २† ॥

* 'ज्योतिर्यज्ञस्य पवते—ज्योतिकृज्ज्वलं दीप्तिकरं यज्ञस्य पवते पूयते मधु-रसं * * * पिता देवानां जनिता विविधेन प्रकारेण जनिता। कथम्? "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"—अनेन प्रकारेण जनिता। विभुर्विश्वस्य भावयिता। दधाति धारयति रत्नं स्वधयोः अपीच्यम् अविनाशि मदिन्तमः मत्सरः भक्षणीयः इन्द्रियः इन्द्रस्य स्वभूतः रसः वीर्यम्'—इति वि०।

† ऋ० वे० ७, ३, १४, १।

सोमः "वाजी" वेजनवान् गमनवान् [ यद्वा, अश्वसदृशः ] "अभिक्रन्दन्" अभितः शब्दं कुर्वन् "कलशं" द्रोणकलशम् "अर्षति" गच्छति । कीदृशः "दिवः" द्योतमानस्य अन्तरिक्षस्य दशापवित्रलक्षणस्य "पतिः" पालकः स्वामी यद्वा द्युलोकस्य स्वामी [ दिवि हि सोमउत्पन्नः "तृतीयस्या मितो दिवि सोम आसीत्"—इति श्रुतेः ] "शतधारः" परिमित-धार-पेतः "विचक्षणः" विशेषेण द्रष्टा* "हरिः" हरितवर्णः सोमरसः "मित्रस्य" मित्रवर्द्धितकरस्य यज्ञस्य "सदनेषु" "सीदति" निषण्णो भवति† । कीदृशः सन् ? "सिन्धुभिः" स्यन्दन-साधनैः अविरोमभिः दशापवित्रावयवैः‡ "मर्मृजानः" शोध्यमानः "वृषा" वर्षकः फलानाम् ॥ २ ॥

अथ तृतीया ।

२ ३ १   २ ३   २ १   ३
अग्रेसिन्धूनाम्पवमानोअर्ष
१ २ ३ १   २   ३ १र २र
स्यग्रेवाचोअग्रियोगोषुगच्छसि ।
२ ३ १ २   ३ १र २र
अग्रेवाजस्यभजसेमहद्धनᳬ
२ २ ३ १ २
स्वायुधःसोतृभिःसोमसूयसे ॥ ३¶ ॥ १

* 'विश्वस्य द्रष्टा'—इति वि० ।

† 'मित्र आदित्यविशेषः । अथवा मित्रस्य यजमानस्य सखा स्तुत्यर्थं लक्षणेन सम्बन्धेन तस्य हस्तेषु द्रोणकलशप्रभृतिषु सीदति'—इति वि० ।

‡ 'अविभिः—तृतीयाबहुवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम । अवेः स्वभूतेन दशापवित्रेण सिन्धुभिः उदकैरित्यर्थः'—इति वि० ।

¶ ऋ० वे० ७, ३, १४, २ ।

हे सोम! त्वं "सिन्धूनां" स्यन्दन-स्वभावानामुदकानाम् "अग्रे" पुरस्तात् "पवमानः" पूयमानः सन् "अर्षसि" गच्छसि वृष्ट्युदकं जनयितुमाहुतिद्वारान्तरिक्षे गच्छसीत्यर्थः। तथा "वाचः" माध्यमिकाया अपि "अग्रियः" ग्राह्यः पूज्यः सन् गच्छसि तथा "गोषु" रश्मिषु तेषामग्रे गच्छसि तथा "वाजस्य" शत्रूणामन्नस्य लाभायेति शेषः। तदर्थं "महाधनं" सङ्ग्रामं "भजसे"* सेवसे। कीदृशः सन्? "स्वायुधः" शोभन-प्रहरण-साधनायुधः। हे सोम! तादृशस्त्वं "सोतृभिः" अभिषुण्वद्भिः अध्वर्य्वादिभिः "सूयसे"† अभिषूयसे॥ ३॥ १

१ ५ ४ ५ र ४र५र
॥ मरुतान्धेनु ॥ ज्यो२३४। निर्यज्ञस्यपवतेमधो।

४ ५ १ र रर र २ र१
ह्योप्रायाम्। पितादेवानाञ्जनिता। विभूवासू२ः।

१ र २ र १ २ ३
दधानिरत्न ९स्वधयोः। अगोचायार३म्। मादिन्ता२३

५ २१२ १ २ ४ १
४माः। मत्सरइन्द्रीयो३रा५माई५६ः ॥(१) आ २ ३ ४।

५ ४ ५र ४ ५र ४ ५ १
भिक्रन्दन्कलशंवाजियौ। ह्योषातायि। पतिर्दिवःशत

र २ १ १ २ र
धारो। विचक्षाणा२ः। हरिर्मित्रस्यसदनायि। युमी

१ २ ३ ५ ३१ २ १ १
दाता२३यि। मामृजा२३४नाः। अविभिःसि। धूमा

*, † "भजते"—इति "पूयते"—इति च च्छ०-पाठः।

३यिर्वा५र्षा६५६ ॥(२) आ २ ३ ४ । ग्रे सिन्धूनाम्पवमान औ । होर्षासायि । अग्रे वाचो अग्रियोगो । षुगच्छा सा २यि । अग्रेवाजस्यभजसायि । महद्धाना २ ३ म् । सुवायू २ ३ ४ धाः । सोतृभिःसो । मासू ३ या ५ सा६ ५ ६ यि(३) ॥ ११* ॥ [१]

॥ वरुणसाम ॥ ज्योतिर्य्यं । ज्ञा ३ स्यपवतोमधुप्रि याम् । पितादेवानाञ्जनिताविभूवमू२३वौंयि । दधा तिरत्नꣳस्वधयोः । अपीचियार२३म् । होयि । मदायि न्तार२३माः । मात्सरः । इन्द्रि । यो २ ३ । रसाउवा ३ ॥(१) अभिक्र । दा३न्कलशंवा । जियर्षतायि । प तिर्द्दिवःशतधारोविचक्षणा २ ३ । होयि । हरिम्मित्रस्यसद ने । षुसीदता२३यि । होयि । मर्म्मजा२३नाः । आ

* ऊ० गा० ८प्र० १च० ११सा० ।

२ १ २ ४ ३
विभिः। सिन्धु। भा२३यिः। वृषाउवा३॥(२) अग्ने

५ ४ २ २ ४ र ५ १ र र र
सि। धू३नाम्पवमानः। अर्षसायि। अग्नेवाचोअग्नि

र र १ र र र
योगोषुगच्छसार३यिर्होयि। अग्नेवाजस्यभजसे। मह

१ २ २ २ १ २ १र
द्बना२३म्। होयि। सुवायू२३धाः। सोतृभिः। सो

२ २ १ २ १ २ १र
म। सू२३। यसाउवा३। ए३। इन्दुःसमुद्रमुर्वियां

२र २ १ १ १
विभाती२३४५(३)॥२*॥[२]१

अथ द्वितीय-तृचे—

प्रथमा।

१ २ ३ २ ३ १ २ ३ १र २र ३ २
असृक्षतप्रवाजिनोगव्यासोमासोअश्वया।

३ १ ० ३ १र २र
शुक्रासोवीरयाशवः॥१*॥

"वाजिनः"बलवन्तः "शुक्रासः"दीप्ताः "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्यया"‡ यजमानस्य गवेच्छया तथा

* ऊ० गा० २३प्र० २अ० २मा०।

† ऋ० आ० ५, २, ५, ६ (२भा० ७५४०)=ऋ० वे० ७, १, २६, ४, ५।

‡ "गव्या"—इति ऋ०-पाठः।

"अश्वया" अश्वेच्छया तथा "वीरया" वीराः पुत्र-भृत्यादयः तेषा मिच्छया "प्र असृक्षत" प्रासृज्यन्त रसान्वा विसृज्यन्ते ॥१॥

अथ द्वितीया ।

३ १ २ ३१ २३ १ २ ३ १ २
शुम्भमानाऋतायुभिमृज्यमानागभस्त्योः ।
१ २३ १ २ ३ १ २
पवन्तेवारेअव्यये ॥ २* ॥

"ऋतायुभिः" यज्ञेच्छुभिः अध्वर्यु-प्रभृतिभिः "शुम्भमानाः" अलङ्क्रियमाणाः "गभस्त्योः" हस्तयोः हस्ताभ्यां† "मृज्यमानाः" शोध्यमानाः "वारे" वाले दशापवित्रे । कीदृशे? "अव्ये" अविमये "पवन्ते" पूयन्ते ॥ २ ॥

अथ तृतीया ।

१र २र ३ २ ३ २ ३ १ २ ३ २ ३ १ २
तेविश्वादाशुषेवसुसोमादिव्यानिपार्थिवा ।
१ २ ३ १र २र
पवन्तामान्तरिच्या ॥ ३‡ ॥ २

"ते" सोमाः अभिषूयमाणाः "दाशुषे" हविः-प्रदात्रे यजमानाय "विश्वा" सर्वाणि "वसु" वासकानि गवादि-धनानि "आ

* ऋ० वे० ७, १, ३६, ५ ।

† "गभस्त्योः—गभस्तिभ्यां बाहुभ्यां । 'गभस्ती बाहू—इति बाहुनामसु पाठात्' —इति ऋ०-व्याख्या ।

‡ ऋ० वे० ७, १, ३७, १ ।

पवन्तां सर्वतः चरन्तु। वस्वित्युक्तं कथं वसूनां विश्वत्वमिति? उच्यते—"दिव्यानि" दिवि भवानि "पार्थिवा" पृथिवी-सम्बन्धानि "अन्तरिक्षा" अन्तरिक्षाणि अन्तरिक्षे भवानि* एव मुक्त-प्रकारेण विश्वानीत्यर्थः ॥ ३ ॥ २

पवस्वेति-दशर्चं तृतीय-सूक्तं—

प्रथमा।

१ २ ३ १र २र ३ १ २ ३ १ २

पवस्वदेववीरतिपवित्रꣳसोमरꣳह्या।

१ १ २ १र २र

इन्द्रमिन्दोवृषाविश ॥ १† ॥

हे सोम! "देववीः" देवकामः‡ त्वं "रंह्या" वेगेन "पवित्रं" यथा भवति "अति पवस्व" अतिक्षर किञ्च हे "इन्दो" "वृषा" सेचकस्त्वं इन्द्रम् "आविश" प्रविश ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ २ ३ १ २ ३ १

आवच्यस्वमहिप्सरोवृषेन्दोद्युम्नवत्तमः।

१र २र ३ २

आयोनिन्धर्णसिस्सदः ॥ २¶ ॥

---

* 'धनानीत्यनुषज्यते'—इति वि०।

† ऐ० आ० ६, १, २, ४ (२भा प्र० ऋ० वे० ६, ७, १८, १।

‡ 'देवानां भक्तभूतः'—इति वि०।

¶ ऋ० वे० ६, ७, १८, २।

हे "इन्दो" सोम ! "वृषा" सेवकाभीष्टदाता वर्षकः "द्युम्नवत्तमः" यशस्वितमः "धर्णसि" धर्त्ता त्वं "महो" महत् "स्वरः" पानीयम् "अन्धः" अन्नम् "आवच्यस्व" अस्मान् प्रति आगमय किञ्च "योनिं" स्वकीयं स्थानम्* "आसदः" आसीद च ॥ २ ॥

अथ तृतीया ।

१ २    ३ २उ ३ १ २ ३ १ २ ३ १ २
अधुक्षतप्रियम्मधुधारासुतस्यवेधसः ।
३ १ २    ३ १ २
अपोवसिष्टसुक्रतुः ॥ ३† ॥

"सुतस्य" अभिषुतस्य "वेधसः" अभिलषितस्य विधातुर्यस्य "सोमस्य" "धारा" "प्रियं" प्रीतिकरं "मधु" अमृतम् "अधुक्षत" दुग्धे स "सुक्रतुः" सुकर्मा सोमः "अपः" "वसतीवरीः" "वसिष्ट" आच्छादयति ॥ ३ ॥

अथ चतुर्थी ।

३ १ २    ३ १र    २र    ३ १ २
महान्तन्त्वामहीरन्वापोअर्षन्तिसिन्धवः ।
१र   २र    ३ १ २
यद्गोभिर्वासयिष्यसे ॥ ४‡ ॥

हे सोम ! त्वं "यद्" यदा यज्ञे, "गोभिः" गोर्विकारैः पयोभिः "वासयिष्यसे" आच्छादयिष्यसे तदा "महान्तं" गुणैः

---

* 'योनिं द्रोणकलशम्'—इति वि० ।

† ऋ० वे० ६, ७, १८, ३ ।

‡ ऋ० वे० ६, ७, १८, ४ ।

प्रवृद्ध "त्वा अनु" त्वामनु "सिन्धवः" स्यन्दमाना: "मही:" महत्यः "आप:" "अर्षन्ति" गच्छन्ति ॥ ४ ॥

अथ पञ्चमी।

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १
समुद्रोअप्सुमामृजेविष्टम्भोधरुणोदिवः।

१ २ ३ १ २ ३ २
सोमःपवित्रेअस्मयुः॥ ५* ॥

"समुद्रः" समुद्रवन्ति अस्माद्रसाइति समुद्रः "विष्टम्भ:" "दिवः" स्वर्गस्य "धरुणः" धर्त्ता च "अस्मयुः" अस्मत्-कामः† "सोमः" "अप्सु" उदकेषु "मामृजे" मर्मृज्यते पवित्रेऽभिषिच्यते चेत्यर्थः ॥ ५ ॥

अथ षष्ठी।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अचिक्रदद्वृषाहरिर्म्महान्मित्रोनदर्शतः।

१२ १२
सꣳसूर्येणदिद्युते ॥ ६‡ ॥

"वृषा" कामानां वर्षकः "हरिः" हरितवर्णः "महान्" सर्वोत्तमः "मित्रः न" यथा सखा तद्वत् "दर्शतः" दर्शनीयः यः सोमः "अचिक्रदत्" शब्दं करोति सोऽयं सोमः सूर्येण सह "सन्दिद्युते" समित्येकीभावे सूर्येण सह द्योततइत्यर्थः ॥

"रोचते"—इति बह्वृचानां पाठः ॥ ६ ॥

---

* छ० आ० ६, १, २, १ (२ भा० ५५ पृ० )=ऋ० वे० ६, ७, १८, ५।

† 'अस्मासु भक्तमिच्छुः'—इति वि०।

‡ ऋ० वे० ६, ७, १९, १।

अथ सप्तमी।

२ ३१२ ३१२ ३१२
गिरस्तइन्द्रओजसामर्मृज्यन्तेअपस्युवः।
२ ३१२३१२
याभिर्म्मदायशुम्भसे॥ ७* ॥

हे "इन्द्रो!" "ते" तव "ओजसा" बलेन "अपस्युवः" कर्मेच्छा-सम्बन्धिन्यः ताः "गिरः" स्तुतयः "मर्मृज्यन्त" शोध्यन्ते। "याभिः" "गीर्भिः" त्वं मदाय "चरन्" "शुम्भसे" अलङ्क्रियसे† ॥ ७ ॥

अथ अष्टमी।

२३ १ २३११ ३१२
तन्त्वामदायघृष्वयउलोककृत्नुमीमहे।
२३१२ ३२
तवप्रशस्तयेमहे॥ ८‡ ॥

"लोककृत्नु" लोकस्य कर्त्तारं "तं त्वा" सोम "घृष्वये" शत्रूणां घर्षण-शीलाय¶ "मदाय" "ईमहे" याचामहे। हे सोम! पातमिति शेषः। किमर्थम्? इति, उच्यते— "तव" "महे" महते "प्रशस्तये" प्रशंसनाय॥ ८ ॥

* ऋ० वे० ६, ७, १९, २।

† 'शुम्भसे शोभसे'—इति वि०।

‡ ऋ० वे० ६, ७, १९, ३।

¶ 'घृष्वये—अभिभवार्थम्'—इति वि०।

अथ नवमी।

३ १ २ ३ १ २ १ १ १ २ २ ३ १
गोषाइन्दोनृषाअस्यश्वसावाजसाउत।
३ २ ३ १ २ ३ १
आत्मायज्ञस्यपूर्व्यः॥ ९* ॥

हे "इन्दो" क्रियमान-सोम! "यज्ञस्य" ज्योतिष्टोमादेः "पूर्व्यः" पुराणः नित्यः आत्मा स्वरूपभूतः [ सोमस्य यज्ञस्वरूपत्वं प्रसिद्धम् ]। तादृशस्त्वं "गोषा" अस्मभ्यं गवां दाता "असि" भवसि, "नृषा" नृणां पुत्र-भृत्यादीनां दातासि, "अश्वसाः" अश्वानां दाता चासि, "उत" अपिच "वाजसा" अन्नानां दाता चासि॥ ९॥

अथ दशमी।

३ १ २ ३ १र २र ३ १ २
अस्मभ्यमिन्दविन्द्रियम्मधोःपवस्वधारया।
३ १ २ ३ १ २
पर्ज्जन्योवृष्टिमाँइव॥ १०† ॥ ३

हे "इन्दो" सोम! "इन्द्रियम्" इन्द्रेण जुष्टम् इन्द्रियस्य वीर्यस्य वा वर्द्धकं रसं "मधोः मदकरस्य अमृतस्य "धारया" "पर्जन्योवृष्टिमाँइव" यथा वर्षवान् पर्जन्यो मेघः तथा "अस्मभ्य" मेधातिथिभ्यः "पवस्व" चर॥ १०॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य प्रथमः खण्डः॥ १॥ ३

---

* ऋ० वे० ६, ७, १९, ५।

† ऋ० वे० ६, ७, १९, ४।

अथ द्वितीय-खण्डे—

सनाचेति-दशर्च्चे प्रथमे सूक्ते, प्रथमा ।

१ २　२ १ २ ३ १ २　३ २ ३ १ २
सनाचसोमजेषिचपवमानमहिश्रवः ।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ १* ॥

हे "महिश्रवः" महदन्न ! "पवमान" सोम ! "सन"† अस्मद्यागे यजनीयान् देवान् भज "जेषि च" याग-विघ्नकारिणो राक्षसांश्च जय । "अथ" देवान् प्राप्य राक्षसांश्च जित्वा अनन्तरं "नः" अस्मान् "वस्यसः" श्रेयसः‡ "कृधि" कुरु श्रेयोऽस्मभ्यं देहीत्यर्थः ॥ १ ॥

अथ द्वितीया ।

२ ३ २ ३ २३ २　१ २　३ १ २
सनाज्योतिःसनास्वाऽ३ऽर्विश्वाचसोमसौभगा ।
१ २ ३ २ २
अथानोवस्यसस्कृधि ॥ २¶ ॥

हे सोम ! त्वं "ज्योतिः" तेजः "सन" अस्मभ्यं प्रयच्छ । अपिच "स्वः" स्वर्गं "सन" अस्मभ्यं देहि । "विश्वा" विश्वानि "सौभगा" सौभाग्यानि "च" सन सिद्धमन्यत् ॥ २ ॥

---

* ऋ० वे० ६, ७, २२, १ ।

† 'सना-शब्दः सदावाची । सदा जेषि च भवन्'—इति वि० । सायण-मते तु 'सना'—इति क्रियापदम् "द्व्यचोऽतस्तिङः (६, ३, १३५) "—इति दीर्घः । विवरणकार-मते तु सना सदार्थमव्ययमिति "निपातस्य च (६, ३, १३६)" —इति दीर्घः । मूले सर्वत्रैव दीर्घान्तः, व्याख्यानकाले त्वयथायथं ह्रस्वान्त-प्रतीकमेव गृह्यते ; इयमेव शैलिरस्य व्याख्यातुः सर्वत्रेति बोध्यम् ।

‡ 'वस्यसः—वसनीयः'—इति वि० ।

¶ ऋ० वे० ६, ७, २२, २ ।

अथ तृतीया।

२ ३ १ २३ १२उ ३ १२ ३१२
सनादक्षसुतक्रतुमपसोममृधोजहि।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ३† ॥

हे सोम! त्वं "दक्षं" बलं "सन" अस्मभ्यं देहि, "उत" अपिच "क्रतुं यज्ञं" सन, "मृधः" हिंसकान् शत्रूंश्च "अप जहि" मारय। सिद्धमन्यत्॥ ३॥

अथ चतुर्थी।

१ २ ३ २ ३१२ ३ १ २ ३१२
पवीतारःपुनीतनसोममिन्द्रायपातवे।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ४‡ ॥

हे "पवीतारः" सोमस्य शोधयितार ऋत्विजः! "सोमं" "पुनीतन" पावयत दशापवित्रेण शोधयत किमर्थम्? "इन्द्राय पातवे" इन्द्रस्य पानाय। गतमन्यत्॥ ४॥

---

† ऋ० वे० ६, ७, १९, ३।

‡ ऋ० वे० ६, ७, २२, ४।

अथ पञ्चमी।

१२ १२३१ २ ३१ २३१ २ ३ १ २
त्वᳪसूर्येनआभजतवक्रत्वातवोतिभिः।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ५* ॥

हे सोम! त्वं "तव क्रत्वा तव ऊतिभिः" त्वत्कर्तृकाभी रक्षाभिश्च "नः" अस्मान् "सूर्यं" "आ भज" प्रापय। सिद्ध-मन्यत्॥ ५॥

अथ षष्ठी।

२ ३ १ २ २ ३१ २ ३ १ २
तवक्रत्वातवोतिभिर्ज्योक्पश्येमसूर्यम्।
१ २ ३ १
अथानोवस्यसस्कृधि॥ ६† ॥

हे सोम! "तव" "क्रत्वा" प्रज्ञानेन "तव ऊतिभिः" पालनैश्च "ज्योक्" चिरं पश्येम सूर्यं पश्याम द्रक्ष्यामः। सिद्धमन्यत्॥ ६॥

अथ सप्तमी।

३क २र ३१ २ ३१ २ ३ २
अभ्यर्षस्वायुधसोमद्विबर्हसᳪरयिम्।
१ २ ३ १ २
अथानोवस्यसस्कृधिः॥ ७॥

हे "स्वायुध" शोभनायुध सोम! त्वं "द्विबर्हसं" द्वयोर्द्यावा पृथिव्योः स्थानयोः परिवृढं "रयिं" धनम "अभ्यर्ष" स्तोतॄन् अभिगमय। सिद्धमन्यत्॥ ७॥

---

* ऋ० वे० ६, ७, २२, ५।

† ऋ० वे० ६, ७, २३, १।

‡ ऋ० वे० ६, ७, २३, २।

अथाष्टमी।

२ २ १ २ ३ १ २ ३ १ २ ३ २
अभ्या३ऽ३ऽर्षानपच्युतोवाजिन्त्समत्सुसासहिः।
१ २ ३र १ २
अथानोवस्यसस्कृधि ॥ ८* ॥

हे सोम! "समत्सु" सङ्ग्रामेषु "अनपच्युतः शत्रुभिरनाहतः "सासहिः" शत्रूणामभिभविता† त्वम् "अभ्यर्ष" अभिगच्छ चर। गतमन्यत् ॥ ८ ॥

अथ नवमी।

२ ३ १ २ ३ १ २ ३ १ २
त्वांयज्ञैरवीवृधन्पवमानविधर्मणि।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ ९‡ ॥

हे "पवमान" शोध्यमान सोम! त्वां "विधर्मणि" विविधफलस्य धारके यज्ञे "यज्ञैः" यज्ञ-साधनैः "स्तोत्रैः" "अवीवृधन्" यजमाना वर्द्धयन्ति। गतमन्यत् ॥ ९ ॥

अथ दशमी।

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
रयिन्नश्चित्रमश्विनमिन्दोविश्वायुमाभर।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ १०¶ ॥ ४

---

* ऋ० वे० ९, ७, २३, ३।

† 'सासहिःसाधनस्वभावः'—इति वि०।

‡ ऋ० वे० ९, ७, २३, ४।

¶ ऋ० वे० ९, ७, २३, ५।

हे "इन्दो !" यागेषु क्रियमाण सोम ! त्वं "चित्रं" नानाविधम् "अश्विनम्" अश्ववन्तञ्च "विश्वायु" सर्वगामिनं* "रयिं" धनं "नः" अस्मभ्यम् "आ भर" आहर । गतमन्यत् ॥ १० ॥ ४

तरत्समन्दीति चतुर्ऋचे द्वितीयसूक्ते—

प्रथमा† ।

२ ३ २ ३ १ २　३ १ २ ३१र २र
तरत्समन्दीधावतिधारासुतस्यान्धसः ।

१ २ २ ३ १ २
तरत्समन्दीधावति ॥ १‡ ॥

"मन्दी" देवानां हर्षकरः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" दशापवित्रादधः क्षरति । तदेव दर्शयति—"सुतस्य" अभिषुतस्य "अन्धसः" देवानामन्नात्मकस्य सोमस्य धारा धावतीति । पुनरपि तदेवादात्यन्तादरार्थं "तरत्समन्दीधावति"—इति¶ ॥ [यद्वास्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः, तद्यथा—"तरति स पापं सर्वं मन्दीयं स्तौति धावति गच्छत्यूर्द्ध्वां गतिं धारासुतस्यान्धसोधाराभिषुतस्य सोमस्य मन्त्रपूतस्य वाचास्तुतस्य (निरु०१३,६)"—इति ॥ २ ॥

---

* 'विश्वायुं—दीर्घायुष्येण सह आभर'—इति वि० ।

† 'तरत्समन्दीधावतीति-चतुर्ऋचः छन्दसिकाभाष्ये विस्तरेणोक्ताः, सप्रयोजनं तथाप्यत्र सङ्क्षेपेणोच्यते'—इति वि० ।

‡ छ० आ० ६, १, २, ४ (२भा० ५८पृ०)=ऋ० वे० ७, १, १५, १ ।

¶ 'तरत्सः—तरति स पापं यस्य मन्दी धावति ओमस्य । सोमस्य धारा वर्त्मना सुतस्याभिषुतस्य अन्धसोऽन्नस्य सोम-लक्षणस्य'—इति वि० ।

अथ द्वितीया।

३१ २३१२३१ २ ३१२

उस्रावेदवसूनांमर्त्तस्यदेव्यवसः।

२३२ ३१ २

तरत्समन्दीधावति॥ २*॥

"वसूनां" धनानाम् "उस्रा" उत्सरणशीला प्रदात्री "देवी" द्योतमाना स्तूयमाना वा यस्य सोमस्य धारा "मर्त्तस्य" मनुष्यं यजमानम् "अवसः" रक्षितुं "वेद" जानाति†। सिद्धमन्यत्॥ २॥

अथ तृतीया।

३१२ ३१२ २३१२

ध्वस्रयोःपुरुषन्त्योरासहस्राणिदद्महे।

२३२ ३१ २

तरत्समन्दीधावति॥ ३‡॥

"ध्वस्रयोः पुरुषन्त्योः"¶ ध्वस्रः कश्चिद्राजा तथा पुरुषन्तिश्च, तयोरुभयोरत्र तद्योग-विवक्षया द्विवचनं द्रष्टव्यं "सहस्राणि" धनानां सहस्राणि "आ दद्महे" वयं प्रतिगृह्णीमः। तदस्माभिः प्रतिगृहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयत इति सोमस्य स्तुतिः। सिद्धमन्यत् यथावत्सार एतयोर्दानानि

---

* ऋ० वे० ७, १, १५, २।

† 'उस्रा दीप्ता वेद वसूनां, विद ज्ञाने, विद्लृ लाभे, विद सत्तायाम्, सर्वथा धारा'—इति वि०।

‡ ऋ० वे० ७, १, १४, ३।

¶ 'ध्वस्रयोः पुरुषन्त्योः—समान स्वभावयोः सोम-धारयोरपि द्रोणकलशेन सह सम्बध्यमानयोः पापध्वंसकरयोः'—इति वि०।

प्रतिजग्राह एवं तरन्त-पुरुमीढौ प्रतिजगृहतुः। तथाच शाट्यायनकम्—'अथ ह वै तरन्त-पुरुमीढौ वैदश्वौ ध्वस्रयोः पुरुषन्त्योः बहु प्रतिगृह्य गरगिराविव मेनाते तौ ह स्माङ्गुल्या सातं प्रतिमृशाते तावकामयेतामसातन्नाविवेद सातंस्यादात्त मिवैव न प्रतिगृहीत मिति भावे तच्चतुर्ऋचमपश्यतान्तरेण प्रत्यैतां तयोर्वैतयोरसातंसातमभवदात्तमिवैव न प्रतिगृहीतं स यः प्रतिगृह्य कामयेत"—इत्यादि ॥ ३ ॥

अथ चतुर्थी।

१र २र ३ २ ३ १ २ ३ १ २ ३ १ २
आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे।
१ २ ३ २ ३ १ २
तरत्स मन्दी धावति ॥ ४* ॥ ५

"ययोः" ध्वस्र-पुरुषन्त्योः "त्रिंशतं" त्रीणि शतानि सहस्राणि च, "तना" वस्त्राणि "आ दद्महे" वयं "प्रतिगृह्णीमः" तयोरस्माभिः प्रतिगृहीतं तत् सर्वम् अप्रतिगृहीतमस्त्विति सोमम् ऋषिः प्रार्थयतइति सोमस्यैव स्तुतिः। गतमन्यत् ॥४॥ ५

एतेसोमाइति त्र्यृचं तृतीयं सूक्तम्—

तत्र, प्रथमा।

३ १र २र ३ २र २र ३ २
एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन्।
३ १ २ ३ १ २
वर्धन्तो अस्य वीर्यम् ॥ १† ॥

---

* ऋ० सं० ७, १, १४, ४।

† ऋ० सं० ७, १, २८, १।

"मदिन्तमस्य" देवानां मादयितृतमस्य रसस्य सम्बन्धिन एते सोमा अभिषुताः सन्तः "गृणानाः" स्तूयमानाः "महे" महते "अवसे" अस्माकं बलाय धारया "अक्षरन्" गच्छन्ति ॥१॥

अथ द्वितीया ।

अभिगव्यानिवीतयेनृम्णापुनानोअर्षसि ।

सनद्वाजःपरिस्रव ॥ २* ॥

हे सोम ! "वीतये" देवानां †क्षणाय नृम्णा" नृम्णानि धनवत् प्रियतराणि "गव्यानि" गो-सम्बन्धीनि क्षीरादीनि "पुनानः" पूयमानः सन् "अभ्यर्षसि" अभिगच्छसि । हे सोम ! "सनद्वाजः" दीयमानान्नः‡ त्वं "परि" परितः "स्रव" दशा-पवित्रादधः क्षर ॥ २ ॥

अथ तृतीया ।

उतनोगोमतीरिषोविश्वाअर्षपरिष्टुभः ।

गृणानोजमदग्निना ॥ ३¶ ॥ ६

* ऋ० वे० ७, १, २८, २ ।

† 'नृम्णा बलेन'—इति वि० ।

‡ 'सनत् सदा'—इति वि० ।

¶ ऋ० वे० ७, १, २८, ४ ।

"उत" अपिच हे सोम ! "जमदग्निना" जमदग्नि-नाम्ना ऋषिणा मया "गृणानः" स्तूयमानः त्वं "नः" अस्माकं "गोमतीः" गोभिर्युक्तानि "परिष्टुभः" परितः स्तोतव्यानि* सर्वाणि "इषः" अन्नानि देहीत्यर्थः ॥ ३ ॥†

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य द्वितीयः खण्डः† ॥ २ ॥

---

इमंस्तोममिति-तृतीयखण्डे‡—

प्रथम-तृचे,¶ प्रथमा ।

२ ३उ    ३ १ २    ३ १ २    ३
इमꣳस्तोममर्हतेजातवेदसे

१ २    ३ १ २    ३ १ २
रथमिवसम्महेमामनीषया ।

३ २उ    ३ १ २    ३ १र
भद्राहिनःप्रमतिरस्यसꣳस

२र ३ १र    २र    ३१र    २र
द्यग्नेसख्येमारिषामावयन्तव ॥ १§ ॥

"अर्हते" पूज्याय "जातवेदसे" जातानामुत्पन्नानां वेदित्रे, जात-प्रज्ञाय जात-धनाय वा अग्नये "मनीषया" निशितया

---

* 'परिष्टुभः—परि समन्तात् स्तौति'—इति वि० ।

† 'उक्तं वक्ष्यमाणम्'—इति वि० ।

‡ 'सप्तर्चं शस्त्रोमः सप्तमः'—इति वि० ।

¶ 'आग्नेयमाज्यम्'—इति वि० ।

§ ऋ० सा० १, ९, २, ४ (१भा १०३पृ०)=ऋ० सं० १, ६, २०, १ ।

बुद्धा "इमम्" एतत्स्तुतिरूपं स्तोमं रथमिव यथा तक्षा रथं संस्क-रोति तथा "सम्महेम" सम्यक् पूजितं कुर्मः। तस्याग्नेः "संसदि" सम्भजने "नः" अस्माकं "प्रमतिः" प्रकृष्टा बुद्धिः "भद्रा हि" कल्याणी समर्था खलु अतस्तया बुद्धा स्तुम इत्यर्थः। हे "अग्ने" "तव सख्ये" अस्माकं त्वया सह सखित्वे सति वयं "मारिषाम" हिंसिता न भवामः अस्मान् रक्षेत्यर्थः। [ "अर्हते"—अर्ह पूजा-याम् ( भ्वा० प० ) "अर्हः प्रशंसायामिति ( ३,२,१३३) लटः शत्रादेशः, शपः पित्त्वादनुदात्तत्वम् ( ३,१,४), शतुश्चादुपदेशा-ल्लसार्वधातुक-स्वरेणाद्युदात्तत्वम् (६,१,१८६)। महे—मह पूजायाम् ( भ्वा० प० )। रिषाम—रिष हिंसायां (भ्वा०प० ) व्यत्ययेन शः(३,१, ८५)। तव—"युष्मदस्मदोर्ङसि (६,१,२११)" —इत्याद्युदात्तत्वम ॥१॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २
भरामेध्मङ्कृणवामाहवीᳪंषिते

३ १ २ ३ १ २ ३ २
चितयन्तःपर्वणापर्वणावयम्।

३ १ २ ३ १ २ ३ १
जीवातवेप्रतराᳪंसाधयाधियो

२र ३ १र २र ३ १र २र
ग्नेसख्येमारिषामावयन्तव ॥ २* ॥

हे "अग्ने!" त्वद्यागार्थम् "इध्मम्" इन्धन-साधनम् एक-विंशति-द्रव्यात्मकं समित्समूहं "भराम" सम्भराम सम्पादयाम,

* ऋ० वे० १, ६, ३०, ४।

तदम् "ते" तुभ्य' "हवींषि चरुपुरोडाशादि-लक्षणान्यन्नानि वयं "कृणवाम" करवाम। किङ्कुर्वतः? "पर्वणा पर्वणा"* प्रतिपच्च-मावृत्ताभ्यां दर्शपूर्णमासाभ्यां "चितयन्तः" त्वां प्रज्ञापयन्तः स त्वं "जीवातवे" अस्माकं जीवनौषधाय चिरकालावस्थानाय "धियः" कर्माणि अग्निहोत्रादीनि "प्रतरां" प्रकृष्टतरं "साधय" निष्पादय। अन्यत् समानम्॥ [चितयन्तः—चिती सञ्ज्ञाने (भ्वा० प०) सञ्ज्ञापूर्वस्य विधेरनित्यत्वात् लघूपध-गुणाभावः। पर्वणा—"नित्यवीप्सयोः (८, १, ४)"—इति वीप्सायां द्विर्भावः, "तस्य परमाम्रेडितम् (८,१,२)"—इति परस्याम्रेडित-सञ्-ज्ञायाम् अनुदात्तत्वम् (८, १ १९)। प्रतरां—तरबन्तात् प्रशब्दात् क्रिया-प्रकर्षे वर्त्तमानात् "किमेत्तिङव्ययघादाम्वद्रव्ये (५, ४, ११)"—इत्यामु-प्रत्ययः॥ २॥

अथ तृतीया।

० १ २ ३ १ २ ३ २ ३ १ ३
शकेमत्वासमिधꣳसाधयाधिय

२ ३ १ २ ३ १ २ ३ १ २
स्त्वेदेवाहविरदन्त्याहुतम्।

१ २ ३ १ र २र ३ १ १र
त्वमादित्याꣳआवहतान्ह्यु३स्म

२र ३ १र २र ३ १र २र
स्यग्नेसख्येमारिषामावयन्तव॥ ३†॥ ७

---

* 'पर्वणा—तृतीयैकवचनमिदं सप्तम्येकवचनस्य स्थाने द्रष्टव्यम्, पर्वणि भूयान् समर्थः'—इति वि०।

† ऋ० वे० १, ६, ३०, ३।

हे अग्ने ! "त्वा" त्वां "समिधं" सम्यगिद्धं कर्त्तुं "शकेम" शक्ता भूयास्म । त्वञ्च "धियः"* अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि "साधय" निष्पादय त्वया हि सर्वं निष्पद्यन्ते यस्मात् "त्वे" त्वयि अग्नावाहुतम् ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं हविः देवा "अदन्ति" भक्षयन्ति, तस्मात्त्वं साधयेत्यर्थः । अपि च त्वम् "आदित्यान्" अदितेः पुत्रान् सर्वान् देवान् "आवह" अस्मद् यज्ञार्थमानय । तान् हि इदानीं वयम् "उश्मसि" कामयामहे । अन्यत् पूर्ववत् ॥ [ शकेम—शक्लृ शक्तौ (भ्वा० प०), "लिङ्याशिष्यङ्( ३,१,८६ ), अदुपदेशाल्लसार्वधातुकानुदात्तत्वे ( ६, १, १८६ ) अङ एव स्वरः शिष्यते । समिधम्—ञि इन्धी दीप्तौ ( रु० आ० ) अस्मात् सम्पदादिलक्षण कर्मणि क्विप् । त्वे—सुपांसुलुगिति ( ७, १, ३९ ) सप्तम्येकवचनस्य शे-आदेशः । उश्मसि—वश कान्तौ ( अदा० प० ), "इदन्तोमसि ( ७, १, ४६, ), अदादित्वाच्छपोलुक् ( २, ४, ७२ ), ग्रहिज्येत्यादिना सम्प्रसारणम् ( ६, १, १६ ) ॥ ३ ॥ ७

१ १ १ २ १ १ २र र १ २ १ १

॥ समन्तम् ॥ इम७स्तोममर्हतेजातवेदसायि । रथ

२ २ २ २ १ १ १

मिवसम्महेमामनीषया । भद्राह्यार२३यिनाः । प्रामतिर

१ १ २ २र १ १ १ २ २र १र १ २

स्यस७स । द्युम्नायि ॥(१) भरामेध्मङ्कृणवामाहवी७षिता

* "धीः"—इति कर्मनामसु एकविंशतितमं नैघण्टुकम् ( २, १ ) ।

यि। चितयन्तःपर्वणापर्वणावयाम्। जीवातार२३वायि।
प्रातराᳬसाधयाधि। योग्नायि ॥(२)/ शकेमत्वासमिधᳬ
साधयाधियाः। त्वेदेवाहविरदन्त्याहुताम्। तुवमार२३
टी। त्वाᳬआवहतान्ह्युश्म। स्यग्नायिसाख्यो। औ
होऽ३४वाहायि। मा। रायिषार२३मा२। होवा३हायि।
वयन्तार२३वा३४३। ओ२३४५ई। डा(३) ॥ १५* ॥ ७

अथ द्वितीय-तृचे—

प्रथमा।

प्रतिवाᳬसूरउदितेमित्रङ्गृणीषेवरुणम्।
अर्यमणᳬरिशादसम् ॥ १† ॥

हे मित्रावरुणौ! "मित्र" त्वां "वरुणं" च "वां" युवां "रिशादसं" शत्रूणामत्तारम् "अर्यमणं" च "प्रति" प्रत्येकं "गृणीषे"

* ऊ० गा० १७ प्र० १ खा० १५ सा०।
† ऋ० वे० ५, ५, ९, २।

स्तुवे। कदा? इति, उच्यते—"सूरे" सूर्ये देवे "उदिते" सति प्रातरित्यर्थः॥ १॥

अथ द्वितीया।

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
राया हिरण्यया मतिरियमवृकाय शवसे।
३ १ १ २ र ३ १ २
इयं विप्रा मेधसातये॥ २ *॥

"हिरण्यया" हित-रमणीयेन "राया" धनेन सहितया "अवृकाय" अहिंस्राय "शवसे" अस्माकं बलाय "इयम्" इदानीं क्रियमाणा "मतिः" स्तुतिर्भवत्विति शेषः॥ [ हिरण्यया—इत्यत्र सुपां सुलुगिति ( ७,१,३९ ) तृतीयैकवचनस्य याजादेशः ] किञ्च हे "विप्राः" प्रज्ञाः! "इयम्" एव स्तुतिः "मेधसातये" यज्ञ-लाभाय† च भवतु॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ २
ते स्याम देव वरुण ते मित्र सूरिभिः सह।
३ २क २र
इषꣳ स्वश्च धीमहि॥ ३ ‡॥ ८

हे "देव वरुण!" "ते" वयं तव स्तोतारः "स्याम" समृद्धा भवेम। न केवलं वयमेव यजमानाः किन्तु "सूरिभिः"

* ऋ० वे० ५, ५, ९, ३।

† 'विप्राः—ऋत्विजः, मेधसातये—मेधालाभार्थम्'—इति वि०।

‡ ऋ० वे० ५, ५, ९, ४।

स्तोतृभिः ऋत्विग्भिः सह ; तथा हे "मित्र" देव ! "ते" वयं "सूरिभिः" सह "स्याम" भवेम । किञ्च "इषम्" अन्नं "स्वश्च" तद्वकञ्च "धीमहि" धारयामहे* ॥ ३ ॥ ८/

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

३ २उ ३ २ ३ २ ३ २ ३१ २ ३ १ २र
भिन्धिविश्वाअपद्विषःपरिबाधोजहीमृधः ।
१ २ ३ १र २र
वसुस्पार्हन्तदाभर ॥ १ † ॥

हे इन्द्र ! त्वं "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः शत्रुसेनाः "अप भिन्धि" विदारय । तथा "बाधः" हिंसकान् "मृधः" सङ्ग्रामान् त्वं "परि जहि" परिभावय । हे सोम वासकेन्द्र ! "स्पार्हं" स्पृहणीयं द्वेष्ट्रीणां "वसु" धनं यदस्ति "तत्" "आभर" ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३१र २र ३ १ ३ १ २
यस्यतेविश्वमानुषग्भूरेर्दत्तस्यवेदति ।
१ २ ३ १र २र
वसुस्पार्हन्तदाभर ॥ २ ‡ ॥

हे इन्द्र ! "ते" त्वां [ विभक्ति-व्यत्ययः (३,१,८५) ] "दत्तस्य" दत्तं "भूरि" बहु "यस्य" गत् धनम्. [ सर्वत्र कर्म्मणि षष्ठी वेदि-

* 'स्वः—स्वर्गलोकम्, धीमहि—चिन्तयामः'—इति वि० ।

† छ० आ० २, १, ४, १० ( १भा० ३१६ पृ० )=ऋ० वे० ६, ३, ४९, ४ ।

‡ ऋ० वे० ६, ३, ४९, ५ ।

तव्या ] "विश्व" सर्वं तद्धनम् "आनुषक्"—इति आनुपूर्व्या* सततं सर्वो मनुष्यो "वेदति" जानाति तत् "स्पार्हं" स्पृहणीयं "वसु" "आभर" ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ २ ३१र २र ३१ २
यद्वीडाविन्द्रयत्स्थिरेयत्पर्शानिपराभृतम्।
१ २ १ १र २र
वसुस्पार्हन्तदाभर ॥ ३ † ॥ ९

हे "इन्द्र !" त्वया च "वीडौ" दृढे परैः कम्पयितुमशक्ये "यत्" धनं "पराभृतं" विन्यस्तं, "यत्" च "स्थिरे" स्वयमचले पराभृतं, "यत्" च "विपर्शाने" विमर्शन-क्षमे पराभृतं, तत् "स्पार्हं" स्पृहणीयं "वसु" "आ भर" आहर ॥ ३ ॥ ९

अथ तृचात्मकं चतुर्थं सूक्तम्—

तत्र, प्रथमा।

३ २ ३ २उ ३ १ ३ १ ३ १ ३१ १ २
यज्ञस्यहिस्थऋत्विजासस्नीवाजेषुकर्मसु।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ १ ‡ ॥

* "आनुषगिति नामानुपूर्वस्यानुषक्तं भवति, स्तृणन्ति बर्हिरानुषगित्यपि निगमो भवति"—इति निरु० नै० ६, १४।

† छ० आ० ३, १, २, ४ (१भा० ४४० पृ०)=ऋ० वे० ६, ३, ४९, ६।

‡ ऋ० वे० ६, ३, १०, १।

हे "इन्द्राग्नी !" युवां "यज्ञस्य" ज्योतिष्टोमादेः "ऋत्विजा स्थः" ऋत्विजौः ऋतौ काले काले यष्टव्यौ भवथः। अतो "वाजेषु" सङ्ग्रामेषु कर्मसु यज्ञात्मकेषु च, "सस्नी" संस्नातौ शुद्धौ सन्तौ* "तस्य" तं मां हे इन्द्राग्नी ! बोधतम् अथवा तस्य मम† स्तुतिं जानीतम् ॥ १ ॥

अथ द्वितीया।

२ १ २ ३ १ २ ३ १ २र
तोशासारथयावानावृत्रहणापराजिता।
१ २ ३ १ १
इन्द्राग्नीतस्यबोधतम् ॥ २ ‡ ॥

हे "इन्द्राग्नी !" "तोशासा"¶ शत्रून् हिंसन्तौ, "रथयावाना" रथेन गच्छन्तौ, "वृत्रहणा" वृत्रस्य हन्तारौ "अपराजिता" केनाप्यपराजितौ "तस्य" तं मां "बोधतम्" ॥ २ ॥

अथ तृतीया।

२ १ २ ३ १र २र ३ १ २ ३ १ २
इदंवाम्मदिरम्मध्वधुक्षन्नद्रिभिर्नरः।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ ३ § ॥ १०

* 'सस्नी—साधन-स्वभावः'—इति वि०।

† 'तस्य—यजमानस्य'—इति वि०।

‡ ऋ० वे० ६, ३, २०, २।

¶ 'तोशासा—दीप्ति-सम्पन्नौ'—इति वि०।

§ ऋ० वे० ६, ३, २०, ३।

हे "इन्द्राग्नी!" "वां" युवाम् उद्दिश्य "नरः" यज्ञस्य नेतारः "अद्रिभिः" ग्रावभिः "मदिरं" मदकरं "मधु" सोमात्मकम् अमृतम् "अक्षन्" अपूरयन्। सिद्धमन्यत्॥ ३॥ १०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य तृतीयः खण्डः*॥ ३॥

---

अथेन्द्रायेन्दोमरुत्वतइति-चतुर्थखण्डे†—

तृचात्मके प्रथम-सूक्ते‡ प्रथमा।

१ २ ३ १ २ ३ १ २ ३ ९
इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः।
३ १ ३ १ २ ३ १ २
अर्कस्ययोनिमासदम्॥ १ ¶॥

हे "इन्दो" सोम! "मधुमत्तमः" अतिशयेन मधुमान् त्वम् "अर्कस्य" अर्चनीयस्य यज्ञस्य "योनिम्" स्थानम् "आसदम्" उपवेष्टुम् "मरुत्वते इन्द्राय" इन्द्रार्थम् "पवस्व" चर॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ २ ३ २
तन्त्वाविप्रावचोविदःपरिष्कृण्वन्तिधर्णसिम्।
१ २ ३ १२
सन्त्वामृजन्त्यायवः॥ २ §॥

---

* 'उक्तं प्रातःसवनम्'—इति वि०।

† 'इदानीं माध्यन्दिनं सवनमुच्यते'—इति वि०।

‡ 'इषोवृधीय-प्रभृतीनि सामानि, तेषां प्रकृतावार्षेयमुक्तम्'—इति वि०।

¶ छ० आ० ५, २, ४, ६ (२भा० १९ पृ०)=ऋ० वे० ७, १, ४०, १।

§ ऋ० वे० ७, १, ४०, २।

हे सोम! "तं" पवमानं "त्वा" त्वाम् "धर्णसिं" धर्त्तारं "विप्राः" प्राज्ञाः "वचोविदः" स्तोतारः* "परिष्कृण्वन्ति" अलङ्कुर्वन्ति†। अपि च "त्वा" त्वाम" "आयवः" मनुष्याः‡ "सम्मृजन्ति" सम्यक् शोधयन्ति ॥ २ ॥

अथ तृतीया।

१ २   ३ १ २ ३ १   २र ३ १ २
रसन्तेमित्रोअर्यमापिबन्तुवरुणःकवे।
१ २   ३ १ २
पवमानस्यमरुतः॥ ३ ¶ ॥ ११

हे "कवे" क्रान्तकर्मन् सोम! "पवमानस्य" चरतः "ते" तव रसं§ "मित्रः" "अर्यमा" च "वरुणः" च "मरुतः" च एते सर्वे देवाः "पिबन्तु" ॥ ३ ॥ ११

२ र र   १
॥ इषोवृधीयम् ॥ इन्द्रायेन्दाउ। मरुत्वतायि।
२ १   १   २ १   १ र
पवस्वामा२। धुमत्तमाः। अर्कस्यायो२। निमा।
१ ३ ५र र   २ र   र १
स्यार२दा२३४औहोवा ॥(१) तन्त्वाविप्राः। वचोविदाः।

* विप्रा वचोविदः—मेधाविनः ऋत्विजः'—इति वि०।

† 'परिष्कृण्वन्ति—परिचरन्ति'—इति वि०।

‡ 'आयवः"—इति मनुष्य-नामासु सप्तदशं नैघण्टुकम् (२, ३)।

¶ ऋ० वे० ७, १, ४०, ४।

§ 'रसं वीर्यम्'—इति वि०।

परिष्कारवर्वा२। निधर्णसायिम्। सन्त्वामाज्जा२। ति
ञा। यारवार३४ औहोवा ॥(२) रसन्तेमायि। त्रो
अर्यमा। पिबन्त्वरवा२। रुणःकवायि। पवमाना२।
स्यम। रूरता२३४औहोवा। इषोवृधे१(३) ॥ १८ * ॥ [१]

॥ गायत्रीक्रौञ्चम्॥ इन्द्रायेन्दा१औहो। मा३रु
त्वा२३४तायि। पावखामा। धूरम। ता२३४माः।
माः। पवखमधुमा३२। ता२३४माः। अर्कस्ययोना२
३यिम। अ। वाहायि। सा२३४दाम्। एहियाई
हा ॥(१) तन्त्वाविप्रा१ औहो। वा३। चो। वी२३४दाः।
पारिष्कारवर्वा। ता३यिधा। ग२३४सायिम्। परिष्क
एवन्तिधा३२। ण२३४सायिम्। सन्त्वामृजन्ता२३यि।
अ। वाहायि। या२३४वाः। एहियाईहा ॥(२) रस

* ऋ० मा० ३ प्र० १ श० १९ भा०।

न्तेमा१औहो। चो३अर्या२३४मा। पायिबन्तुवा। रू३णः।
का२३४वायि। पिवन्तुवरुणा३२ः। का२३४वायि। पव
मानस्या२३। म। बाहायि। रू२३४ताः। एह्रिया६
हा। हो५ई। डा(३)॥ २० *॥ [२]

॥ वाजदावदावयम्॥ इन्द्रायेन्दाउ। मरूरत्वा२३
४तायि। पवा२स्वा२३४मा। धमत्ता२माः। आ२३र्का।
स्या२यो। निमो२३४वा। सा५दो६हायि॥(१) तन्त्वा
विप्राः। वचो२वी२३४दाः। परा२यिष्का २ ३ ४ एर्वा।
तिधर्णा२सायिम्। सा२३न्त्वा। मा२र्जा। तियो२३४
वा। या५वो६हायि ॥(२) रसन्तेमायि। चो आ२र्या
२३४मा। पिबा२न्तू२३४वा। रुणःका२वायि। पा२३वा।
मा२ना। स्यमो२३४वा। रू५तों६हायि(३) ॥ २१ †॥[३]

* ऊ० गा० ३प्र० १अ० १०सा०।

† ऊ० गा० ३प्र० १अ० ११सा०।

॥ आश्वसूक्तम् ॥ आऔहोवाहायि। इन्द्रायेन्दा उ। मरु। त्वते। ऐहीयेहो१। पावस्वमधुमात्तमः। ऐहोयैहो१। आ२यि। आर्का२स्यायो२। निमा। सा२दा२३४औहोवा ॥(१) आऔहोवाहायि। तन्त्वा विप्राः। वचो। विदः। ऐहीयैहो१। पारिष्कृण्वन्ति धार्णसिम्। ऐहोयैहो१। आ२यि। सान्त्वा२मार्जा २। तिआ। या२वा२३४औहोवा ॥(२) आऔहोवा हायि। रसन्तेमायि। त्रोआ। र्यमा। ऐहोयहो१। पायिवन्तुवरुणाःकवे। ऐहोयैहो१। आ२यि। पावा २माना२। स्यम। रू२ता२३४औहोवा। प्रुक्रआङ् ता२३४५ः(३) ॥ ४ * ॥ [४]

॥ आमहीयवम् ॥ इन्द्रायाइयिन्दोमरुत्वतायि। पवा

---

* ऊ० गा० ८प्र० १अ० ४मा०।

२ १ २ १ २ १
स्वा१मा२। धुमा२३त्तमाः। अर्कस्ययो। निमा२३स

२ २र २ १ १ १ १
दा उ। वा३। स्तौषि३४५(१)॥ ४ *॥ [५]

२ १ २ २ १
॥ दार्ढच्युतम्॥ इन्द्रा। इहा। येन्दोमह२त्वता

२ १ १
यि। इहा। पवा। इहा। स्वमधुमा२त्तमाः। इ

२ १ २ १ २
हा। अर्का। इहा। स्ययोनिमा२सदाम्। इहा१॥(१)

२ १ २ १ २ १
तन्वा। इहा। विप्रावचो२विदाः। इहा। परायि।

१ २ १
इहा। कृण्वन्तिधा२र्णासायिम्। इहा। सन्वा। इ

१ २ २ १
हा। मृजन्तिआ२यवाः। इहा१॥(२) रसाम्। इ

२ २ १ २ १
हा। तेमित्रोआ२र्य्यमा। इहा। पिबा। इहा। तु

१ २ १ २
वरुणा२ःकवायि। इहा। पवा। इहा। मानस्यमा

१ २
२रुताः। इहा१(३)॥ १२ †॥ [६]

---

* ऋ० गा० १०प्र० २ख० ४सा०।

† ऊ० गा० १६प्र० १ख० १३मा०।

२ र र र र १ ०
॥ वारवन्तीयोत्तरम् ॥ इन्द्रायेन्दाऔहोहायि । मा

२ १ २ १ ५ २ १ २
रुत्वा२३४तायि । पवाश्वा२३४हायि । मधुमत्ता ३ ४ ।

३र ४र ५ १ ३ ५ २ २ ५ १ १ २
आहोवा । इहा२३४हायि । उड़वा२३४माः । अर्कस्य ।

१ ७ र २ ३र ४र ५ १ २ ५ ३र २
योनिमासा३४ । औहोवा । इहा२३४हायि । औहो

५र ५ २ र र र १
३१२३४ । दाम् । एहियाइहा ॥(१) तन्त्वाविप्राऔहो

२ २ ५ २ १ ५ १
हायि । वाचोवी२३४दाः । परायिष्का२३४हा । एवन्ति

१ ३र ४र ५ १ २ ५ २ २ ५
धर्णा३४ । औहोवा । इहा२३४हायि । उड़वा२३४सोम् ।

२ १ २ १ ० र २ ३र ४र ५ १ ३
सन्त्वामृ । जान्तिआया३४ । औहोवा । इहा २ ३ ४

५ ३र २ ५र ५ २
हायि । औहो३१२३४ । वाः । एहियाइहा ॥(२) रस

र र र १ २ ३ ५ २ १
न्तो मा । औहोहायि । चोअर्घ्या२३४मा । पिबात्२३

५ १ २ ३र ४र ५ १ ३ ५
४हायि । वरुणःका३४ । औहोवा । इहा२३४हायि ।

२ ३ ५ २ १ १ र १ ७ २ ३र ४र ५
उड़वा२३४वायि । पवमा । नास्यमरु ३४ । औहोवा ।

१ ३ ५ ३र २ ५र ५
इहा२३४हायि । औहो३१२३४ । नाः । एहियाइहा ।

४
हौं५ई । डा(३) ॥ १६ * ॥ [७]

१ २र १ र २र १ २ १
॥ इहवद्वामदेव्यम् ॥ तन्त्वा विप्रावचोविदः । इहा ।

१ २ १ र
परिष्कृण्वन्तिधर्णसा २यिम् । इहा । सन्त्वामृजन्ता २

१ २ १ ५ ५
यि । इहा३ । या२३४वो६हायि(२) ॥ १८ † ॥ [८]

२ र १ २ १ ३र
॥ मार्गीयवाद्यम् ॥ रसौहोवा । तेमा२यि । चो

२ ३ ५ १ २ १ २ १र
अर्या२३४मा । पिबन्तुव । रुणाःका१वा२यि । पव ।

२ २ ३ ५ १ ३ ५र र २
औ३हौयि । मा२३४ना । स्या२मा२३४औहोवा । ए३ ।

१ १ १ १ १
हुता२३४५ः(३) ॥ २० ‡ ॥ [९] ११

* ऊ० गा० २२प्र० २अ० १६सा० ।

† ऊ० गा० २२प्र० १अ० १८सा० ।

‡ ऊ० गा० २२प्र० १अ० २०सा० ।

मृज्यमानेति-प्रगाथात्मकं द्वितीयं सूक्तम्*—

तत्र प्रथमा ।

३ १ २ ३ १र २र
मृज्यमानःसुहस्त्यासमुद्रे वाचमिन्वसि ।
२ २ ३ १ २ ३ १ २र ३ २ ३ १ २ ३क २र
रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्पवमानाभ्यर्षसि ॥१†॥

हे "सुहस्त्या" [हस्ते भवा हस्त्या अङ्गुलयः] शोभनाङ्गुलिक सोम! "मृज्यमानः" शोध्यमानः त्वं "समुद्रे" अन्तरिक्षे कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि। किञ्च हे "पवमान" पूयमान सोम! "पिशङ्गं" हिरण्यैः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिं" धनम् "अभ्यर्षसि" स्तोतॄणामभि चरसि प्रयच्छसि ॥ १ ॥

अथ द्वितीया ।

२ २उ ३ १ २ ३ २ ३ १ २ ३ १ २
पुनानोवारेपवमानोअव्यये वृषोअचिक्रदद्वने ।
३ १ २ ३ १र २र ४ १
देवानाᳬसोमपवमाननिष्कृतङ्गोभिरञ्जानो
२
अर्षसि ॥ २ ‡ ॥ १२

* 'बृहती, सतोबृहत्यौ प्रभृतीनि ब्राह्मणोक्तानि'—इति वि० ।

† ऋ० आ० ६, १, ७, ७ ( २भा० ३९७पृ० )=ऋ० वे० ७, ५, १६, १ ।

‡ ऋ० वे० ७, ५, १६, २ ।

"अयं" सोमः "वृषः" वृषभसदृशः* सन् "पुनानः" अभिषूयमाणः सर्वं शोधयतु "अव्यये" अविमये "वारे" वाले पवित्रे "पवमानः" पूयमानः सन् "वने" वननीये, "उदके" काष्ठे कलशे वा† "अचिक्रदत्" शब्दमकरोत्। [अथ प्रत्यक्षवादः] हे "सोम। पवमान!" त्वं "गोभिः" गव्यैः क्षीरादिभिः‡ "अञ्जानः" अज्यमानः¶ सन् "निष्कृतं" संस्कृतं§ देवानां स्थानम् "अर्षसि" गच्छसि॥ २॥ १२

२ र १
॥ औद्दणोरन्ध्रम्॥ मृज्यमानाः। सुहस्तिया३। मा

२ ४ ५ २ १ २ ४ ५ २
मू३द्रायिवा। चमिन्वसा३यि। रायो३म्पायिशा। गम्ब

१ ३ ५ १ २र १ २
ऊला३म्। पूरू२स्पृ२३४हाम्। पवमा। ना। औ३

२ ३ ४ ५ २ र
हो। भियो२३४वा। षा५मो६हायि॥ (१) पवमाना।

१ २ ४ ५ २ १ २
भियर्षसा३यि। पावा३माना। भियर्षसा३यि। पूना३

---

* 'वृषा उ इति पदपूरणः' —इति वि० सम्मतश्चैष छेदः पदकारस्य तथाहि—
१ २र ३
"वृषा। उ"—इति।

† 'वने—काष्ठमये द्रोणकलशे अथवा वने उदके मध्येभूते'—इति।

‡ 'गोभिः—उदकैः अथवा गो-सम्भूतैः क्षीरैः'—इति वि०।

¶ 'अञ्जानः—मिश्रीयमाणः'—इति वि०।

§ 'निष्कृतं स्थानम्'—इति वि०।

नोवा । रेपवमा३ । नोआ२व्या२३४यायि । वृषोअ ।
चा । औ३ह्वो । क्रदो२३४वा । वा५नो६ह्वायि ॥(२)
वृषोअचायि । क्रदद्दना३यि । वार्षो३आचायि । क्रद
द्दना३यि । दायिवा३ना२ꣳसो । मपवमा३ । नना२यि
ष्का२३४र्त्ताम् । गोभिर । जा । औ३हो । नओ२३
४वा । षा५सो६ह्वायि(३) ॥ १ * ॥ [१]

॥ स्वारैडमौक्ष्णोरन्ध्रम् ॥ मृज्यमानःसुहस्त्या । समु
द्रेवोवा । चामिन्वमि । रायिम्पिशा ३ । हा ३ हा ।
गम्बह्रुलम्पुरुस्पृहम् । पवमाना३ । हा३हा । भियर्षा
२३३यि ॥ १) पवमानाभियर्षसि । पवमानोवा । भाय
र्षसि । पूनानोवा ३ । हा ३ हा । रेपवमानोअय्ये ।
वार्षोअचा३यि । हा३हायि । क्रदद्दा२३ना३४३यि ॥(२)

---

* ऊ० गा० ३प्र० १अ० १सा० ।

१ र २   १ र   २र   १ २   १ २र   १
वृषोअचिक्रदद्वने। वृषोअचोवा। क्रादद्वने। दायि
र र २   २ २   १ १र   १   र
वानाᳲसो३। चा३वा। मपवमाननिष्कृतम्। गोभा
२   १ १ र ५ २   २
यिरञ्जा३। चा३वा। नोअर्षा२३सा३४३यि। ओ२३
४५ई। डा(३) ॥ २ * ॥ [२]

१ १ र २ १   १
॥ वाजजित् † ॥ मृज्यमानःसुहा । स्तिया२। समू
१ र १ २र १   १
२हो। द्रेवा२चो। चामिन्वसायि। रया२यिᳲहो
१ २ १ २र १
यि। पिशा२हो। गम्वङ्गलाम्। पूरुस्पृहाम्। पवा
१ र १ २र १ २   १ २र
२हो। माना२हो। भीयर्षसा३१उवा२३ ॥(१) पवमा
र १   १ १ र   २र
नामिया। षसा२यि। पवा२चो। माना२हो। भी
१   १ र १ २र १   २र
यर्षसायि। पुना२चो। नोवा२चो। २पवमा। नो
१   १   १   २र १
अव्ययायि। वृषो२चोयि। अचा२यिचोयि। क्राद
२   १ र २   १
द्वना३१उवा२३ ॥(२) वृषोअचिक्रदात्। वना२यि।

* ऊ० गा० ३प्र० १ख० २सा० ।

† "बार्हद्गाजजिदोत्तणोरभ्रम्"—इति ख० पु० पाठः।

१ १ १ २र१ १ र
वृषो२होयि। अचा२यिहोयि। क्रादद्दनायि। देवा

१ र १ ११ १र १ र
२हो। नाऽसो२हो। मपवमा। नानिष्कृताम्। गो

१ १ १र१. १
भा२यिर्होयि। अच्छा२हो। नोअर्षसा३१उवा२३।

२र१र १ २
वाजौजिगी३वाऽ१(३) ॥ ३ * ॥ [३]

१ र १ १ १ २ १
॥ वरुणसाम ॥ मृज्यमानःसुहस्त्योवा। ओवा। सा

२ र र १ २ १ २ १
मुद्रे वा। वमायिन्वा१सो२। रा२३यीम्। पा२३यि

१ १ ११ २ १ऽ १ १
ग्रा। गम्बङ्कलम्। पुरु२३हायि। स्पृहा३मा। पव

२रर १ २ १ २ १र १ऽ २
मानाभियर्षसि। पा२३वा। मानाभियौ३। हो३हो२३

५ ४ ५ १ र र १ २
४। वा। षा५सो६हायि ॥(१) पवमानाभियर्षसोवा।

१ २ १ १र र १ २ १ २
ओवा। पावमाना। भियार्षा१सा२यि। पू२३ना।

१ २ १र २ र १र २ १ ४ २
नो२३वा। रेयवमा। नोआर२३हायि। व्यया३आ।

१र २ १२र १ २ १ २ ऽ २
वृषोअचिक्रददने। वा२३र्षो। आचिक्रदौ३। हो३१२३

* ऊ० गा० ३प्र० १अ० ३सा०।

५ ४ ५ १र १ १
४। वा। षा५नोई्चायि ॥(२) वृषोअचिक्रदद्वनोवा।
१ १ १र १ १ २ १ १
ओवा। वार्षोअचि। क्रदादा१ना२यि। दा२३यिवा।
१ २ १ २ र १ १ १ ऽ २
ना२३४सो। मपवमा। नजा२३हायि। क्रता३मा।
र १ र १र १ १ १ १ र २ ऽ
गोभिरञ्जानोअर्षसि। गो२३भायिः। आञ्जानओ३।
२ १ ५ ४ ५
हो३हो२३४। वा। षा५सोई्चायि(३) ॥ ४ * ॥ [४]

२ऽ ऽ ऽ १ र
॥ अङ्गिरसाङ्गोष्ठम् ॥ हाउहाउहाउवा। मृज्यमा
२ १र १ १ १ १ १ १ १ र र
नःसुहस्त्या। इहा। उपा२३४५। समुद्रेवाचमिन्व
१ ३ १ १ १ १ १ १ १ १ २ १ १ १
सि। इहा। उपा२३४५। रयिम्पिशङ्गम्बहुलंपुरुस्पृ
२ १ २ १ १ १ १ १ २र र १ १ १
हम्। इहा। उपा२३४५। पवमानाभियर्षसि। इ
३ १ १ १ १ १ २र र १ १ १
हा। उपा२३४५ ॥(१) पवमानाभियर्षसि। इहा। उ
३ १ १ १ १ १ २र १ १ १ १ ३ १ १ १ १
पा२३४५। पवमानाभियर्षसि। इहा। उपा२३४५।
१र १र र र १र र १ २र १ ३ १ १ १ १ १र
पुनानोवारेपवमानोअव्यये। इहा। उपा२३४५। वृषो

* ऊ० गा० ३प्र० १ख० ४बा०।

२ १२र १ ३ १ १ १ १ १र २ १
अचिक्रदद्वने। इहा। उपा२३४५॥(२) वृषोअचिक्रद

२र १ ३ १ १ १ १ १र २ १२र १
द्वने। इहा। उपा२३४५। वृषोअचिक्रदद्वने। इहा।

३ १ १ १ १ २र१र र २र र १
उपा२३४५। देवाजाऽसोमपवमाननिष्कृतम्। इहा।

३ १ १ १ १ २उ ऽ ऽ १र १र २र २
उपा२३४५। हाउहाउहाउवा। गोभिरञ्जानोअर्षसि।

१ ३ १ १ १ १
इहा। उपा२३४५(३)॥ ५ *॥ [५]

१ १ र २ १ २ १ र २
॥ सम्मतम्॥ मृज्यमानःसुहस्तिया। समुद्रेवाऽच

१ १ १ २ २ १
मिन्वसायि। रयिम्पा२३यिशा। गाम्बहुलम्। पुरुस्प

१ ३ ३ १ १र १ १ २ १
हाम। औहो३४वाहायि। प। वामा२३ना ३। हो

२ २ १ २ १ १ २र र १ २ १
वा३हा। भियर्षा२३सा३४३यि॥(१) पवमानाभियर्षसा

र २ १ २ र र १ २ १र
यि। पुनानो२३वा। रेपवमा। नोआव्यायां। औ

२ ४ ३र २ १ २ १ २ २
हो३वाहायि। पु। प्रोआ२३चा३यि। होवा३हायि।

१ २ र १ १ २ १ र
क्रदद्वा२३ना३४३यि॥(२) वृषोअचिक्रदद्वनायि। वृषो

* ऊ० गा० ३प्र० २अ० ५मा०।

अचायिक्रद्दनायि । देवाना२३४सो । मापवमा । न नायिष्कार्त्ताम् । औहो३४वाहायि । गो । भायिरा २३ञ्ञा३ । होवा३हा । नोअषा२३सा३४३यि । ओ २३४५ई । डा(३) ॥ ५ * ॥ [६]

॥ त्रिणिधनमायास्यम् ॥ मृज्यमानःसुहाहाउहोवा । स्तायासा२३४म् । द्रेवा॰ । चमा३४५यि । न्वा२ ३ ४ सो । रया३४ । औहोवा । पिशङ्गम्बऌला२म् । पुरू ३४५ । स्पृ२३४हाम् । पवा३४ । औहोवा । माना२ । भिया३४५ । षा२३४सो ॥(१) पवमानाभियाहाउहोवा । षासायिपा२३४वा । माना२ । भिया३४५ । षा२३४सो । पुना३४ । औहोवा । नोवारेपवमा२ । नोआ३४५ । व्या२३४ये । वृषो३४ । औहोवा । आचार्३यि । क्रदा

* ऊ० गा० ८प्र० १अ० ५सा० ।

३४५त् । वा२३४ने ॥(२) वृषोअचिक्रदद्वाउद्दोवा । वा ।
वानायिवा२३र्षा । अचा२यि । क्रदा३४५त् । वा२३४
ने । देवा३४ । औहोवा । नाऽसोमपवमा२ । नना
३४५यिः । क्रा२३४र्त्ताम् । गोभा३४ । औहोवा । आ
ञ्जा२ । नआ३४५ । षा३४५ । षा२३४मो(३) ॥ ६* ॥[७]

॥ अभीवर्त्तम् ॥ पवा३मा३नाऽभियर्षसोवा । पावमा
ना । भियार्षा१सा२यि । पूनानोवा३१२३४ । रेपवमा ।
नोआव्या१या२यि । वृषोआ१चा२यि । क्रदा३त् । वा
२३४५ । ना२३४५यि२) ॥ ८ † ॥ [८]

॥ कालेयम्‡ ॥ वृषोआ३चिक्रदद्वनायि । वृषोअचा
यि । क्रदद्वना२३यिं । देवानाऽमो३ । मा२३४ । पव

---

* ऊ० गा० ८प्र० १ख० ६मा० ।

† ऊ० गा० ८प्र० १ख० ८मा० ।

‡ "महाकालेयम"— इति ख० पु० पाठः ।

४र ५ २ १ १र ३ २ २
माननिः । क्रा३र्त्ताम् । गोभायिरजौ । वा३४३ । ओ
५ ४र ४
३४वा । नोआपूर्षसायि । होपूई । डा(३) ॥ ८ ॥ [९]

५ ४ ५र २र २ ३र ४र ५ १
॥ पौरुमीढम् ॥ पवमा । नाभा३४औहोवा । आ
२ १ १र र १ १ १र र र
र्षसि । पवमाना । भियर्षा२३सायि । पुनानोवा । रे
२ र १ र २ १
पवार२३मा । नोअव्ययायि । वृषोआर२३चायि । क्रद
१ २ १ १ १ १ १
द्दार२३४५ना६५६यि । दद्दा३या२३४५(२) ॥ १२ † ॥ [१०]

२ ऽ ऽ र
॥ आङ्गिरसाङ्गोष्ठम् ‡ ॥ हाउहाउहाउवा । पुना
१र र २र १ २र र १ २र १ ३ १ १ १ १ १ र १
नोवारेपवमानोअव्यये । इद्दा । उपा२३४५ । वृषोअ
१ २र १ ३ १ १ १ १ २र १र र २र
चिक्रदद्दने । इद्दा । उपा२३४५ । देवानासोमपव
र १ ३ १ १ १ १ २ऽ ऽ ऽ
माननिष्कृतम् । इद्दा । उपा२३४५ । हाउहाउहाउ

* ऊ० गा० ८प्र० २ख० ९सा० ।

† ऊ० गा० ९प्र० २ख० १२सा० ।

‡ 'प्रतोदगोष्ठम्"—इति ख० पु० पाठः ।

१र २ र १र २ १ ३ १ १ १
वा। गोभिरञ्जानोअर्षसि। इहा। उपा २ ३ ४
१
५(२) ॥ ५* ॥ [११]

२र १र२र १ २ १ २ १ र
॥ कण्वरथन्तरम् ॥ पावमानाभियर्षसायि। पवमा
२ १ २ २ र र र र र र २
ना। भा३यार्षा३सायि। पुनानोवारेपवमानोअव्यया
५र २ १र ५ २ २
२३४ऐही। वृषोआ२३४चायि। कदा३१उवा२३। ए३।
२ ३ १
वनआ(२) ॥ १४ † ॥ [१२]

२र १र २ १ २ १ २ १ र
॥ कण्वरथन्तरम् ॥ मार्ज्यमानःसुहस्तिया। समुद्रे
२ १ १ २
वा। चा३मायिन्वा३सायि। रयिम्पिशङ्गंबहुलम्पुरुस्पृ
२ ५ र २ १ ५ २ २
हा२३४मैही। पवमा२३४ना। भिया३१उवा२३। ए३।
२ ३ २
षसआ(१) ॥ ७ ‡ ॥ [१३]

२ १ र १ १र
॥ अर्कपुष्पोत्तरम् ॥ मृज्यमानःसुहस्त्या। ऊवायि।

---

* ऊ० गा० १९प्र० २अ० ५सा०।

† ऊ० गा० १९प्र० २अ० १४सा०।

‡ ऊ०गा० २०प्र० २अ० ७सा०।

औहोवा२। समुद्रेवाचमिन्वसि। ऊवायि। औहो

वा२। रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्। ऊवायि। औ

होवा२। पवमानाभियर्षसि। ऊवायि। औ। हो२।

वा२३४। औहोवा ॥(१) पवमानाभियर्षसि। ऊवायि।

औहोवा२। पुनानोवारेपवमानोअव्यये। ऊवायि।

औहोवा२। वृषोअचिक्रदद्वने। ऊवायि। औ। हो२।

वा२३४। औहोवा ॥(२) वृषोअचिक्रदद्वने। ऊवायि।

औहोवा२। वृषोअचिक्रदद्वने। ऊवायि। औहोवा

२। देवानाꣳसोमपवमाननिष्कृतम्। ऊवायि। औ

होवा२। गोभिरञ्जानोअर्षसि। ऊवायि। औ। हो२।

वा२३४ औहोवा। अर्कस्यदेवाःपरमेवियो२मा२३

४५न्३)॥ ८ *॥ [१४] १२

* ऊ० गा० ८प्र० २अ० ८सा०।

एतमुत्यमिति तृचात्मकं तृतीयं सूक्तम्—

तत्र, प्रथमा ।

३ २　३ २उ　२　१　२　३१ ३　१　२
**एतमुत्यन्दशक्षिपोमृजन्तिसिन्धुमातरम् ।**
१ २　३ १ २
**समादित्येभिरख्यत ॥ १ * ॥**

"सिन्धुमातरं" यस्य सोमस्य सिन्धवो† नद्यः‡ मातरो भवन्ति । "त्यं" तम् "एतम्" इमम् सोमं "दश क्षिपः" दश-सङ्ख्याका अङ्गुलयो¶ "मृजन्ति" शोधयन्ति । अपि च सोऽयम् "आदित्येभिः"§ आदित्यैः "समख्यत" सङ्गच्छते ॥ १ ॥

अथ द्वितीया ।

१　२र ३　२ ३ १ २　३१२　३ २ ३　२
**समिन्द्रेणोतवायुनासुतएतिपवित्रआ ।**
१　२र　३ १ २
**सꣳसूर्य्यस्यरश्मिभिः ॥ २ ‖ ॥**

---

* ऋ० वे० ७, १, १९, १ ।

† "सिन्धवः"—इति निघण्टु-प्रथम-त्रयोदशे नदीनामसु पठितम् ।

‡ —तास्य नव "इमम्मे गङ्गे ( ?. ६, ७, ५ )"- इति बह्वृकमन्त्रा ज्ञेयाः । तथाहि—गङ्गा, यमुना, सरस्वती, शुतुद्री, परुष्णी ( इरावती ), असिक्नी, मरुद्वृधा, वितस्ता, आर्जिकीया ( विपाट ) ;--इत्येता नव ।

¶ "क्षिपः"—इति निघण्टावङ्गुलिनामसु तृतीयम् ( २, ५ ) ।

§ "बह्वलञ्छन्दसि ( ७, १, १० )"—इति भिस ऐसभावः ।

‖ ऋ० वे० ७, १, १९, २ ।

"सुतः" अभिषुतः सोमः "पवित्रे" "इन्द्रेण" "सम् एति" सङ्गच्छते। "उत" अपि च "वायुना" समेति "सूर्य्यस्य "रश्मिभिः" किरणैरपि समेति ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
सनोभगायवायवेपूष्णेपवस्वमधुमान्।
१ २ ३ १ २र
चारुर्मित्रेवरुणेच ॥ ३ * ॥ १३

हे सोम! "मधुमान्" मधुररसः "चारुः" कल्याण-रूपश्च सोऽभिषुतः त्वं "नः" अस्माकम् यज्ञे "भगाय" भगाख्याय देवाय "वायवे" "पूष्णे" च "मित्रे" मित्राय देवाय "वरुणाय" च "पवस्व" क्षर ॥ ३ ॥ १३

२र १ २ १ २ १ २ १ २
॥ इहवद्वामदेव्यम् ॥ एतमुत्यन्दशक्षिपः। इहा। मृ
१ र १ २ १ र र १ २
जन्तिसिन्धुमातरा२म्। इहा। समादित्येभिरा२। इहा
१ ५ ५ १ र र २र १ २र १ २र १
३। ख्या२३४तोई३हायि ॥(१) समिन्द्रेणोतवायुना। इ
२ १ र १ २ १ र
हा। सुतएतिपवित्रआ२। इहा। स०सूर्य्यस्यरा२।
१ २ १ ५ ५ १ २र १ र २ र १ २र
इहा३। श्मा२३४यिभो३हायि ॥(२) सनोभगायवायव।

* ऋ० ७, १, १८, ४।

१ १२ १र १ १ १र र
इहा । पूष्णे पवस्वमधुमा २न् । इहा । चारुर्म्मित्रेव

१ २ १ ५ ५
हू २ । इहा३ । णा२३४यिचो६हायि(३) ॥ ६ * ॥ [१] ·

५र ४ २ ४ ५ ११
॥ अयासोमीयम ॥ एता३मृ३त्यन्दग्निपाः । मृज

० १ २र १
न्तिसायि । धुमा२ता२३४राम् । सामादित्या२३यि ।

२ ४ ५ ४ २ ४र ५र २
भिरा३ख्या५ता६५६ ॥(१) समा३यिन्द्रे३णोतवायुना । सु

१र ० ३ ५ १ २र १
तएतायि । पवा२यित्रा२ ३ ४ आ । सा९सूरिया २ ३ ।

२ ४ ५ ४ २ ४र ५र
स्यरा३श्मा५यिभा६५६यिः ॥(१) सनो३भा३गायवायवायि ।

२र १र ० ३ ५ १ २ १
पूष्णेपवा । स्वमा२धू२३४मान् । चारुर्म्मित्रा २ ३ यि ।

२ ४
वरू३णा५यिचा६५६(३) ॥ १४ † ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
चतुर्थः खण्डः ‡ ॥ ४ ॥

---

* ऊ० गा० ३प्र० २अ० ७मा० ।

† ऊ० गा० २२प्र० २अ० १४मा० ।

‡ "उक्तो माध्यन्दिनः पवमानः" – इति वि० ।

अथ पञ्चमे खण्डे*—

रेवतीर्न-इति तृचात्मकं† प्रथमं सूक्तम्—

तत्र, प्रथमा ।

१र २ ३ २ ३ १ २ ३ १ २
रेवतीर्नःसधमादइन्द्रे सन्तुतुविवाजाः ।
३ १ ३ १ ३ १ २
क्षुमन्तोयाभिर्मदेम ॥ १‡ ॥

"क्षुमन्तः" अन्नवन्तः "याभिः" गोभिः सह "मदेम" हृष्येम "इन्द्रे" "सधमादे" अस्माभिः सह हर्षयुक्ते सति "नः" अस्माकं ता गावः "रेवतीः" चौराज्यादि-धनवत्यः "तुविवाजाः" प्रभूत-बलाश्च "सन्तु" ॥ [रेवतीः—रयि-शब्दात् मतुपि "रयेर्मतौ बहुलम् (६, १, ३४ वा० )" —इति सम्प्रसारणम, परपूर्वत्वे, "छन्दसीरः (८, २, १५ )"—इति मतुपो वत्वम्, "वाच्छन्दसि (६, १, १०६ )"—इति पूर्वसवर्णदीर्घः, "रे-शब्दाच्च मतुप उदात्तत्वं वक्तव्यम ( ६, १. १७६ वा० )"—इति रे-शब्दादुत्तरस्यापि भवतीति पूर्वमेवोक्तम् । सधमादे—मद तृप्ति योगे चौरादिकः, सह मादयतीति सधमादः "सधमादस्थयोश्छन्दसि ( ६, ३, ८६ )"—इति सह-शब्दस्य सध आदेशः, थाथादिना ( ६, २, १४४ )—उत्तर-पदान्तोदात्तत्वे प्राप्ते, "परादिश्छन्दसि

---

* 'इदानीं' इष्टानि'—इति वि० ।

† 'रेवतीषु वारवन्तीयं इष्ट' भवति'—इति वि० ।

‡ ऋ० षा० २, २, १, ९ (१भा० २५३पृ०)=ऋ० वे० १,२,३०,२ ।

बहुलम् (६, २, १९९)"—इति उत्तरपदाद्युदात्तत्वम्। तुविवाजाः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (८, २, १)। द्युमन्तः—दु द्यु रु कु शब्दे (अदा० प०), अस्मात् क्विपि तुगभावश्छान्दसः, "ह्रस्वनुड्भ्यां मतुप् (६, १, १७६)"—इति मतुप उदात्तत्वम्। मदेम—मदी हर्षे (दि० प०), व्यत्ययेन शप्, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम्, ततो धातुस्वरः शिष्यते॥ १॥

अथ द्वितीया।

आघत्वावांत्मनायुक्तस्तोतृभ्योधृष्णवीयानः।
ऋणोरक्षन्नचक्र्योः॥ २ *॥

हे "धृष्णो!" धार्ष्ट्ययुक्तेन्द्र!† "त्वावान्" त्वसदृशो देवताविशेषः, "त्मना" आत्मना अस्मदनुग्रह-बुद्ध्या युक्तः "इयानः" अस्माभिर्याच्यमानः "स्तोतृभ्यः" स्तोतृणामनुग्रहाय तदभीष्टमर्थं "घ" अवश्यम्‡ "आ ऋणाः" आनीय प्रक्षिपतु। तत्र दृष्टान्तः—"चक्र्योः" रथस्य चक्रयोः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत्॥ त्वावान् वतुप्प्रकरणे "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसङ्ख्या

* ऋ० वे० १,२,३०,४।

† 'धृष्णो—धारण स्वभाव' —इति वि० |

‡ 'घ—इति पद-पूरणः'—इति वि०।

नम् ( ५, २, ९४ वा० )"—इति वतुप् "प्रत्ययोत्तर-पदयोश्च ( ७, २, ९८ )"—इति मपर्यन्तस्य त्वादेशः, "आ सर्वनाम्नः ( ६, ३, ९१ )"—इति दकारस्यात्वं, वतुपः पित्त्वादनुदात्तत्वे ( ३, १, ४ ) प्रातिपदिक-स्वरः शिष्यते। त्मना—"मन्त्रेष्वाङ्यादेरात्मनः (६, ४, १४१ )"—इत्याकार-लोपः। धृष्णो—ञि धृषा प्रागल्भ्ये, "त्रसिगृधि-धृषि-क्षिपेः क्नुः, आमन्त्रितानुदात्तत्वम्। ईयानः-ईङ् गतौ, ( दि० आ० )छन्दसि लिट् ( ३, २, १०५ ), तस्य "लिटः कानज्वा ( ३, २, १०७ )"—इति कानजादेशः, "अचिश्नु धातु ( ६, ४, ७७ )"—इत्यादिना इयङादेशः, "चितः ( ६, १, १६३ )"—इत्यन्तोदात्तत्वम्। ऋणोः—ऋण गतौ ( तना० उ० ) लङि व्यत्ययेन तिपः सिपि ( ३, १, ८५ ), "इतश्च ( ३, ४, ९७ )"—इतीकारलोपः, "तनादि-कृञ्भ्य उः ( ३, १, ७९ )",—सार्वधातुकगुणः ( ७, ३, ८४ ), 'बहुलञ्छन्दस्यमाङ्योगेऽपि'—इत्यड़ागमाभावः, विकरण-स्वरेणान्तोदात्तत्वम्। अक्षम् —"अक्षस्यादेवनस्य ( फि० २, १२ )"—इत्याद्युदात्तत्वम्। चक्रोः—अकारस्येकारश्छान्दसः ( ३, १, ८५ )" ॥ २ ॥

अथ तृतीया।

१र २र ३ १र ७र ३ २
आयद्द्वः शतक्रतवाकामञ्जरितॄणाम्।
३ २उ ३ १र २र
ऋणोरक्षन्नशचीभिः ॥ ३ * ॥ १४

हे "शतक्रतो" इन्द्र! "यत्" "द्वः" धनं कामितार्थ-

* ऋ० वे० १,२,३,५।

रूपम् स्तोतृभिः आसव्यमस्ति तं कामं "जरितृणां" स्तोतृणा-मनुग्रहाय "आ ऋणोः" आनीय प्रक्षिपसि । तत्र दृष्टान्तः— "शचीभिः" कर्मभिः शकटोचित-व्यापार-विशेषैः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत् ॥ [शचीभिः—शची-शब्दः शार्ङ्गरवादित्वात् ( ४, १, ७३ ) ङीबन्तत्वादाद्युदात्तः ( ३, १, ४ )॥ ३ ॥ १४

॥ वारवन्तीयोत्तरम् ॥ रेवतीर्न्नाऔहोहायि । सधामा२३४दायि । इन्द्रायिसा२३४हा । तुतुविवा३४ । औहोवा । इहा२३४हायि । उज्जवा२३४जाः । क्षुमन्तः । याभिर्म्मदा३४ । औहोवा । इहा२३४हायि । औहो३१२३४ । मा । एहियाऽइहा ॥ (१) आघत्वावा औहाहायि । त्मानायू२३४क्ताः । स्तोतृभ्यो२३४हायि । धृष्णुवीया३४ । औहोवा । इहा२३४हायि । उज्जवा२३४नाः । ऋणोरं । हान्नचक्रा३४ । औहोवा । इहा२३४हायि । औहो३१२३४ । योः । एहियाऽइहा ॥(२)

आयद्दुवाऔहोहायि । भातक्कार२३४ताउ । आकामा२३४५हायि । जरितॄ३४ । औहोवा । इहार२३४ हायि । उक्कवा२३४णाम् । ऋणोर । चान्नभचा३४ । औहोवा । इहा२३४हायि । औहो३१२३४ । भीः । एहियाईहा । होऽ५ई । डा(३) ॥ १* ॥ [१] १४

सुरूपकृत्नुमिति तृचात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा ।

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
जुहूमसि द्यविद्यवि ॥ १† ॥

"सुरूपकृत्नुं," शोभन-रूपोपेतस्य कर्मणः कर्त्तारमिन्द्रं "ऊतये" अस्मद्रक्षणार्थम् "द्यवि द्यवि" प्रतिदिनं "जुहूमसि" आह्वयामः ॥ [द्यौ-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः(फि० १,१), "नित्य वीप्सयोः(८,१,४)"—इति द्विर्भावः, 'तस्यपरमाम्रेडितम्

* ऊ० गा० ३प्र० १ख० ७सा० ।

† ऋ० सा० ९,२,२,६ (१भा० २९९पृ० ) = ऋ० वे० १,४,७,१ ।

(८, १, २) "अनुदात्तञ्च (८, १, २)"—इति द्वितीयस्यानुदात्तत्वम्। जुह्मसि—इत्यत्र "इदन्तोमसि (७, १, ४६)"—इति इकार आगमः, प्रत्यय-स्वरेण (३, १, ३) इकारउदात्तः] आह्वाने दृष्टान्तः—"गोदुहे" गोधुगर्थं [गां दोग्धीति गोधुक्; सत्सु द्विषेत्यादिना (३, २, ३१) क्विप्, कदुत्तरप्रकृतिस्वरत्वम् (६,२, १३९)] "सुदुघाम् इव" सुष्ठु दोग्ध्रीं गामिव यथा लोके यो दोग्धा तदर्थं तस्य आभिमुख्येन दोहनीयां गामाह्वयन्ति तद्वत् [सुष्ठु दुग्धे इति सुदुघा, "दुहः कब्घश्च (३,२,७०)"—इति कप् प्रत्ययः हकारस्य च घकारः, कित्वाद् गुणाभावः (१, १, ५), कपः पित्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः(६,१,१६२)]॥१॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २
उपनःसवनागहिसोमस्यसोमपाःपिब।

३ १३ ३ २ ३ १ २
गोदाइद्रेवतोमदः॥ २ *॥

हे "सोमपाः" सोमस्य पातरिन्द्र! सोमं पातुं "नः" अस्मदीयानि "सवना" सवनानि त्रीणि "उप" समीपे "आ गहि" आगच्छ [सवना—सूयते सोम एष्विति सवनानि सुपो डादेशः(७,१,३९) टिलोपश्च(६,४,१४३),"लिति(६,१,१९३)"-इति प्रत्ययात् पूर्वस्या-"

* ऋ० वे० १,४,१,२।

कारस्य उदात्तत्वम्। गहि—इत्यत्र गमेः "बहुलम्छन्दसि (२,४,७३)—इति शपो लुक्; हेर्ङित्वादनुदात्तोपदेशेत्यादिना (६,४,३७) मकार-लोपः, "अतोहेः (६,४,१०५)"—इत्याभीय-शास्त्रीये लुकि कर्त्तव्ये "असिद्धवदत्राभात् (६,४,२२)"—इति आभाच्छास्त्रीयो मकार-लोपोऽसिद्धवद् भवति]। आगत्य च "सोमस्य" सोमं "पिब", "रेवतः" धनवतः तव "मदः" हर्षः "गोदा इत्" गोप्रद एव, त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्त इत्यर्थः ॥२॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ २
अथाते अन्तमानांविद्यामसुमतीनाम्।
२ ३ १ २ ३ १ २
मानोअतिख्यआगहि॥ ३ * ॥१५

"अथ" सोमपानानन्तरं हे इन्द्र! "ते" तव "अन्तमानाम्" अन्तिकतमानामतिशयेन तव समीपवर्त्तिनां "सुमतीनां" शोभन-मति-युक्तानां शोभन-प्रज्ञानां पुरुषाणां मध्ये स्थित्वा "विद्याम" वयं त्वां जानीयाम [यद्वा, सुमतीनां शोभन-बुद्धीनां कर्मानुष्ठान-विषयाणां लाभाश्रे मित्यध्याहारः बहुव्रीहि-पक्षे पूर्वपद-प्रकृति-स्वरापवादो "नञ्-सुभ्याम् (६,२,१७२)"—इत्युत्तर-पदान्तोदात्तः। कर्म्मधारय-पक्षेऽपि अव्यय-पूर्वपद-प्रकृति-स्वरापवाद-कृत्स्वरेणान्तोदात्तत्वैव (६,२,१३८)। अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमति-शब्दात् परस्य नामो "नाम-

* ऋ० वे० १, ४, ७, ३।

न्यतरस्याम् (६,१,१७७)"—इत्युदात्तत्वम् ]। त्वमपि "नः" अस्मान् "अति" अतिक्रम्य "माख्यः" अन्येषां त्वत्स्वरूपं मा प्रकथयः [ख्या प्रकथने (अदा० प०)—इत्यस्य लुङि "अस्यतिवक्तिख्यातिभ्योऽङ् ( ३,१,५२ )"। आगहि—गमेः शपो लुकि ङित्त्वादनुदात्तोपदेशेति ( ६,४,३७ ) मकार-लोपस्यासिद्धवदत्राभादिति (६,४,२२) असिद्धवद्भावात् "अतो हेः (६,४,१०५)" —इति लुङ् न भवति ॥ ३ ॥ १५

उभेयदिन्द्ररोदसीति-ऋचात्मकं तृतीयं सूक्तं;

तत्र, प्रथमा।

३ १र २र ३ १ २ ३ २ ३ १ २
उभेयदिन्द्ररोदसीआपप्राथोषाइव।
३ १ २ ३ १ २ ३ १ ३ ३ २
महान्तन्त्वामहीनाꣳसम्राजञ्चर्षणीनाम्॥
३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ १ * ॥

हे "इन्द्र!" "उभे" "रोदसी" द्यावापृथिव्यौ "यत्" यः त्वम् "आ पप्राथ" स्वतेजसा आपूरयसि [प्रा पूरणे, आदादिकः ( प० ). छान्दसो लिट् (३,२,१०५) ] "उषा इव" यथा उषाः स्व-भासा सर्वं जगदापूरयति तद्वत् त्वं "महीनां" महतां देवानामपि "महान्तम्" अधिकं "चर्षणीनां" मनुष्याणामपि

* ऋ० सं० ४,२,४,१० ( १भा० ७७७पृ० )=ऋ० वे० ८,७,२१,१।

"सम्राजम्" ईश्वरम् इन्द्रं "त्वा" त्वाम् "देवी" देवनशीला "जनित्री" साधु-जनयित्री अदितिः "अजीजनत्" अतः कारणात् सा "भद्रा" कल्याणी प्रशस्ता "जाता" [ जनेर्ण्यन्तात् साधुकारिणि तृन् (३,२,१३४), "जनिता मन्त्रे (६,४,५३)"— इति इडादौ णि-लोपो निपात्यते, ऋन्नेभ्य इति ङीप् ( ४, १, ५ ) ॥ १ ॥

अथ द्वितीया ।

३ २ २ ३ १ २३२ ३ १२
दीर्घं ह्यङ्कुशंयथाशक्तिम्बिभर्षिमन्तुमः ।
१ २ ३२ ३ २ ३ १२ २२
पूर्व्वेणमघवन्पदावयामजोयथायमः ।
३ १२ २२ ३ १२ २२
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत् ॥ २ * ॥

"दीर्घम्" आयतम् "अङ्कुशं" सृणिं "यथा बिभर्षि" एव मायतां "शक्तिं" हे "मन्तुमः" मन्तु ज्ञाने, तद्वन् ! ["मतुवसो रुः (८, ३, १ )"—इति सम्बुद्धौ नकारस्य रुत्वम्] ईदृशेन्द्र ! बिभर्षि धारयसि [डु भृञ् धारण-पोषणयोः जौहोत्यादिकः, श्लौ "भृञामित् ( ७, ४, ७६ )"—इत्यभ्यासस्येत्वम् ] हे "मघवन्" धनवन्निन्द्र ! यथा "पूर्व्वेण" देहस्य पूर्व्वभागे वर्त्तमानेन "पदा"

---

* ऋ० वे० ८, ७, ११, ५ ।

पादेन "अजः" छागः "वयां" शाखां आकर्षति तथा पूर्वोक्तया शक्त्या आक्रष्यामः शत्रून् [नियच्छसि--यमेर्लेटाड़ागमः, "बहुलं छन्दसि (२, ४, ७३)"—इति शपो लुक्]। गतमन्यत् ॥ २ ॥

अथ तृतीया।

१ १ ३ १र २र ३ २
अवस्मदुर्हणायतोमर्त्तस्यतनुहिस्थिरम्।
३ १र २र ३ २ ३ १ २ ३ १ २
अधस्पदन्तमीङ्कृधियोअस्माँ२अभिदासति॥
३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ ३* ॥१६

"दुर्हणायतः" दुःखप्रद-हरणमाचरतः "मर्त्तस्य" मनुष्यस्य शत्रोः "स्थिरं" दृढं बलम् "अव तनुहि" अवततं नीचीनं कुरु। "स्म"—इति पूरकः। "तम्" शत्रुम् "ईम्" एनम् अधस्पदं पादयोरधस्ताद्वर्त्तमानं "कृधि" कुरु। "यः" शत्रुः "अस्मान्" "अभिदासति" उपक्षिपति†। समानमन्यत् ॥३॥१६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

* ऋ० वे० ८, ७, २१, ३।

† 'अभिदासति—हिंसां करोति'—इति वि०।

अथ षष्ठे खण्डे *—

परिस्वानइति तृचात्मके प्रथमं सूक्तम्,

तत्र, प्रथमा ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
परिस्वानोगिरिष्ठाःपवित्रेसोमोअक्षरत् ।
१ २ ३ १ २
मदेषुसर्वधाअसि ॥ १ † ॥

अयं "सोमः" "पवित्रे" दशापवित्रे "पर्यक्षरत्" परितः क्षरति । कीदृशः सन्? "स्वानः" शब्दायमानः ["सुवानः"-इति बह्वृचानां पाठः] सूयमानः "गिरिष्ठाः" गिरिस्थायी ग्रावसु वर्त्तमान इत्यर्थः । हे सोम ! स त्वं "मदेषु" मादकेषु सोत्वषु "सर्वधा असि" सर्वस्य धाता दाता च भवसि ॥ १ ॥

अथ द्वितीया ।

१ ३ ३ १ ३ २ ३ ३ १ ३ १ र २ र
त्वंविप्रस्त्वङ्कविर्मधुप्रजातमन्धसः ।
१ २ ३ १ २
मदेषुसर्वधाअसि ॥ २ ‡ ॥

* "इदानीमार्षवो वक्तव्यः । तत्र च वैदन्वत-प्रभृतीनि सामानि, ब्राह्मणोक्तार्षाणि"—इति वि० ।

† ऋ० आ० ५,१,४,८ । २भा० २६पृ० = ऋ० वे० ६, ८, ८, १ ।

‡ ऋ० वे० ६, ८, ८, २ ।

हे सोम! "त्वं" "विप्रः" विविधं प्रीणयिता विप्रसदृशो वा त्वञ्च "कविः" मेधावी, अतस्त्वम् "अन्धसः" अन्नात् जातं "मधु" मधुरसं प्रयच्छसीति शेषः॥२॥

अथ तृतीया।

१र १र३ १ २ ३ १२ ३ १ २
त्वेविश्वसजोषसोदेवासःपीतिमाशत।

१ २ ३ १ २
मदेषुसवधाअसि॥३*॥१७

हे सोम! "त्वे" त्वयि "पीतिं" पानं "विश्वेदेवासः" सर्वे देवाः "सजोषसः" समान-प्रीतयः सन्त "आशत" प्राप्नुवन्॥३॥१७

॥तृतीयंवैदन्वतम्॥ पाऽ५रि। स्वानो३गा३यिरि ष्ठाः। पवित्रेसो। सोअक्षरात्। पवित्रे। सोमो२३। क्षारात्॥(१) तूऽ५वम्। विप्रा३स्त्वं३वङ्कवायिः। मधुप्रजा। तमन्धसाः। मधुप्रजा। तमा२३। धासाः॥(२) तूऽ५वे। विश्वे३सा३जोषसाः। देवासःपायि। तिमा

* ऋ० वे० ८, ८, ८, ३।

शता। देवेसःपी। तिमा२३। शाता। औयि।

मटौ। वा३४३ओ३४वा। धुवा। सर्वधाः। असायि।

मा२दा२३४औहोवा। ए३। धुसर्वधाअसौ२३४५॥८*॥[१]

॥ वैदन्वताद्यम्॥ पारौ। स्वानोगिरिष्ठाः। पवा

२यिचे२३४सो। मोअचारा२त्॥(१) तूवाम्। विप्र

स्त्वङ्कविः। मधू२प्रा२३४जा। तमन्धामासा२ः॥(२)

तूवे। विश्वेसजोषसः। देवा२सा२३४ःपी। तिमाशा

ता२। मदायिषूसा३। ई३या३। वंधो२३४वा। आ

५सो६हायि॥ ८ † ॥ [२]

॥ चतुर्थवैदन्वतम्॥ औ३होयि। इहहाहहायि।

औ२हो२३४वा। परायिस्वा२३४नो। गिरा२३४यिष्ठाः।

---

* ऊ० गा० ३प्र० २ख० ८सा०।

† ऊ० गा० ३प्र० २ख० ९सा०।

पाविते२३४सो। सोअशा२३४रात्॥(१) तुवंवा२३४यि
प्रः। तुवङ्का२३४वीः। मधुप्रा२३४जा। तमन्धा२३४
सा:॥(२) तुवेंवा२३४यिश्वे। सजोषा२३४साः। देवासा
२३४:पी। तिमाशा२३४ता। मदायिषू२३४सा। वंधा
आ२३४सो। औ३होयि। इहहाहहायि। औ२होर
३४५वा६५६। ए३। उपा२३४५(३)॥१०*॥[३]

॥ऐध्मवाहाद्यम्॥ परिसुवाइहा। नोगायि। रा
यिष्ठाओ२३४वा। ई२३४हा। पवित्रेसोमो३आ। हा
रादो२३४वा। ई२३४हा॥(१) तुवंविप्रइहा। तुवाम्।
कावाओ२३४वा। ई२३४हा। मधप्रजाता३मा। धा
साओ२३४वा। ई२३४हा॥(२) तुवेविश्वइहा। सजो।
षासाओ२३४वा। ई२३४हा। देवासःपीतौ३मा। आ

* ऊ० गा० ७प्र० २अ० १०मा० ।

ताओ२३४वा। ई२३४हा। मदायि। पूसाओ२३४
वा। ई२३४हा। वंधाः। वंधार३आ२३४५साइ५ईयि।
ई२३४हा(३)॥ ८*॥ [४]

॥ सञ्चितम्॥ परिसुवानः। गा२ययिरिष्ठाः। पवा
२यि। चे२३सो। मोआ२आरात्। तुवंविप्रस्तु।
वा२रक्कवायिः। मध२। प्रा२३जा। तमा२न्धासाः।
तुवेविश्वे म। जो२षसाः। देवा२। सा२३ःपी। वि
मा२श्राता। मा२३दायि। पू२मा। धार३ः। हा
उवा३। आ२३४सो(३)॥ ६†॥ [५]

॥ जराबोधीयम्॥ परिसुवोवा। नोगिरिष्ठाः। पवा
यिचे२३सो। मोअच्चारात्॥(१) तुवंविप्रोवा। तूवङ्क
वायिः। मधप्रा२३जा। तमन्धासाः॥(१) तुवेविश्वो

---

* ऊ० गा० ८प्र० १ख० ६सा०।
† ऊ० गा० ८प्र० ७ख० ६सा०।

वा। साजोषसाः। देवासा२३:पो। तिमाशाता। म

दायिषू१सा२३र्वा। धाः। असो३४५ई। डा(३)॥१८*॥[६]

॥ सुरूपोत्तरम्॥ परिसुवौहो२। इया। नोगिरा

यिष्ठा२:। पवित्रे सौहो२। इया। मोअच्चारा२त्॥(१)

तुवंविप्रौहो२। इया। तुवङ्कावा२यिः। मधप्रजौहो२।

इया। तमन्धासा२:॥(२) तुवेविश्वौहो२। इया। स

जोषासा२:। देवासःपौहो२। इया। तिमाशाता२।

मदेषुसौहो२। इया। वंधाआ२३मा३४३यि। ओ२३

४५ई। डा(३)॥ ३†॥[७]

॥ हाविष्मतम्॥ हाउपरिस्वानोगिरिष्ठाहाउ। प

वित्रेसो३। मोअच्चा२३४रात्॥(१) हाउतुवंविप्रस्तुव

ङ्कविर्हाउ। मधप्रजा३। तामन्धा२३४साः॥(२) हाउ

---

* ऊ० गा० १२प्र०१ ख० १८गा०।

† ऊ० गा० १४प्र० १ख० १३गा०।

तुवेविश्वे सजोषसोहाउ। देवासःपो३। तायिमाशा२

३४ता। ऐ२हो१आ२३यिहो। मदायिषू३सा। वंधाः।

आ२सा२३४औहोवा। हविष्मते२३४५(३)॥ ८ *॥ [८]

॥ माम्मदम्॥ परिमुवानऐ। होऐहो२३४या।

गिरिष्ठाऐ२होऐ२हो३या। पवित्रे सोमोअक्षरदै२होऐ

२हो३या॥(१) तुवंविप्रस्तुऐ। होऐहो२३४या। वङ्क

विरै२होऐ२हो३या। मधुप्रजातमन्धसऐ२हो३या॥(२)

तुवेविश्वे सऐ। होऐहो२३४या। जोषसऐ२हो३या।

देवासःपीतिमाशतऐ२होऐ२हो३या। मादायिषुसा३१

२३। वंधो२३४वा। आ५सौ६हायि(३)॥ ९ †॥ [९]

---

* ऊ० गा० १५प्र० १ख० ८सा०।

† ऊ० गा० १५प्र० १ख० ९सा०।

२ १ ४र र ५
॥ दावसुनिधनम् ॥ परिस्रुवार२३नोगिरिष्ठाहाउ ।
१ २र र र १ २ १ ९ ९
प।वित्रेसो । मोश्राश्चा१रा२३त् । होवा३हायि ॥(१)
१ ४ ५ १ २र १ २
तुवंवार२३यिप्रस्तुवङ्कविर्हाउ । माधुप्रजा । तमान्धा१
१ २ २ २१र ४र र
मा२३ः । होवा३हायि ॥(२) तुवेवार२३यिश्वे सजोहाउ ।
१ र२ र १ र १ २ २ १
दायिवासःपी । तिमाश्रा१ता२३ । होबा३हायि । म
२ १ ९ २ १र ३
दायिषू१सा२३ । होवा३हा । वंधाः । श्रा२सा२३४
५र र २ २र १ ३ १ १ १ १
औहोवा । ए३ । दावमू२३४५ (३) ॥ १० * ॥ [१०]

१ ९ र
॥ प्रतीचीनेडङ्काशीतम् ॥ परिस्रुवानः । गा२यिरि
१ २र र र १ ०
ष्ठाः । पावित्रेसो । मोश्राक्षरा२३४त् । हाहोयि ॥(१)
१ २ १ २ र १ ०
तुवविप्रस्तु । वा२ङ्कवायिः । माधुप्रजा । तमान्धसा
४र २ १ र २ र १
२३४ः । हाहोयि ॥(२) तुवेविश्व स । जो२पसाः । दा

* ऊ० गा० १५प्र० १ख० १०मा० ।

यिवासःपो । तिमाशता२३४ । हाहोयि । मदेषुसार्वा

३धाः । असा । औ३होवा । ईडा(३) ॥ ११ * ॥ [११]

॥ हाविष्कृतम् ॥ परिसुवानोगाहाउरायिष्ठाः । प

वित्रेसो । मोआहा२३रात् ॥ (१) तुवंविप्रस्तुवंहाउ

कावायिः । मधुप्रजा । तमन्धा२३साः ॥ (२) तुवेवि

श्वेसजोहाउषासाः । देवासःपायि । तिमाशा२३ता ।

मदा२हो१यि । षू२३मा । वंधाः । आ२सा२३४ औ

होवा । हविष्कृते२३४५(३) ॥ १२ † ॥ [१२]

॥ गौषूक्तम् ॥ परिसुवानोगौ । हौहोवाहायि । रि

ष्ठाः । पवित्रसोमऔ२ । ऊवायि । ऊवा२यि । हा

रा२त् ॥ (१) तुवंविप्रस्तुवौ । हौहोवाहायि । कवायिः ।

---

* ऊ० गा० १३प्र० १अ० ११मा० ।

† ऊ० गा० १५प्र० १अ० १२मा० ।

मधुप्रजातमौ२। ऊवायि। ऊवा२यि। धामा२:॥(२) तुवेविश्वेसजौ। द्यौहोवाहायि। षसा:। देवास:पी तिमौ२। ऊवायि। ऊवा२यि। ग्राता२। मदेषुस वंधौ२। ऊवायि। ऊवा२यि। ग्राता२। मदेषुस वंधौ२। ऊवायि। ऊवा२यि। आसा२३यि। द्यो २वा२३४औहोवा। अग्निराऊता२३४५:(३)॥ ७* ॥[१३]१७

ससुन्वे—इति-प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा।

ससुन्वेयोवसूनांयोरायामानेतायइडानाम्।
सोमोयस्सुक्षितीनाम्॥ १ † ॥

"सः" सोमः "सुन्वे" अभिषवे ऋत्विग्भिः, यः सोमः वसूनां धनानाम् "आनेता", यश्च "रायां" रान्ति प्रयच्छन्ति चोरादिकमिति रायो गावः तेषा मानेता, यश्च "इडानाम्" अन्नानाञ्च, यश्च सोमः "सुक्षितीनां" सुनिवासानां शोभन-मनुष्य-युक्तानां गृहाणाम् आनेता विद्यते, सोऽभिषुतोऽभूदिति॥ १॥

* ऊ० गा० १ प्र० २ख० ७मा०।

† छ० आ० ६, २, ४, ५। २भा० २३७पृ०। = ऋ० वे० ७, ५, १६, ३।

अथ द्वितीया ।

१ २ ३ २ ३ २ ३ १ २ ३१ ३ १२ ३ १ ३ १२

यस्यतइन्द्रःपिबाद्यस्यमरुतोयस्यवार्यमणाभगः ।

१ २र ३ १र २र ३ १ २ ३ २ ३ १ २ ३ २

आयेनमित्रावरुणाकरामहएन्द्रमवसेमहे ॥ २ ॥ १८

हे सोम ! "यस्य" प्रसिद्धस्य "ते" तव रसम् "इन्द्रः" "पिबात्" पिबति [ पा पाने (भ्वा० प०), लेटाडागमः ] "यस्य" यम् सोमं "मरुतः" पिबन्ति, "वा" अपिच "अर्यमणा"† "भगः"‡ देवः "यस्य" यं सोमं पिबति, [illegible] देवेन सह "भगः"‡ देवः "यस्य" यं सोमं पिबति, "येन" सोमेन "मित्रावरुणा"¶ मित्रावरुणौ वयम् "आ करामहे" अभिमुखीकुर्म्महे । तथा "महे" महते "अवसे" रक्षणाय येन च सोमेन "इन्द्रम्" अभिमुखीकुर्महे, तं त्वाम् [illegible]गीमीत्यर्थः ॥ २ ॥ १८

१ २ १र र २ १

॥ दीर्घम् ॥ साम । वेयोवम्२३नाम् । योरा२

१ र र १ २ १ २ १ २

यामा२ । [illegible]डा२३नाम । सो२३माः । यःमुचि

* ऋ० वे० ७. ५. १८, ४ ।

† सुपांसुलुगित्यात्वं ( ७. १. ३९ ) छन्दस ।

‡ "भगो व्याख्यातः ( ३, १६ ) । तस्य कालः प्रागुत्सर्पणात् तस्यैषा भवति— * * * । अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते । प्राशित्र मस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं गच्छतीति वा जन गच्छत्यादित्य उदयेन"—इति निरु० द० ६, १३-१४ ।

१ ५ ५ १ २ १
तार३४यिनो६हायि ॥(१) सोमाः । यःसुचिता२ ३ यि

२ १ १ र १ २ १
नाम्। यास्या२ताई२। द्रःपिबाद्यस्यमरु२३ताः। या

१ र १ १ २
स्या२ताई२। द्रःपिबाद्यस्यमरु२३ताः। या२ ३ स्या।

१र २ १र ५ ५ १ २ १र र
वार्य्यमणाभा २ ३ ४गो६हायि ॥(२) यास्या। वार्यमणा

२ १ १ १र र २ १र २
भा२३गाः। आये२नामी२। त्वावरुणाकरामा२३हा

१ १ र र १र २ १
यि। आये२नामी२। त्वावरुणाकरामा२३हायि। आ

२ १ २र १ ५ ५
२३यिन्द्राम्। अवसेमा२३४हो६हायि(३)॥ ११* ॥[१]

२१ २ ४ २ १ ५ २र १
॥ सप्तम॥ समुन्वे३यः। वासू२३४नाम्। योरा

र १ २ २ २ ५ १र
या२म्। आनायिता३या३ः। इडा३२३ ४ नाम्। सो

१ २ ४ २ ५
नाः। याःसू३क्षी३। ता३४५यिनो६हायि(१) ॥१४†॥[२]१८

* ऊ० गा० ३प्र० २अ० ११सा०।

† ऊ० गा० २१प्र० १अ० १४सा०।

तंवइति-द्वचात्मकं तृतीयं सूक्तम्;

तत्र, प्रथमा।

१ १ २ १ २ ३ १ २ १ २
तंवःसखायोमदायपुनानमभिगायत।
२ ३ १ २ ३ १ २ ३ १ २
शिशुन्नहव्यैःस्वदयन्तगूर्त्तिभिः॥ १ * ॥

हे "सखायः" ऋत्विजः! "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं तं सोमम् "अभि गायत" अभिष्टुत। "तम्" इमं सोमं "शिशुं न" शिशुमिव अलङ्कारैः चीरादिभिश्च स्वादू-कुर्वन्ति, तद्वत् "हव्यै" हविर्भिः मिश्रणैः "गूर्त्तिभिः" स्तुति-भिश्च "स्वदयन्त" स्वादूकूर्वन्ति॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
संवत्सइवमातृभिरिन्दुर्हिन्वानोअज्यते।
३ १२ २१ ३ २ ३ १ २
देवावीर्मदोमतिभिःपरिष्कृतः॥ २ † ॥

"हिन्वानः" प्रेर्यमाणः "इन्दुः" सोमः वसतीवरीभिः "समज्यते" सम्यक् सिक्तो भवति ‡। तत्र दृष्टान्तः—"वत्स-

* छ० आ० ६, २, ७, ४ (२भा० १०८पृ०) = ऋ० वे० ७, ५, ८, १।

† ऋ० वे० ७, ५, ८, २।

‡ 'इन्दुः हिन्वानः याज्यमानः, अज्यते आज कंपते मनीषिभिः'—इति वि०।

इव" वत्सो यथा "मातृभिः"* गोभिः समक्तो भवति, तद्वत्। कीदृशः? "देवावीः" देवानां रक्षकः, "मदः" मदकरः "मतिभिः" स्तुतिभिः "परिष्कृतः" अलङ्कृतः। भूषणार्थे "सम्पर्युपेभ्यः (६, १, १३७)"—इति सुड़ागमः, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम्॥ २॥

अथ तृतीया।

१ २र २र ३ १ २ ३ १र २र ३ १ २
अयन्दक्षायसाधनोयꣳशर्धायवीतये।

३ २ ३ २ ३ १ २ ३ २
अयन्देवेभ्योमधुमत्तरःसुतः॥ ३ †॥ १९

"अयं" सोमः "दक्षाय" बलाय वर्द्धनाय वा "साधनः" साधयिता भवति, तथा "अयं" सोमः "शर्द्धाय" बलाय "वीतये" देवानां भक्षणार्थं च भवति, "सुतः" अभिषुतः, "अयं" सोमः "देवेभ्यः" इन्द्रादिभ्यः "मधुमत्तरः" अतिशयेन माधुर्य्य युक्तो भवति अत्यन्तं मदकरो भवतीति वा॥ ३॥ १९

३ ६ ५ ३
॥ कार्णश्रवसम्॥ ताꣳ२३४वः। मा२३४खा। सा२

५ २र १ ९ १ र २ र २
३४खा। योमदा२३या। पुनानम। भिगाया२३ना।

* 'मातृभिः—तृतीया-बहुवचनमिदं चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम्'-इति वि०।

† ऋ० वे० ७, १, ८, ३।

गायिशुन्नह । व्यःस्वदया२३ । तगूर्त्तिभा३४३यिः ॥(१)

सा२३४व । त्वा२३४ई । वसातू२३भायिः । आयिन्दु

र्हिन्वा । नोअज्या२३तायि । दायिवावीर्मा । दोमति

भा२३यिः । परिष्कृता३४३ः ॥(२) आ२३४यम् । दा२३

४आ । यमाधा२३नाः । आय२ःशङ्गा । यवीता३२या

यि । आयन्देवे । भ्योमधुमाधतरःसुता३४३ः । ओ२३

४५ई । डा(३) ॥ १२ * ॥ [१]

॥ सुज्ञानम् ॥ तंवःसखा । योमदाया । पुनाना]

मा२ । भिगायता । शिशुन्नाहाहा२ । व्यैःस्व । दा

२या२३४औहोवा । तगूर्त्तिभिरे३उपा२३४५ (१) ॥१० † ॥ [२

* ऋ० ७ मा० ३ प० २ अ० १२ मा० ।

† ऋ० ७ मा० ८ प० ६ अ० १० मा० ।

॥ काश्यीतम् ॥ तंवःसखा। योमदा२३या३४। पुनानमा। भिगाया२३ता३४। श्निप्नुन्नहा। व्यैःमूदयन्तगू। तां२यि। भा२३४। औहोवा। ऊ२३४पा(१) ॥ ११* ॥ [३] १८

सोमाःपवन्तइति-तृचात्मकं चतुर्थं सूक्तम् ;

तत्र, प्रथमा।

सोमाःपवन्तइन्दवोस्मभ्यङ्गातुवित्तमाः।

मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः ॥ १† ॥

"गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः "इन्दवः" दीप्ताः "सोमाः" "पवन्ते अस्मभ्यम्" अस्मदर्थं क्षरन्ति आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः, "स्वानाः" सुवानाः अभिषूयमाणाः "अरेपसः" पाप-रहिताः, अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः स्वर्ग-प्रापका वा॥ १ ॥

* ऊ० गा० ८प्र० १ख० ११मा०।

† छ० आ० ६, २, १, ४= (भा० १५८ पृ०) — ऋ० सं० ७, ५, १, ५।

अथ द्वितीया।

१ ३ १ २ ३ २ ३ १ २ ३ १ २
तेपूतासोविपश्चितःसोमासोदध्याशिरः।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
सूरासोनादर्शतासोजिगत्नवोध्रुवाघृते ॥ २ * ॥

"पूताः" पवित्रेण परिपूताः, "विपश्चितः" मेधाविनः, "दध्याशिरः" दध्यामिश्रणाः, "घृते" वसतीवर्याख्ये उदके "जिगत्नवः" गमन-शीलाः "ध्रुवाः" सत स्थैर्येण वर्त्तमानाः "ते" "सोमासः" सोमाः "सूरासः न" सूर्य्या इव "दर्शतासः" पात्रेषु सर्वदर्शनीया भवन्ति† ॥ २ ॥

अथ तृतीया।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
सुष्वाणासोव्यद्रिभिश्चितानागोरधित्वचि।
१ २ ३ १ २ ३ १ ३ १ २ ३ १ २
इषमस्मभ्यमभितःसमस्वरन्वसुविदः ॥ ३ ‡ ॥ २०

"गोः" अनडुहः "अधित्वचि" अधिषवण-चर्म्मणि "चिताना" ज्ञायमाना "अद्रिभिः" ग्रावभिः विविधैः "सुष्वाणासः" स्तूयमानाः "वसुविदः" वसुनो लम्भकाः "एते" सोमाः अस्मभ्यम्

* ऋ० वे० ७, ५, ३, १।

† 'दर्शतासः - सर्वस्य द्रष्टारः'- इति वि०।

‡ ऋ० वे० ७, ५, ७, १।

"वृषम" अन्नम् अभितः "ममस्वरन्" सम्यक् शब्दयन्ति प्रयच्छन्तीति यावत्* ॥ ३ ॥ २०

॥ गौरीवितम् † ॥ सोमाः । पवा३ । तइन्दवाः । अस्मभ्यङ्गातुवित्तमा२३ः । मायितास्स्वाना३१२३ः । अरे५पसाः । सुवाधिया३१२३ः । सुवोवा । वा५यिदोइ हायि ॥ १ तेप् । तामो३ । विपश्चिताः । सोमासो दध्याशिरा२३ः । सुरामोना३१२३ । दशा५ताना: । जायिगत्स्वा३१२३ः । ध्रुवोवा । घा५र्त्ताइहायि ॥ (२) सुषा । णामो३ । वियद्रिभायिः । चितानागोरधित्वचा२३यि । अयिषमस्मा३१२३ । भ्यमा५भिताः । माममस्वरा३१२३न् । वर्मोवा । वा५यिदोइहायि(३) ॥ १३ ॥ [१]

* 'ममस्वरन् — उन्मादयन्' इति वि० ।

† "महागौरीवितम" — इति ख० पु० पाठ ।

‡ ऊ० गा० ७प्र० २अ० १३मा० ।

॥ मधुश्च्युन्निधनम् ॥ सोमाःपवन्तइन्दवा३ए। अस्म
भ्यङ्गा३तुवित्तमा३ः। हा३हा। औ३हो३वा। आयिही
२। मित्रास्स्वाना३अरेपसा३ः। हा३हा। औ३हो
३वा। आयिही२। स्वाधिया३ः। हा३हायि। औ
३हो३वा। आयिही२। सुवः। वा२यिदा२३४औहो
वा ॥(१) तेपूतासोविपश्चिता३ए। सोमासोदा३धाआ
शिरा३ः। हा३हा। औ३हो३वा। आयिही२। सू
रासोना३दर्शतासा३ः। हा३हा। औ३हो३वा। आ
यिही२। जायिगत्नवा३ः। हा३हायि। औ३हो३वा।
आयिही२। ध्रुवाः। धा२र्त्ता२३४औहोवा ॥(२) सु
ष्वाणासोवियद्रिभा३यिरे। चितानागो३राधित्वचा३।
हा३हा। औ३हो३वा। आयिही२। इषमस्मा३भ्या

मभिता३ः। हा ३ हा। औ३हो ३ वा। आयिही २। सामस्वरा३न्। हा३हायि। औ३हो३वा। आयिही २। वसु। वा२यिदा२३४औहोवा। मधुश्च्युतार३४ ५ः (३) ॥ १४ * ॥ [२]

॥ वाङ्निधनङ्कौत्सम् ॥ सोमाःपावा३१२३४। तइ। द्वा३। अस्मभ्यङ्गा३१२३४। तुवि। तमा३ः। मित्रा स्वाना३१२३४ः। अरे। पसा३ः। सुवाधीया३१२३ः। सुवा५विंदा३ ॥ (१) तेपूतासो३१२३४। विपः। चिता ३ः। सोमासोदा३१२३४। धिया। शिरा३ः। मूरासो ना३१२३४। दर्शं। तामा३ः। जिगात्नावा३ १ २ ३ः। ध्रुवा५घृताउ ॥ (२) मृषाणासो३१२३४। विय। द्रिभा ३यिः। चितानागो३१२३४ः। अधि। त्वचा३यि। वृषा

* ऊ० गा० ५प्र० १ख० १४गा०।

मास्मा३१२३४। भ्यम। भिता३ः। समास्वारा३१२३न्। वम्रूपुविदाउ(३)॥१५*॥[३]

॥ ऐडक्रौञ्चम्॥ सोमाःपवन्तइन्दवाः। अस्माभ्यङ्गा। तुवित्तमाः। मायित्राओ२३४वा। स्वानाअरेपसा२३४५ः। सुवाधियाः। सुवर्वा२३यिदा३४३ः॥(१)तेपूतासो विपश्चिताः। सोमासोदा। धियाशिराः। स्वराओ२३४वा। सोनदर्शतासा२३४५ः। जिगत्नवाः। ध्रुवाघा २३र्त्ता३४३यि॥(२) सुष्वाणासोवियद्रिभायिः। चिता नागोः। अधित्वचायि। आयिषाओ२३४वा। अस्मभ्यमभिता२३४५ः। समस्वरान्। वसुवा२३यिदा३४३ः। ओ२३४५ई। ई। डा(३)॥१६†॥[४]

॥ श्यावाश्वम्॥ सोमा३१ः। पा३व। तइ। दा३

---

* ऊ० गा० ३प्र० १ख० १५सा०।

† ऊ० गा० ३प्र० १ख० १६सा०।

वः। एहिया। आ। सभ्यङ्गातू। वि। तमा२ः।
एहिया२। मित्रास्खानाआ३रे३। पा२३४साः। ऐ
हा२यि। एहिया२। सुवाधियाःपू३वा३ः। वा३४५यि
दो६हायि॥(१) तेपू३१। ता ३ मो। विपः। चा ३
यितः। एहिया। सो। मामोदधायि। आ।
भिरा२ः। एहिया२। सूरामोनाढा३र्षा३। ता२३४माः।
ऐहा२यि। एहि या२। जिगत्नवोघ्रू३वा३ः। घा ३
४ ५ त्तौ६हायि ॥(२) सुषा३१। णा३सो। विय।
द्रा३यिभिः। एहिया। चायि। तानागोरा। धि। त्वचा
२यि। एहिया२। इषमस्मा३मा३। भा२३४यिताः।
ऐहा२यि। एहिया२। समस्वरान्वा ३ ह्व३। वा ३
४ ५ यिदो ६ हा यि(३) ॥ १६ * ॥ [५]

---

* ऊ० गा० १५प्र० २ष० १६सू:०।

॥ आन्धीगवम् ॥ सोमाःपवन्तआ१यिन्दावाः । अ
स्मभ्यम् । गातूर३वा । ऊम्मार२१ऽ२ । तमामित्रास्वा
नाअरेपसार२३४५ः । सूवा३उवा । धी२याः । स्व२३वाः ।
विदा । औ३होवा ॥(१) तेपूतासोविपा१श्चायिताः । सो
मासः । दधार३आ । ऊम्मा२१ऽ२ । शिरःमूरासोन
दर्शतासार२३४५ः । जायिगा३उवा । त्वा२वो । ध्रू२३
वाः । घृता । औ३होवा ॥(२) मुषाणासोविया१द्रा
यिभायिः । चितानाः । गोरार३धा । ऊम्मा२१ऽ२ ।
त्वचीषमस्मभ्यमभिता२३४५ः । सामा३उवा । स्वा२रा
न् । वा २ ३ स्व । विदा । औ ३ होवा । हो ५ ई ।
डा(३) ॥ १७ * ॥ [६]

॥ निषेधम् ॥ सोमाःपवन्ता ३ इन्दवाः । अस्माभ्य

---

* ऊ० गा० १५प्र० १ख० १७सा० ।

ङ्गा । तुविक्तमा२ः । इहा३ । मायित्रा३स्स्वानाः । हा
हो२३४हा । अरेपा२३साः । इहा३ । सूवा३धीयाः ।
हाहो२३४हा । सुवा३र्वा५यिदा६५६ः ॥(१) तेपूतासो
वा३यिपश्चिताः । सोमासोदा । धियाशिरा२ः । इहा
३ । हरा३सोना । हाहो२३४हा । दर्शता २ ३ साः ।
इहा३ । जायिगा३त्नावाः । हाहो२३४हा । ध्रुवा३
घा५र्त्ता६५६यि ॥(२) सुष्वाणासोवा३यद्रिभायिः । चिता
नागोः । अधित्वचा२यि । इहा३ । आयिषा३मास्मा ।
हाहो२३४हा । भ्यमभा२३यिताः । इहा३ । सामा३स्व
रान् । हाहो२३४हा । वमू३वा५यिदा६४६ः । हे२३४
५(३) ॥ १८ * ॥ [७]

॥ क्रौञ्चाद्यम् ॥ सोमाःपवौहो । ताइन्दवाः । अस्म

---

* ऊ० गा० १५प्र० २ख० १८सा० ।

१ २ ४ २र १र र
भ्यङ्गा३ । तूवा३यिता५मा६५६: । मित्रास्त्वानौहो ।

२र १र २र १ २ ४
आरेपमाः । सुवाधिया३: । सूवा३यिर्वा५यिदा६५६: ॥(१)

२र र १र र २र १ २र र र १ २
तेपूतासौहो । वीपश्चिताः । सोमासोदा३ । धा आ३

४ २र र १र र २ १र २
ग्गा५यिरा६५६: । सूरासोनौहो । दर्शतासाः । जिग

१ २ ४ २ र १र र
त्नवो३ । ध्रूवा३घा५र्त्ताँ६५६यि ॥(२) सुषाणासौहो ।

२र १ २ र र १ २ ४
वीयद्रिभायिः । चितानागो३: । आधा३यित्वा५चा६५

२ १ र २र १ २ १
यि । दूषमस्त्रौहो । भ्यामभिताः । समस्वरा३न् । वा

२ ४
सू३वा५यिदा६५६:(३) ॥ १ * ॥ [८]

४र ३ ४ २ ४
॥ यज्ञायज्ञीयम् ॥ सोमाऽ५:प । वा ३ न्ता ३ इन्दा

५ १ २१ २ २ १ १र
वाः । आस्मभ्यङ्गा । तूवायित्ता३माः । मित्रा २स्वा ।

२ २ १ २ १ १र
नाआ२३रे । ऊम्मायि । पा३साः । . सूवाधियःसुवा२

३ २ १ २ १र र र र र र
विंदा३ ॥(१) दास्तायि । पूतासोविपश्चितःसोमासोदा ।

---

* ऊ० गा० १६प्र० १ख० १सा० ।

२ १ २ र १र १ २ १
धा३आशा३यिराः । सूरा२सः । नदा२३र्षा । ऊम्मा

२ २ १ र ३१ १
यि । ता३साः । जायिगत्नबोधवार२घृनाउ ॥(२) तायि

२ १र र र र र २ १ १ २
सू । षाणासोव्यद्रिभिश्चितानागोः । आ३धायित्वा३चा

१ १ २ १ २ ९
यि । दूषा२म । समभ्यार३मा । ऊम्मायि । भा३यिताः ।

१ ३ १ १११
सामस्वरन्वमूर२विदाउ । वा३४५(३) ॥ १४ * ॥ [९] २०

अयायापवेति-तृचात्मकं पञ्चमं सूक्तम्,

तत्र, प्रथमा ।

३ १ ३ १ २ १र १र
अयापवापवस्वैनावसूनि

३ १ २ १ १ २ ३ १ २
माᳫंश्चत्वइन्दोसरसिप्रधन्व ।

२२ १ २ ३ २ ३ २ ० १
ब्रधृश्चिद्यस्यवातोनजूतिं

२ ३ १ २ १ १ २ ३ १ २
पुरुमेधाश्चित्तकवेनरन्धात् ॥ १ † ॥

हे सोम ! "अया" अनया "पवा" पवमानया "धारया" "एना" एनानि "वसूनि" धनानि "पवस्व" क्षर [ पवा—

* ऊ० गा० २३प्र० १ख० १४गा० ।

† ऋ० का० ६, १, ५, ९ ( २भा० १४२ पृ० )=ऋ० बे० ७, ४, २१, १ ।

पूञ् पवने (क्र्या० प०) "अन्येभ्योऽपि दृश्यन्ते (३,२,१७८)"—इति विच् प्रत्ययः, आर्द्धधातुक-लक्षणो गुणः, "सावेकाच (६,१,१६८)"—इति तृतीयाया उदात्तत्वम्]। तथा हे "इन्दो!" त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके वसतीवर्याख्ये "प्रधन्व" प्रगच्छ। "यस्य" सोमस्य शोधने सति "अश्नश्चित्" सर्वेषां प्रज्ञापको मूलभूतो वा आदित्योऽपि "वातः न" वायुरिव "जूतिं" वेगं प्राप्तः सन् किञ्च "पुरुमेधश्चित्" बहुविध-यज्ञ इन्द्रोऽपि "तकवे" [तकतिर्गति-कर्म्मसु पठितः (निघ० २, १४, ६८), अस्मादौणादिक उन् प्रत्ययः] सोमं गच्छत; मह्यं "नरं" कर्मनेतारं पुत्रं "धात्" ददातु प्रयच्छतु। स त्वं प्रधन्वेति पूर्वेण सम्बन्धः॥

"यस्य"-"अत्र"—इति पाठौ, "जूतिं"-"जूतः"—इति, "धात्"-"दात्"—इति च॥ १॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ २

उतनएनापवयापव

१ २ ३ २ ३ १ २ ३ २

स्वाधिश्रुतेश्रवाय्यस्यतीर्थे।

३ २ ३ १ २ २ १ २ २ २

षष्ठिꣳसहस्रानैगुतोवसूनि

१ २ ३ ३ १ २ ३ १ २

वृक्षन्नपक्वन्धूनवद्रणाय॥ २ *॥

* ऋ० वे० ७, ४, २१, ३।

हे सोम ! "उत" अपिच "अवाय्यस्य" सर्वैः श्रवणीयस्य तव "श्रुते" प्रसिद्धे [ यद्वा, षष्ठ्यर्थे सप्तमी श्रुत-शब्दस्य ] "तीर्थे" स्थाने "नः" अस्माकं सम्भृतं ... "एना" अनया "पवया" पूयमानया "धारया" अधिकं "पवस्व" क्षर । "नैगुतः" नीचीनं शत्रोः* [ न ... इति निगुतः शत्रवः, तेषां हन्तृत्वेन सम्बन्धी ] मध्ये साम: "षष्टिं" षष्टि-सङ्ख्याकानि "सहस्रा" सहस्राणि "वसूनि" धनानि "रणाय" शत्रूणां जयार्थं धनवत् अस्मान् कम्पनात् प्रागच्छदिति यावत् । कथमिव ? "वृक्षं न पक्वं" पक्व-फलं वृक्षं यथा कम्पयति फलार्थी तद्वत् ॥२॥

अथ तृतीया ।

२ ३ १ २ ३ १ २ १ २ ३ १र
महीमे अस्य वृषनाम शूषे

२र ३ १ २ ३ १ २
मा ३ श्चत्वे वा पृशने वा वधत्रे ।

१ २ ३ १ २ ३ १ ३ २ ३
अस्वापयन्निगुतः स्नेहयच्चापा

२ ३ २ ३ १ २ ३ २
मित्रा ३ अपाचितो अचेतः ॥ ३ † ॥ २१

"मही" महते प्रभूते "वृषनाम" [सुपां सुलुगिति ( ७, १. ३९) सुपो लुक्] वृषनामनी वर्षण-नमने, शराणां वर्षणं, शत्रूणां नम-

* 'नैगुतः—निगुतानां नितरां गोपितानाम्' -इति वि० ।

† ऋ० वे० ७, ४, २१, ४ ।

नम्, "इमे" एते हे कर्मणी "अस्य" सोमस्य "शूषे" सुखकरे* भवतः ; ये च कर्मणी "मांश्चत्वे" [अश्वनामैतत्(निघ० १,१४,१८)] अश्वैः क्रियमाणे युद्धे† तत्साध्यत्वाद् युद्धमिह गृह्यते ] "वा" अपिवा "पृशने" स्पर्शन-साध्ये बाहु-युद्धे "वधत्रे" शत्रूणां हिंसन-शीले भवतः । सः अयं "निशुनः" नीचैः शब्दायमानान् शत्रून् "अस्वापयत्" अस्वापयत् अबधीदित्यर्थः । किञ्च "स्नेहयत्" प्राद्रवयत् सङ्ग्रामाच्छत्रून् । अथ प्रत्यक्षः । हे सोम ! स त्वम् "अमित्रान्" शत्रून् "अपाचित" अपगमय । तथाच "अपाचितः" अग्नि-चयन मकुर्वतः नास्तिकान्‡ "इतः" अस्मत्सकाशात् अपाचित अपगमय [अञ्चतिर्गतिकर्मा(धा० प०)] ॥ ३ ॥ २१

॥ औशनम् ॥ औहोहायि । अयोहायि । पवा वस्वैनावस्व२३नौ । औ३हों यि । इहा । ई३या । माऽ३ श्वत्वइन्द्रोसरसिप्रधार३न्वा । औ३हायि । इहा । ई३ या । माऽ३श्वत्वइन्द्रोसरसिप्रधार२३न्वा । औ ३ हायि ।

---

* 'शूषे—स्वापयामः अथवा शर्म शोषणाय'—इति वि० ।

† 'मांश्चत्वे—मंदनीयत्वाय'—इति वि० ।

‡ 'अपाचित—परितो वेतना भवन्ति'—इति वि० ।

२१ ऽ १ १ २२२१ २ ऽ
इहा। ई३या। ब्रध्नश्चिद्यस्यवातोनजू२३तीम्। औ३

२ ३२ ऽ१ १२२ २२१ २
होयि। इहा। ई३या। पुरुमेधाश्चित्तकवेनरा२३धा

ऽ २ ३२ १ ३ ५२२
त्। औ३होयि। इहा। ई२। या२३४। औहोवा॥(१)

२२ १२ १ २ १२२ २ २१ २ ऽ
औहोहायि। उतोहायि। नएनापवयापवा२३स्वा। औ

२ ३२ ऽ२ १ २ २ २१
३होयि। इहा। ई३या। अधिश्रुतेश्रवायियस्यतार्प

२ ऽ२ ३२ ऽ२ १
यिर्थायि। औ३होयि। इहा। ई३या। पष्ठिꣳमह

२२ २२१ २ ऽ२ ३२ ऽ१
स्नानैगुतोवस्न२३नी। औ३होयि। इहा। ई३या। वृ

१ २ २१ २ ऽ२२ ३२ १
त्रन्नपक्रन्धूनवद्रणा२३या। औ३होयि। इहा। ई२।

३ ५२२ २२१२ १२ २
या२३४औहोवा॥(२) औहोहायि। महोहायि। मे

२ ऽ२ ३२ ऽ१
अस्यवृषनामपृष्ट२३षायि। औ३हायि। इहा। ई३या ३

१२ २ २ २२.२१ २ ऽ२ २१
माꣳश्वत्विवापृश्नेवावधर२३त्रायि। औ३हायि। इहा।

ऽ१ १२ २२१ २ ऽ २
ई३या। अस्नापयन्निगुतस्नेहया२३च्चा। औ ३ होयि।

२ २ ५ २ १ र र र र १ १ २
इहा। इ ३या। अपामिवाऽ॒अपाचितो अचा२३यिताः।
५ २ ३ २ १ ३ ५ र र
औ३होयि। इहा। इ २। या २ ३ ४। औहोवा।
१ १र ३ १
ए३। दौदिहो१(३) ॥ १७ * ॥ [१]

१र २र ३र १ १ २ १
॥ इहवद्वासिष्ठम् ॥ औहोवाहा ३ होयि। इहा।
१र २ १ र १ २ ३ ४ ५ २र १ २
अयापवा। पवस्वै। नावसूना। माऽ॒स्वत्वआयि। दो
१ १ २ ३ ४ ५ २ १ २ १ र २ ३ ४
३सर। सिप्रधन्वा। ब्रध्नश्चिद्या। स्या३वा। तोनजू
५ २ १र २ १ २ २ ५
तोम्। पुरुमेधाः। चित्तक। वा३४३यि। ना३रा५
२ १ २ १ २ ३ ४ ५ २
न्या६५६त् ॥(१) उतनए। ना३पव। यापवस्वा। अ
१ २ १र २ ३ ४ ५ २ १
धिश्रुतायि। अवायि। यस्यतायिर्थायि। षष्ठिऽ॒सहा।
२ १ र २ ३ ४ ५ २ २ १र २
स्वा३नैगु। तोवेसूनी। बृहन्नपा। कधून। वा३४३त्।
२ ४ २ १ र र २ १ २ ३
रा३णा५या६५६ ॥ २) महोमिश्रा। स्या३तृष। नाम
४ ५ २र १ र २ १ र २ ३ ४ ५ २
अ्रूषायि। माऽ॒स्वत्वेवा। पृष्ठाने। वावधन्वायि। अ

* ऊ० गा० ३प्र० २अ० १७सा०।

स्वापयात्। निगुतः। सं हयच्चा। औ होवाहाइहोयि। दूहा। अपामित्वा। अपावि। ता३४३। आ३चा पूर्णिताई५६: ३) ॥ १० * ॥ [२]

॥ वार्त्रतुरम् ॥ अयापवावा पावस्वैना। वसूर२ नो। मा२अत्वइन्दोपरसि। प्रथा२३न्वा। ब्रधश्चिद्य स्य। वा। तानाजर२३४ौम्। पुरु। मायि। धाश्वि त्ताका२३। वा२३यिना३। रा३४५धोईहायि ॥ १ उत नश्रोवा। नापवया। पवा२३स्वा। अधिश्रुतेश्रवायि य। स्यना२३यिर्थायि। पष्ट२मद्वस्नाने। गृ। तोवा मू२३४नो। वृत्राम्। ना। पाह्वन्धना२३। वा२३द्रा ३। णा३४५र्यो३हायि ॥ २) महामस्रोवा। स्यात्रुपना। मघूर३पायि। मा२अत्विवापृनेवा। वधा२३चायि।

---

* कौ० गा० २प्र० २अ० १०मा०।

१ र २　१ २　१　१ ३　५　१
अस्वापयन्निगुतः । स्ने । हायार२३४चा । अपा । मा

२ १　१ ४　२
यि । चा(ऽ)अपाचार३यि । तो२३आ३ । चा२३४५यितो

५
६हायि(३) ॥ १* ॥ [३] २१

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

षष्ठः खण्डः ॥ ६ ॥

---

अथ सप्तम-खण्डे—

प्रथमदृचेऽ†, प्रथमा ।

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २　३क २र
अग्नेत्वन्नोअन्तमउतत्राताशिवोभुवोवरूथ्यः ॥ १ ॥ ‡

हे "अग्ने !" "वरूथ्यः" वरणीयः सम्भजनीयः । यद्वा, वरूथैः परिधिभिर्वृतः त्वं "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भुवः" भव । "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव ॥

"भुवः"-"भव"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० २३प्र० २ख० १मा० ।

† 'यज्ञायज्ञियमग्निष्टोमसाम'—इति वि० ।

‡ छ० आ० ५, २, २, २ (२भा० ८९८ पृ० )=ऋ० सं० ४, १, १६, १ ।

अथ द्वितीया।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः ॥ २* ॥

"वसुः" वासकः "अग्निः" सर्वेषामग्रणीः "वसुश्रवाः" व्याप्तान्नस्त्वं† "अच्छ" आभिमुख्येन "नक्षि" अस्मान् व्याप्नुहि। "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "रयिं" पश्वादि-लक्षणं धनं "दाः" अस्मभ्यं देहि‡॥

"द्युमत्तमः"-"द्युमत्तमम्"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३¶॥ २२

हे "शोचिष्ठ" अतिशयेन शोचिष्मन्! "दीदिव" स्वतेजोभि-र्दीप्ताग्ने! "तं" "त्वा" त्वां "सुम्नाय" सुखाय [सुम्नमिति सुखनामैतत् (निघ० ३, ६, १७)] तदर्थं "सखिभ्यः" समान-ख्यातिभ्यः पुत्रेभ्य§ सुखार्थञ्च "नूनम्" "ईमहे" याचामहे॥ ३॥ २२

---

* ऋ० वे० ४, १, १६, २।

† 'वसुश्रवाः—अन्नेन धनेन च सम्पन्नः'—इति वि०।

‡ 'रयिन्दाः;—रयिं धनं ददातीति रयिन्दाः,—इति वि०।

¶ ऋ० वे० ४, १, १६, ४।

§ 'सखिभ्यः-ऋत्विग्भ्यः'—इति वि०।

॥ गूढ्म्॥ ओग्नायि। त्वन्नोर२३आ। ऊम्मा२३।
ता२३४माः। उतत्राताशिवोभुवा२३४५ः। शिवोभुवा२
३ः। वरोवा। था५यो६हायि॥(१) वाहः। अ। ग्ना
यिर्वा२३सू। ऊम्मा२३। आ२३४वाः। अच्छानक्षिद्युम
त्तमा२३४५ः। द्युमत्तमा२३ः। रयोवा। आ५यिन्दो
६हायि॥(२) तान्त्वा। शो। चायिष्ठा२३री। ऊम्मा
२३यि। दी२३४वाः। सुम्नायनूनमीमहा२३४५यि। न
मीमहा२३यि। सखोवा। भा५यो६हायि(३)॥१८*॥[१]

सत्रासाहीयम्॥ अग्ना३४यि। त्वन्नोअन्तमः। ओ
ईवा। उतत्रा२ता। शा२यिवो। भु२३वाः। वरौ
३हो। वाहा३४३यि। था२३४यो६हायि॥(१) वह्न३४ः।
अग्निर्वसुश्रवाः। ओ६वा। अच्छाना२ह्वायि। द्यू२मा।

* ऊ० गा० ४प्र० २ख० १८सा०।

२ १ ५ १र २र २ १ ५
तार३माः । रयौ३हो । वाहा३४३यि । आर३४यिन्दो

५ ३ २ र र ५ र
६हायि ॥(२) तन्वा३४ । शोचिष्ठदीदिवः । ओ६वा ।

२ १र १ १ २ १ ५ १र
सुम्नायार्नू । नार्माथि । मार३हायि । सखौ३हो ।

१र २
वाहा३४३यि६हायि(३) ॥ १५ * ॥ [२] २२

अथ द्वितीय-तृचे†—

प्रथमा ।

३ १उ २ १ २ ३१ २ ३ १२ ३ २
इमानुकम्भुवनासीषधेमेन्द्रश्चविश्वेचदेवाः ॥ १‡ ॥

"इमा" इमानि परिदृश्यमानानि भुवनानि "नु" क्षिप्रं "सीषधेम" साधयेम वशीकरवाम । "कम्"—इति पूरकः [यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सुखं सीषधेम साधयन्तु ; पुरुषव्यत्ययः (३,१,८५) ] । "इन्द्रश्च" "विश्वे" सर्वे अन्ये "देवाः च" स्तुत्या प्रीत्या "इमम्" अर्थम् साधयन्तु ॥

"सीषधेम"-"सेषधाम"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० ११प्र० २खं० १५सा० ।

† 'गौतमस्य भद्रम्'—इति वि० । सामैतदूह्यगानस्य ।

‡ छ० आ० १, ०, ०, ६ (१भा० ६०२पृ०)=ऋ० वे० ८, ८, १५, १ ।

अथ द्वितीया।

१ १ २ ३क १र ३ १ २ ३ १र १र ३ १ १
यज्ञञ्चनस्तन्वञ्चप्रजाञ्चादित्यैरिन्द्रःसहसीषधातु॥२*॥

"नः" अस्माकं "यज्ञं" ज्योतिष्टोमादिकञ्च यागं "तन्वं" शरीरञ्च "प्रजां" पुत्रादिकाञ्च "आदित्यैः" अदिति-पुत्रैः अन्यै-र्द्देवैः सह वर्त्तमानः "इन्द्रः" "सीषधातु" साधयतु॥

"सहसीषधातु"-"सहचीक्लपानि"—इति पाठौ॥२॥

अथ तृतीया।

२ ३उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
आदित्यैरिन्द्रःसगणोमरुद्भिरस्मभ्यम्भेषजाकरत्॥३†॥२३

"आदित्यैः" अदिति-पुत्रैः मित्रादिभिः "मरुद्भिः" च "सगणः" गण-सहितः "इन्द्रः" "अस्माकम्" अस्मभ्यम् "भेष-जानि" औषधानि "करत्" करोतु॥

"भेषजाकरत्"-"भूत्ववितातनूनाम्"—इति पाठौ॥३॥२३

---

* ऋ० वे० ८, ८, १५, २।

† ऋ० वे० ८, ८, १५, ३।

अथैकगर्गात्मकं सूक्तं प्रवोर्चोपेति, चतुरक्षरात्मिका*
काचिदियमृग्रूपा; यथा बह्वृचानां
"भद्रन्नोअपिवातयमनः"—इत्येक
एव पाद ऋगात्मकश्च
तद्वत् †॥

१ २र
प्रवोर्चोप ॥ १ ॥ २४

हे ऋत्विग्यजमानाः! "वः" यूयम् "उप" समीपे "प्रार्च" प्रकर्षेणेन्द्रं पूजयत ॥ १ ॥ २४

२१ र ७
॥ उद्वंशपुत्रम् ॥ प्रवाः। आयिन्द्रायवृत्रहान्तमा

२ १ र र १ २ १ १ २
२३या। वायिप्रायगाथङ्गा२१या२३ता। याञ्जुजौवा३।

२ १ २ १
उप्। पाऽ२तोऽ३ऽ५हायि ॥(१) अर्चा। ताम्रर्क्कम्मरु

---

* वस्तुतस्तु "प्रवोर्चोप"—इति नैषा चतुरक्षरात्मिका ऋक् प्रत्युत छन्दआर्चिक-श्रुतायाः "प्रवइन्द्रायवृत्रहन्तमाय (५, १, १० । १भा० ८९५पृ०)"—इत्यस्याः प्रतीकं "प्रवः"—इति, किञ्च "अर्चन्त्यर्कम्मरुतःस्वर्का (५,०,१,९ । १भा० ८९४पृ०)"—इत्यस्याः प्रतीकम् "अर्च" —इति, तथैव "उपप्रक्षेमधुमतिक्षियन्तः (५, १, १, ८ । १भा० ८९३पृ०)"—इत्यस्याः प्रतीकम् "उप"—इति, एवमेव सम्पन्नं "प्रवोर्चोप" —इति, ऊहगान-तृतीयप्रपाठकान्तिममुद्रंश पुत्रसाम (१००पृ०) सामैवात्र बद्धमान मन्यथा तस्य मूलीभूत-ऋचस्यालाभ एव सर्वथा स्यात्। अन्यत्राप्यदर्शनात्।

† 'उद्वंशपुत्रीऽच्छावाकसाम। "प्रवइन्द्राय"—"अर्चन्त्यर्कम्"—"उपप्रक्षे"—एषामृचश्छन्दसिका-भाष्ये उक्तार्थः'—इति वि०।

ता:सुवार२३र्का:। आस्तोभतिश्रुतो१यू३वा। स आ२३उ वा३। उप्। आ॑ऽ२यिन्द्रो३५ हायि॥(२) उपा। प्रा ऽसेमधुमतायिच्चिया२३न्ता:। पूर्ष्णेमरयिन्धा१इ्म्मा३हा यि। तआ३उवा३। उप्। आ॑ऽ२यिन्द्रो३५ हायि(३)॥१८*॥[१]२४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य सप्तमः खण्डः† ॥ ७॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः॥ ७॥

॥ इति चतुर्थस्यार्द्धः प्रपाठकः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे उत्तराग्रन्थे सप्तमोऽध्यायः‡॥ ७॥

---

* ऊ० गा० ३प्र० २अ० १९सा०।

† 'षष्ठमञ्च: समाप्तः। इष्ट्यावरूद्ध: समाप्तः'—इति वि०।

‡ 'इति चतुर्थप्रपाठकस्य प्रथमार्द्धः'—इति वि० पदकारादिमलग्रन्थसम्मतश्च।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ८ ॥

## ॥ अथाष्टमाध्याय आरभ्यते* ॥

तत्र,

प्रकाव्यमिति प्रथमे खण्डे—

द्वादशर्चे† प्रथमे सूक्ते—

प्रथमा ।

१ २र ३ १ २ ३ २
प्रकाव्यमुशनेवब्रुवानो
३ २ ३ १ ३ १ २
देवोदेवानाञ्जनिमाविवक्ति ।
१ २ २ १ २ ३ २
महिव्रतःशुचिबन्धुःपावकः
३ १ २ ३ २ ३र २र ३ १ २
पदावराहोअभ्येतिरेभन् ॥ १ ‡ ॥

"उशनेव" एतन्नामक ऋषिरिव "काव्यं" कवि-कर्म्म स्तोत्रं "ब्रुवाणः" उच्चारयन् "देवः" स्तोता "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि "प्र विवक्ति" प्रकर्षेण ब्रवीति [ वच परि-

* 'इदानीं छन्दोमा वाच्याः । ते च त्रयः व्यूढच्छन्दस्कानुष्टुभः प्रतिपदो भवन्ति त्रिष्टुभां स्तोकजगत्यः जगतीनां गायत्र्यः । ब्राह्मणेन ऋषय उक्ताः'—इति वि० ।

† 'प्रकाव्यमुशनेव ब्रुवाण इति द्वादशर्चो भवति । चतुर्विंशस्तौमिकश्चेदमहः' —इति वि० । द्वादशार्चः खण्ड इति यावत् ।

‡ ऋ० सा० ६, १, ४, २ ( १ भा० १०९४० )=ऋ० वे० ७, ४, ११, १ ।

भाषणे ( अदा० प० ) व्यत्ययेन विकरणस्य श्लुः ( ३, १, ३९ ), "बहुलञ्छन्दसि ( ७, ४, ७८ )"—इत्यभ्यासस्येत्वम् ], "महिव्रतः" प्रभूतकर्म्मा, "शुचिबन्धुः" [ बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा ] दीप्ततेजस्कः, "पावकः" पापानां शोधकः, "वराहः" वरञ्च तदहश्च वराहः [ "राजाहः सखिभ्यष्टच् ( ५, ४, ९१ )"—इति टच् समासान्तः ; तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान् ; अर्श आदित्वान्मत्वर्थीयोऽच् ( ५, २, १२७ ) ] तादृशः सोमः "रेभन्" रेभनं शब्दं कुर्वन्, "पदा" पदानि पात्राणि "अभ्येति" अभिगच्छति ; यद्वा, यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत् ॥ १ ॥

अथ द्वितीया।

२ ३ २ ३ १ २ ३ २ ३ ३
प्रहꣳसासस्तृपला*वग्नुमच्छा†

२ ३ ३ १ २
मादस्तंवृषगणाअयासुः।

३ २ ३ १ २ २ १ २
अङ्गोषिणः‡म्पवमानꣳसखायो

३ १ २ ३ १ २ १ २ ३ २
दुर्मर्षंवाणम्प्रवदन्तिसाकम्¶ ॥ २ § ॥

---

* "तृपलं"—इति
† "मन्युम्"—इति
‡ "आङ्गूष्य"—इति
¶ "साकं प्रवदन्ति वाणम्"—इति च
} ऋ०-पाठाः।

§ ऋ० वे० ७, ४, ११, ३।

"हंसासः" शत्रुभिर्हन्यमाना हंसाइव आचरन्तो वा* "वृषगणाः" एतन्नामका ऋषयः† "अमात्" शत्रूणां बलात् त्रासिताः सन्तः "तूपला" तूपलं [ सुपां सुलुगिति सोराकारादेशः (७, १, ३९)। तूपल-शब्दः चिप्र-वाची, तदुक्तं यास्केन —"तूप्रप्रहारी चिप्रप्रहारी ( निरु० नै० ५, १२ )"—इति ] चिप्रं प्रहारिणं‡ "वग्नुम्" अभिषव-शब्दम्¶ "अच्छ" अभिलक्ष्य§ "अस्तं" यज्ञगृहं "प्रायासुः" प्रायासिषुः प्रगच्छन्ति। ततः "सखायः" स्तुत्य-स्तोतृत्व-लक्षणेन सम्बन्धेन सखिभूताः स्तोतारः "अङ्गोषिणं" सर्वैरभिगन्तव्यं‖ [ यद्वा, अङ्गोषिणं स्तोत्रार्हं ], "दुर्मर्षं" शत्रुभिः दुर्धरं दुःसहम्; एवंविधं "पवमानं" सोमम् उद्दिश्य "वाणं" वाद्यविशेषं** "साकं" सहैव "प्र वदन्ति" प्रवादयन्ति तदुपलक्षितं गानं कुर्वन्तीत्यर्थः॥ २ ॥

---

* 'हंसासः—आदित्य-रश्मयः'—इति वि०।

† 'वृषगणाः—मेक्षार मरुताः'—इति वि०।

‡ तूपला—लोक-प्रयस्य पालकाः'—इति वि०। "शोभो वेन्द्री वा"—इति निरु० नै० ५, १२।

¶ 'वग्नुं—बलम्'—इति वि०।

§ 'अच्छ—आप्तुम्'—इति वि०।

‖ 'अङ्गोषिणम्—उष दाने दीप्तौ च * * * दीप्तं सोमं'—इति वि०।

** 'वाणं—वादित्र-विशेषम्, यथा वाणस्य शततन्त्रीकस्य जायते शब्दः तद्वत् सोमस्य जायमानस्य महान् शब्दः'—इति वि०।

अथ तृतीया।

१ २          ३ १ २ ३ २उ
सयोजत*उरुगायस्यजूतिं

२  १ २       ३ १र २र
वृथाक्रीडन्तम्मिमतेनगावः।

२   १ २    ३ १ २ ३
परीणसङ्कृणुतेतिग्मशृङ्गो

२ ३  २ ३१ २३१२ ३ २
दिवाहरिर्द्दहशेनक्तमृज्रः॥ ३ †॥

"सः" सोमः "उरुगायस्य" बहुभिः स्तुत्यस्य आत्मनः‡ "जूतिं" गतिं¶ "योजते" युनक्ति अन्तरिक्षे प्रेरयति। "वृथा क्रीडन्तम्" अनायासेन विहरन्तं गच्छन्तं सोमं "गावः" अन्ये गन्तारः "न मिमते" न परिच्छिन्दन्ति मातुं न शक्नुवन्तीत्यर्थः। किञ्च "तिग्मशृङ्गः" [ शृणवन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि ] तीक्ष्ण-तेजस्कः "परीणसं" [ बहुनामैतत् (निघ० ३, १, ७) बहुविधं तेजः§ "कृणुते" करोतु अन्तरिक्षे वर्त्तमानो यः सोमः "दिवा" अहनि "हरिः" हरितवर्णः "ददृशे" दृश्यते

* "सरंहत"—इति ऋ० पाठः।

† ऋ० वे० ७, ४, १२, ३।

‡ 'उरुगायस्य—बहुविधस्य गानस्य'—इति वि०।

¶ 'जूतिं—प्रतिशब्दम्'—इति वि०।

§ 'परीणसं—परि समन्तात् गावो नीयन्ते परीणसः, तम्'—इति वि०।

न प्रकाशत इत्यर्थः, "नक्त" रामो तु "ऋज्रः" ऋजुगामी* विसृष्टः प्रकाशयुक्तो दृश्यते†॥ [ददृशे—दृशेः कर्मणि लिटि रूपम्॥ ३॥

अथ चतुर्थी।

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रस्वानासोरथाइवार्वन्तोनश्रवस्यवः।
१ २ ३ १ २
सोमासोरायेअक्रमुः॥ ४‡॥

"स्वानासः" अभिषव-वेलाया मुपरवेषुण शब्दं कुर्वन्तः "सोमासः" सोमाः "रथा इव" यथा शब्दं कुर्वन्तो रथाः तथा, "अर्वन्तो न" यथा शब्दं कुर्वन्तो अश्वाः तथा, "श्रवस्यवः" अन्नेभ्यः सकाशादन्नमिच्छन्तो "राये" यजमानानां धनाय "प्राक्रमुः" प्रगच्छन्ति॥ ४॥

अथ पञ्चमी।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
हिन्वानासोरथाइवदधन्विरेगभस्त्योः।
१ २ ३ १ २
भरासःकारिणामिव॥ ५ §॥

---

* 'ऋज्रः—ऋज गतौ नक्त्रो भवति'—इति वि०।

† 'एतदुक्तं भवति—दिवाभिषिक्तः सोमो रात्रिपर्यायेषु पुनर्निषिच्यते, योऽभिषवं करोति तस्यायं दोषः सम्पद्यते'—इति वि०।

‡ ऋ० वे० ९, ७, २४।

¶ यूपस्य गर्त्ता उपरवा उच्यन्ते। तद्विधायकञ्चैतत् कात्यायन-सूत्रम्—"दक्षिणस्थानसोऽधः प्रादेशं खनत्युपरवानभ्यादि करोत्यवटवदिति (८, ४, २५)"। यथा यूपस्यावटः क्रियते तथावाप्युपरवनामकांश्चतुरो गर्त्तानभिस्तीकार मारभ्य परिलेखन पूर्वकं कुर्यादिति च तदर्थः।

§ ऋ० वे० ९, ७, २४।

"रथाइव" युद्धदेशं प्रति यथा रथाः तथा* "हिन्वानासः" यागदेशं प्रति गच्छन्तः† सोमाः ऋत्विजां "गभस्त्योः" बाह्वोः "दधन्विरे" धीयन्ते। तत्र दृष्टान्तः—"भरासः" भराः "कारिणामिव"‡ यथा भारवाहानां बाह्वोर्धीयन्ते तद्वत् ॥ ५ ॥

अथ षष्ठी।

१ २ ३ १र २र ३ १ २ ३ १ २
राजानोनप्रशस्तिभिःसोमासोगोभिरञ्जते।

३ १उ ३ १ २ १ २
यज्ञोनसप्तधातृभिः ॥ ६ ¶ ॥

"सोमासः" सोमाः "प्रशस्तिभिः" प्रशस्ताभिः स्तुतिरूपाभिः वाग्भिः "राजानो न" यथा राजानः§ "सप्तधातृभिः"‖ सप्त-होताभिः "यज्ञो न" यथा च यज्ञः तथा "गोभिः" गोविकारैः पयोभिः "अञ्जते" अज्यते संश्लिष्यत इति ॥ ६ ॥

---

* 'रथाइव—गमन-स्वभावाः'—इति वि०।

† 'हिन्वानासः—पूयमानाः'—इति वि०।

‡ 'कारिणाम् इव—कारिणः रथ-वाहकाः अथवा भराः सङ्ग्रामाः सङ्ग्राम-कारिणः—इति वि०।

¶ ऋ० वे० ९, ७, ३४।

§ 'राजानो न—न शब्द उपमार्थीयः राजान इव, राजानो यथा प्रशस्तिभिः बध्यन्ते सेव्यन्ते तद्वत् सोमासः गोभिरिज्यते; उदकैः क्षीरैर्वा'—इति वि०।

‖ 'सप्तधातृभिः—सप्त वषट्कारिणो सप्त धातारः अथवा सप्त छन्दांसि सप्त धातारः'—इति वि०।

अथ सप्तमी।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १
परिस्वानासइन्दवोमदायबर्हणागिरा।
१ २ ३ १ २
मधोअर्षन्तिधारया॥ ७ *॥

"स्वानासः" सुवानाः अभिषूयमाणाः "इन्दवः" सोमाः "बर्हणा" महत्या "गिरा" स्तुति-रूपया वाचा युक्ताः सन्तः "मदाय" मदार्थं "मधोः" मधुर-रसस्य "धारया" "परि अर्षन्ति" परितो गच्छन्ति॥

"परिस्वानासः"-"परिसुवानासः"—इति पाठौ, "मधोः" -"सुताः"—इति च॥ ७॥

अथ अष्टमी।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
आपानासोविवस्वतोजिन्वन्तउषसोभगम्।
२ ३ २ ३ १ २
सूराअण्वंवितन्वते॥ ८ †॥

"विवस्वतः" दीप्तिमतः इन्द्रस्य "आपानासः" आपानभूताः "उषसः" "भगं" शोभां "जिन्वन्तः" प्रेरयन्तः "सूराः" सरन्तः‡

* ऋ० व० ६, ७, ३४।

† ऋ० वे० ६, ७, ३८।

‡ 'सूराः—सूर्या इव दीप्तिमन्तः'—इति वि०।

सोमाः "अयवं वि तन्वते"* अभिषव-वेलाया मुपरवेषु शब्दं कुर्वन्ति ॥

"जिन्वन्तः"-"जनम्"—इति पाठौ ॥ ८ ॥

अथ नवमी।

१ ३ १ २ ३ २ ३ १ २ ३ १ २
अपद्वारामतीनाम्प्रत्नाऋण्वन्तिकारवः।
१ ३ १२ ३ १ २
वृष्णोहरसआयवः ॥ ६ † ॥

"मतीनां कारवः" स्तुतीनां कर्त्तारः "प्रत्नाः" पुराणाः "वृष्णः" सेचकस्य सोमस्य "हरसः"‡ आहर्त्तारः "आयवः" मनुष्याः ऋत्विजः "द्वारा" यज्ञस्य द्वाराणि "अप ऋण्वन्ति" विवृण्वन्ति ॥ ६ ॥

अथ दशमी।

३ १ २ ३ १ २ ३ १ २
समीचीनासआशतहोतारःसप्तजानयः।
३ १र २र ३ १ २
पदमेकस्यपिप्रतः ॥ १० ¶ ॥

---

* 'अयवं वितन्वते—सूक्ष्मं वितानं कुर्वन्ति'—इति वि०।

† ऋ० वे० ६, ७, ३५।

‡ "हरसः"—इति तु ऋग्वेदीयच्छेदः, सामवेदीयस्तु "हरसे"—इति, पद-ग्रन्थे तथैव दर्शनात्, व्याख्यातश्चैवमेव विवरणकृतापि—'हरसे दीप्तये'—इति।

¶ ऋ० वे० ६, ७, ३५।

"समीचीनासः" समीचीनाः* "जानयः" जाति-सदृशाः "एकस्य" सोमस्य "पदं" स्थानं "पिप्रतः" पूरयन्तः "सप्त होतारः"† यज्ञे "आशत" व्याप्नुवन्ति ॥

"आशत"-"आसत"—इति पाठौ, 'जानयः"-"जामयः" —इति च ॥ १० ॥

अथैकादशी।

२ ३ १ २ ३ १ २ ३ १ २ ३ १२ ३१
नाभानाभिन्नआददे चक्षुषा सूर्य्यन्दृशे।
३ १र २ ३ १ २
कवेरपत्यमादुहे ॥ ११ ‡ ॥

"नाभिं" यज्ञस्य नाभिभूतं सोमं "नः" अस्माकं "नाभा" नाभौ अहम् "आददे" सोमं पीत्वा नाभि-स्थाने करोमीत्यर्थः। किमर्थम्? "चक्षुषा" "सूर्यं" "दृशे" द्रष्टुम्। किञ्च, "कवेः" क्रान्त-कर्म्मणः सोमस्य "अपत्यम्" अंशुम् "आ दुहे" आ पूरयामि¶ ॥

"चक्षुषासूर्यन्दृशे"—"चक्षुश्चित्सूर्यैसचा"—इति पाठौ ॥ ११ ॥

---

* 'समीचीनासः—समीचीन-गुणाः सोमाः'—इति वि०।

† 'होतारः—देवानामाह्वातारः। सप्त जानयः—सप्त जनाः, वषट्कारिणः— होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, अच्छावाकः, आग्नीध्र इति' —इति वि०।

‡ ऋ० वे० ६, ७, २५।

¶ 'कवेः अपत्यम् आदुहे—कविर्मेधावी ब्राह्मणः तस्यापत्यत्वं गच्छति सोमः, तेन निष्पादितत्वात्। आदुहे दुहने समापयामि सोमम्'—इति वि०।

अथ द्वादशी।

३ १ २ ३ १ ३ १ २ ३ १ २ ३ १ ३ १ २ ३ २
अभिप्रियन्दिवस्पदमध्वर्युभिर्गुहाहितम्।
१ २ ३ १ २
सूरःपश्यतिचक्षसा ॥ १२ * ॥ १

"सूरः" सुवीर्यः इन्द्रः "चक्षसा" चक्षुषा "दिवः" दीप्तस्य आत्मनः "प्रियं पदम्" अध्वर्युभिः "गुहा" गुहायां हृदये "हितं" निहितं पीतं सोमम्† "अभि पश्यति" ॥

"प्रियम्"-"प्रिया"—इति पाठौ‡ ॥ १२ ॥

१ २ १ २ १ २ ५
॥ पार्थम् ॥ ओ३हो३होयि। प्रकावियाम्। उश
२ २३४ ५ २१ २ १२ २ १ २ ३४
ने। बभ्रुवाणाः। देवोदेवा। ना३ञ्जनि। माविव
५ २ १ २ १ १२३४५ २ २ १
क्ती। मह्रिव्रताः। शुचिब। धूःपवाकाः। पदावरा।
२ १ २ २ ४
हो३अभि। आ३४३यि। तो३रा५ यिभा६ ५ इन् ॥ (१)
२ १२ ११ २ १२३४५ २ २ १
प्रहंससाः। तृपला। वग्नुमच्छा। अमादस्ताम्।
२१ २ ३ ४ ५ २ २ १ २ १ २
वृषग। णाअयासूः। अङ्गोषिणाम्। पवमा। नं

* ऋ० वे० ९, ७, ३४।

† 'गुहायां द्रोणकलशे हितं सोमाख्यं पदम्'—इति वि०।

‡ "चक्षसा"—"चक्षुषा"—इति च बोध्यम्।

३ ४ ५ २१ २ १ २ २ ४
सखायाः। दुर्मर्षंवा। णा३म्प्रव। दा३४३। तो३सा

२र १ २१र १२४ ५
पूकाई५६म् ॥(२) सयोजनायि। उरुगा। यस्यजूतीम्।

२र १र २ १ १२४ ५ १र १
वृथाक्रीडा। जा ३ म्मिम। तेनगावाः। परीणसाम्।

२१र २ ३ ४५ २ २ २ र १
कृणुते। तिग्मशृङ्गाः। ओ३हो३होयि। दिवाहरा

११र २ १ ४
यिः। दहशे। ना३४३। क्ता३मा५ऑ६५६:(३) ॥५*॥ [१]

१र र १ २१र
॥ वाराहम ॥ हाउहाउ। ऊप। प्रकावियाम।

११र १३४ ५ २र१रर २ १ २
उशने। वभ्रवाणाः। देवोदेवा। ना३जनि। मा

२ ४५ १ १ २ २ ३ ४ ५ १२र
विवक्ति। महिव्रताः। शुचिबा३। धुःपवाकाः। पदा

२ १ २ २ ४
वरा। हो३अभि। आ३४३यि। तो३रा५यिभा६

२ १ र २१र २३४ ५ १
४६न ॥(१) प्रहꣳसासः। तृपला। वग्नमच्छा। अ

१र २१ २ ३ ४ ५ २ १र
मादस्ताम्। वृषग। णा अयासूः। अङ्गोषिणाम्।

२ २ ३ ४ ५ २१ २०१ २
पवमा। नꣳसखायाः। दुर्मर्षंवा। णा३प्रव। दा

---

* ऊ० गा० ६प्र० २अ० ५सा०।

२ ४ १ १र ११
३४३। तो३सा५क्का६५६म् ॥(२) सयोजतायि। उरु
र २३४५ २१र र २ १ २३
गा। यस्यजूतीम्। वृथाक्रीडा। ता३म्मिम। तेन
४ ५ २१र २१र २ ३ ४ ५ २र
गादाः। परीणसाम्। कृणुते। तिग्मशृङ्गाः। हाउ
र १ २१र २१र२ २
हाउ। ऊप्। दिवाहरायिः। दद्दशोना३४३। क्षा
४
३मा५र्जो६५६ः(३) ॥ १८ * ॥ [२]

२र१ २ १र
॥ प्रवङ्गार्गवम् ॥ प्रक्काबियाम्। उशनेवा। ब्रू
१र २रर१र १र १ १
२वाणाः। देवोदेवा। नाञ्जनिमा। वा२यिवक्तायि।
२ १ २ १ १र २र १
महिव्रताः। शुचिबन्धः। पा२वाकाः। पदावरा।
२र १ १र १ २ १र
होअभियायि। तो२रेभा३नाउ ॥(१) प्रहव्सासाः।
२१र १ २र१ २१
तृपलावा। ग्र२मच्छा। अमादस्ताम्। वृषगणाः।
१र २र १ २१र १र
आ२यासूः। अङ्गोषिणाम्। पवमानाम्। सा२खा
२ १ २१ १र२ १
याः। दुर्मर्षेवा। णांप्रवदाः। तो२साका३माउ ॥(२)

* ऊ० गा० १६प्र० १ख० १८सा०।

संयोजतायि। उरुगाया। स्या२जूतीम्। वृथाक्रीडा। तम्मिमते। ना२गावाः। परीणसाम्। कृणुतेतायि। ग्मा२श्टगाः। दिवाच्चरायिः। दद्दशेना। क्ता२मृत्रा ३१उ। वा२३४५ः(३)॥ २ *॥[३]

॥ कुत्ससारथीयम्॥ द्यो४वा। उद्भवा३। द्योवा। प्रकावियाम्। उग्नने। वब्रुवाणाः। देवोदेवा। ना ३ञ्जनि। माविवक्री। मद्विव्रताः। शुचिव। धूःप वाकाः। पदावरा। द्यो३अभि। ऐनिरिभान्॥(१) प्र च ऽसासाः। तृपला। वग्नुमच्छा। अमादस्ताम्। वृष ग। णायत्रासूः। अङ्गोषिणाम्। पवमा। नऽसखा याः। दुम्मर्षवा। णा३प्रव। दन्तिसाकाम्॥(२) स योजतायि। उरुगा। यस्यजूतीम्। वृथाक्रीडा। ता

* ज० गा० २३प्र० १ख० ६सा०।

१ २ ३ ४ ५ २ १ २ २ १ १ १ २ २ १
इग्मिम। तेनगावाः। परीणसाम्। कृणुते। तिग्म

४ ५ २ १२ १ १ २ १ २ २ ३ ४ ५ २
शृङ्गाः। दिवाहरायिः। ददृशे। नक्तमृज्राः। हो४

५ २ २ ४ ५ ५
वा। उहुवा३। होवा६हाउवा(३) ॥ ६ * ॥ [४] १

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयखण्डे —

असृग्रमिति द्वादशर्चं† प्रथमं सूक्तम् ;

तत्र, प्रथमा ।

१ २ ३ १ २ ३ १ २ २ ३ १ २ ३ १ १
असृग्रमिन्दवःपथाधर्मन्नृतस्यसुश्रियः ।

२ १ २ ३ १ २
विदानाअस्ययोजना ॥ १ ‡ ॥

"अस्य" अनेन यजमानेन कृतान् "योजना" तद्देवता-योग्यान् सम्बन्धान् "विदानाः" जानन्तः "सुश्रियः" शोभन-श्रयणाः "असृग्रम्" हविर्द्धानात् सृज्यन्ते ॥

"योजना"-"योजनम्"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १३प्र० २ख० ६सा० ।

† 'द्वितीयो द्वादशर्चः'—इति वि० खण्डः-इति यावत् ।

‡ ऋ० वे० ६, ७, १८ ।

अथ द्वितीया।

२उ ३ १ २ ३ २ ३ १ २ ३ १ २र २र
प्रधारामधोअग्रियोमहीरपोविगाहते।
३ २ ३ १ २ ३ १ २
हविर्हविःषुवन्द्यः॥ २†॥

"हविःषु" हविषां मध्ये "वन्द्यः" स्तुत्यः "हविः" हवि-रात्मकः यः सोमः "महीः" महतीः "अपः" वसतीवरीः "वि-गाहते", तस्य "मधोः" सोमस्य "अग्रियः" मुख्या धाराः प्रपत-न्तीत्यर्थः॥

"मधोः"--"मध्वः"—इति पाठौ॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
प्रयुजावाचोअग्रियोवृषोअचिक्रदद्वने।
२ ३ २ ३ १ २ ३ १
सद्माभिसत्योअध्वरः॥ ३‡॥

"अग्रियः" हविषां मध्ये मुख्यः सोमः "युजाः" युक्ताः "वाचः" प्रकरोतीत्यर्थः। एतदेव दर्शयति—"वृषः"¶ कामानां वर्षकः "सत्यः" सत्यभूतः "अध्वरः" हिंसा-वर्जितः सोमः

---

* "हविष्षु"—इति ख० ग० पु०-पाठः।

† ऋ० वे० ६, ७, १८।

‡ ऋ० वे० ६, ७, १८।

¶ "वृषोअचिक्रदत्"—इति मूलस्य "वृषः", "अचिक्रदत्"—इति छेदमवलम्ब्य व्याचष्टे सायणः, परमेष पदग्रन्थ-विरुद्धः तत्र "वृषा", "उ", "अचिक्रदत्"—इति छेद-दर्शनात्; अतएव विवरणकार आह,—'वृषा सेक्ता, उ इति पदपूरणः'—इति।

"सद्म" यज्ञगृहं "अभि" प्रति "वने" उदके अचिक्रदत् शब्दं करोतीत्यर्थः ॥

"वृषोअचिक्रदत्"—"वृषावचक्रदत्"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी।

२ ३ १र २र ३ २ ३ १ २ ३ १र २र

परियत्काव्याकविर्नृम्णापुनानोअर्षति।

१र ० १ २

स्ववाजीसिषासति॥ ४ * ॥

"कविः" क्रान्तकर्मा सोमः "नृम्णा" नृम्णानि बलानि† "पुनानः" शोधयन् "काव्या" काव्यानि कवि-कर्माणि स्तोत्राणि "यद्" यदा "परि अर्षति" परिगच्छति, तदा "स्वः" स्वर्गे "वाजी" बलवान् अन्नवान्वेन्द्रः‡ "सिषासति" यागं प्रत्यागन्तुं स्वकीयं बलं सम्भक्तुमिच्छति ॥

"पुनानः"--"वसानः"—इति पाठौ ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ २उ ३ २ ३ १ २

पवमानोअभिस्पृधोविशोराजेवसीदति।

१ २ ३ १ २ ३ १ २

यदीमृण्वन्तिवेधसः ॥ ५ ¶ ॥

---

* ऋ० वे० ९, ७, १८।

† 'नृम्णा धनेन'—इति वि०।

‡ 'वाजी—वेगवान्, अथवा चरुपुरोडाशादि-लक्षणेनान्नेनान्नवान् स्वर्गलोकं यजमानस्य साधयति'—इति वि०।

¶ ऋ० वे० ९, ७, १९।

"यद्" यदा "ईम्" एनं* सोमं "वेधसः" कर्मणां कर्त्तारः ऋत्विजः† "ऋण्वन्ति" प्रेरयन्ति, तदा "पवमानः" चरन्नेव सोमः "स्पृधः" स्पर्द्धमानान् याग-विघ्नकारिणः राक्षसादीन् "अभि सीदति" नाशयितुमभिगच्छति। तत्र दृष्टान्तः—"विशः राजा इव" यथा राजा विशः स्पर्द्धमानान् मनुष्यान् नाशयितुमभिगच्छति तद्वत् ॥ ५ ॥

अथ षष्ठी।

२ ९ २३ १ २ ३१उ ३ १ २
अव्यावारेपरिप्रियोहरिर्वनेषुसीदति।
३ १ २ ३ २
रेभोवनुष्यतेमती ॥ ६ ¶ ॥

"हरिः" हरितवर्णः "प्रियः" देवानां प्रियतम एव सोमः "वनेषु" उदकेषु§ सम्पृक्तः "अव्याः" अवेः "वारे" वाले "परि सीदति" किञ्च 'रेभः" अभिषव-वेलायाम् उपरवेषु शब्दं कुर्वन् "मती" मत्या स्तुत्या|| "वनुष्यते" सेव्यते ॥ ६ ॥

---

* 'ईम्—इति पदपूरणः'—इति वि०।

† "वेधाः"—इति मेधावि-नामसु निघण्टौ दृश्यते (३, १५)

‡ "अव्यो"—इति ऋ०-पाठः।

¶ ऋ० वे० ६, ७, २९।

§ 'वनेषु उदकेषु सीदति, अथवा वनेषु काष्ठमयेषु द्रोणकलशेषु प्रचमसादिषु सीदति'—इति वि०।

|| 'मती—बुद्ध्या ऋत्विग्यजमानानाम्'—इति वि०।

अथ सप्तमी।

१ ३ १र २र ३ १ २ ३ १र २र
सवायुमिन्द्रमश्विनासाकम्मदेनगच्छति।
२ ३ १ २ ३ १ २
रणायोअस्यधर्मणा* ॥ ७ † ॥

"यः" यजमानः "अस्य" सोमस्य "धर्मभिः"‡ कर्मभिः क्रयणाभिषवादिभिः "रण"¶ रमते, "सः" यजमानः "वायुम्," "इन्द्रम्," "अश्विना" अश्विनौ च "मदेन" "साकं" सह "गच्छति" प्राप्नोति ॥ ७ ॥

अथाष्टमी।

२ ३ १र २र ३ १ ३ १ २ ३ १ २
आमित्रेवरुणेभगेमधोःपवन्तऊर्मयः§।
३ १ २ ३ १ २
विदानाअस्यशक्मभिः ॥ ८ ‖ ॥

---

* "धर्मभिः"—इति ऋ०-पाठः।

† ऋ० वे० ६, ७, २९।

‡ धर्मभिरिति ऋग्वेदीयपाठमवलम्ब्यैवेदं प्रतीक-ग्रहणं व्याख्यानञ्च; विवरण-कद्व्याख्यातन्तु सामवेदीयम् तथाहि—'धर्मणा कर्मणा'—इति।

¶ "रणाः" दीर्घान्तश्रुतिः "द्व्यचोऽतस्तिङः ( ६, ३, १३५ )"—इति मन्त्र दीर्घः।

§ "मित्रावरुणाभगंमध्वः"—इति ऋ०-पाठः।

‖ ऋ० वे० ६, ७, २९।

येषां यजमानानां "मधोः" सोमस्य "ऊर्मयः" तरङ्गाः "मित्रावरुणा"* मित्रावरुणौ देवौ "भग"† भगाख्यं देवञ्च प्रति "पवन्ते" चरन्ति, ते यजमानाः "अस्य" सोमस्य इदं सोमं "विदानाः" जानन्तः "शक्मभिः" सुखैः‡ सङ्गच्छन्त्विति शेषः॥ ८॥

अथ नवमी।

३ १ २ ३ २उ ३ १ २ ३ १२

अस्मभ्यꣳरोदसीरयिम्मध्वोवाजस्यसातये।

२ ३ १ २ ३ १ २

श्रवोवसूनिसम्भितम् ॥९¶॥

हे "रोदसी" द्यावापृथिव्यौ! युवां "मध्वः" देवानां मादयितुः "वाजस्य" सोमात्मकस्यान्नस्य "सातये" लाभाय§ "अस्मभ्य" "रयिं" धनं "श्रवः" अन्नञ्च|| "वसूनि" वासकान्यन्यान्यपि पश्वादीनि "सम्भितं" सम्भृतं** प्रयच्छतमित्यर्थः॥ ९॥

---

*, † ऋग्वेदीयपाठानुसारेणेदं प्रतीकग्रहणम्। विवरणकृता तु सुष्ठूक्तं—'मित्रे, वरुणे, भगे–सप्तम्येकवचनं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्, मित्राय, वरुणाय, भगाय'—इति।

‡ 'शक्माभिः—शक्मैः कर्मभिः'—इति वि०।

¶ ऋ० वे० ६, ७, ०९।

§ 'सातये—दानार्थम्'—इति वि०।

|| श्रवः—अन्नं यशो बलं वा'—इति वि०।

** 'संयतं—सम्यक् यतम्'—इति वि०।

अथ दशमी।

२ ३१ २ ३ १ ३१ २ ३१ २
आतेदक्षम्मयोभुवंवह्निमद्यावृणीमहे।

२ ३ १ २३ १ २
पान्तमापुरुस्पृहम्॥ १० *॥

हे सोम! यष्टारो वयं "ते" तव स्वभूतं "दक्षं" बलम् "अद्य"† अस्मिन् यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे। कीदृशम्? "मयोभुवं" सुखस्य भावकम् "वह्निं" धनादीनां प्रापकम् "पान्तं" शत्रुभ्यो रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं कामानाम्॥ १०॥

अथैकादशी।

२ ३ १र २र ३ २उ ३ १ २ ३ १ २
आमन्द्रमावरेण्यमाविप्रमामनीषिणम्।

२ ३ १ २३१ २
पान्तमापुरुस्पृहम्॥ ११ ‡॥

हे सोम! "मन्द्रं" मदकरं स्तुत्यं वा त्वाम् "आ वृणीमहे" "वरेण्यं" सर्वैर्वरणीयं सम्भजनीयञ्च; किञ्च "विप्रं" मेधाविनं त्वां तथा "मनीषिणं" मनसईषा मनीषा तद्वन्तं स्तुतिमन्तं वा त्वामावृणीमहे [प्रत्येकं विशेषणापेक्षया, आ-इत्युपसर्गः

---

* ऋ० आ० ६, १, २, २ (२ भा० ५६ पृ०)=ऋ० वे० ७, २, ६, ३।

† मूले तु "निपातस्य च (६, ३, १३६)"—इति दीर्घान्तः "अद्या"—इति।

‡ ऋ० वे० ७, २, ६, ४।

क्रतः*; किञ्च "पान्तं" सर्वेषां रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं च त्वां सम्भजामहे ॥ ११ ॥

अथ द्वादशी।

२ ३ १र १र ३ र ३ १ २ ३ २
आरयिमासुचेतुनमासुक्रतीतनूष्वा।
२ ३ १ २ ३ १ २
पान्तमापुरुस्पृहम् ॥ १२ † ॥ २

हे "सुक्रती" शोभन-प्रज्ञ सोम! त्वदीयं "रयिं" धनम् वयम् "आ"‡ वृणीमहे। किञ्च, "सु चेतुनम्" [चिती सञ्ज्ञाने (भ्वा० प०) भावे औणादिक उन प्रत्ययः] सुज्ञानञ्च। किञ्च "तनूषु" अस्मत्पुत्रेषु च धनं सुज्ञानञ्च त्वम् "आ" विधेहि यद्वा पुत्रार्थं वयमावृणीमहे। तथा "पान्त" सर्वस्य रक्षकं "पुरुस्पृहं" बहुभिर्यष्टृभिः काम्यमानं त्वां सम्भजामहे ॥ १२ ॥ २

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य द्वितीयः खण्डः¶ ॥ २ ॥

---

* विवरणकारस्त्वन्यथैव व्याचष्टे—'आमन्द्रम्—आनुपूर्व्येण मन्द्रं बलम्'—इति, 'आवरेण्यम्—आभिमुख्येन वरेण्यं तत्'—इत, 'आविप्रम—अतिशयेन विपश्चितम्'—इत्यादि च।

† ऋ० वे० ७, २, ६, ५।

‡ अत्राप्यन्यथा व्याख्यातं विवरणकृता—'आरयिम्—आभिमुख्येन धनवन्तम्'—इत्यादि।

¶ 'उक्तं बहिष्पवमानम्'—इति वि०।

अथ तृतीय-खण्डे,*प्रथम-तृचे—

प्रथमा ।

३ १ २ ३ १ २३ १ २ ३ १
मूर्द्धानन्दिवो अरतिम्पृथिव्या

२ ३ २ ३ २ ३ २ ३ २
वैश्वानरमृत आजातमग्निम् ।

३ १ ३ २ ३ १ २ ३ १ २
कविᳬसम्राजमतिथिञ्जनाना

३ २३ १ २ ३ २
मासन्नःपात्रञ्जनयन्तदेवाः ॥ १ † ॥

"मूर्द्धानं" शिरोभूतं, कस्य ? "दिवः" द्युलोकस्य, "पृथिव्याः" प्रथितायाः भूमेः "अरतिं" गन्तारम् [यद्वा, गन्तव्यं स्वामिनं], "वैश्वानरं विश्वेषां नराणां सम्बन्धिनम्, "ऋते" [ऋतमिति सत्यस्य यज्ञस्य वा नाम ( निघ० ३,१०,६ )। निमित्त-सप्तम्येषा (२,३,३६वा०)]ऋतनिमित्तम् "आ" आभिमुख्येन जातं सद्या-दावुत्पन्नं "कविं" क्रान्तदर्शिनं "सम्राजं" सम्यग्राजमानं "जनानां" यजमानानाम् "अतिथिं" हविर्वहनाय सततं गन्तारं [ यद्वा, अतिथिवत् पूज्यम् "आसन्" आसनि [ द्वितीयार्थे सप्तमी (३,१,८५), अग्नि-लक्षणेनास्येन हि देवा हवींषि भुञ्जते ] "नः" अस्माकं "पात्रं" पातारं रक्षकं वैश्वानरमग्निं

* 'इदानीमाज्यानि'—इति वि० ।

† ऋ० आ० १, २, २, ५ (१ भा० २०४ पृ०) = य० वे० ७, २४ = ऋ० वे० ६, ७, १ ।

"देवाः" स्तोतारः ऋत्विजः देवा एव वा "आ जनयन्त" यज्ञाभिमुख्येन अजीजनन् अरण्योः सकाशात् उदपादयन्॥

"आसन्नःपात्रम्"-"आसन्नापात्रम्"—इति पाठौ॥ १॥

अथ द्वितीया।

१र २र ३ १ २ ३
त्वांविश्वेअमृतजायमान७

२ ३ २ ३ २ ३ १र २र
शिशुन्नदेवाअभिसन्नवन्ते।

२ ३ १ २ ३ १ २ ३
तवक्रतुभिरमृतत्वमायन्

१र २ ३ २ ३ १र २र
वैश्वानरयत्पित्रोतदीदे॥ २ *॥

हे "अमृत" मरण-रहिताग्ने! "विश्वे देवाः" स्तोतारः "जायमानम्" अरण्योः सकाशात् उत्पद्यमानं त्वां "शिशुं न" पुत्रमिव "अभि सं नवन्ते" अभिसंस्तुवन्ति [ यद्वा, दीव्यन्तीति देवा रश्मयः ते सर्वे जायमानं त्वामभिसन्नवन्ते अभिगच्छन्ति, यथा पितरः पुत्रमभि गच्छन्ति ], अपि च हे वैश्वानर अग्ने! "यद्" यदा "पित्रोः" पालयित्रोः द्यावा-पृथिव्योर्मध्ये "अदीदेः" दीप्यसे, तदानीं "तव" त्वदीयैः "क्रतुभिः" कर्मभिः ज्योतिष्टो-मादिभिर्यागैः "अमृतत्वम्" देवत्वम् "आयन्" यजमानाः प्राप्नु-वन्ति॥ २॥

---

* ऋ० वे० ४, ५, ८, ४।

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ २
नाभिंयज्ञाना५ँसदन५ँरयीणां

३ १ २ ३ २ ३ १र २र
महामाहावमभिसन्नवन्त।

३ २ क २र ३ १ २
वैश्वानर५ँरथ्यमध्वराणां

३ १ २ ३ १ २ ३ २
यज्ञस्यकेतुञ्जनयन्तदेवाः॥ २ *॥ ३

"नाभिं यज्ञानां"†, "सदनं रयीणां" धनानां स्थानमेक-निलयं, "महां" महान्तम् "आहावम" आह्वयन्ते अस्मिन्नाहुतय इत्याहाव· तादृशं [यद्वा, वृष्ट्युदक-धाराणामाहाव-स्थानीय मेव-भूतम्] अग्निम् "अभि सं नवन्त" स्तोतारः सम्यक् स्तुवन्ति। तथा "वैश्वानरं" विश्वेषां नराणां सम्बन्धिनम् अध्वराणां यज्ञानां "रथ्यं" रथिनं, यथा रथी स्व-रथं नयति तद्वन्नेतारं रंहितारं गमयितारं‡ "यज्ञस्य" "केतुं" प्रज्ञापकम्¶ एवं-विधमग्निं "देवाः" स्तोतार ऋत्विजो देवा एव वा§ "जन-यन्त" जनयन्ति मन्थनेनोत्पादयन्ति॥ २॥ ३

* ऋ० वे० ४, ५, ९, २।

† 'नाभिं यज्ञानां—प्रधानभूतं सदनम्'—इति वि०।

‡ 'रथ्यं—रथभूतं रंहणीयं वा'—इति वि०।

¶ 'केतुं—ध्वजम्'—इति वि०।

§ 'देवाः—दानवन्त ऋत्विजः'—इति वि०।

अथ द्वितीय-तृचे—

प्रथमा।

१ २ ३ १ २ ३ १ २ ३ २ ३ १
प्रवोमित्रायगायतवरुणायविपागिरा।
१ २ ३ २ ३ ३ २
महिक्षत्रावृतम्बृहत्॥ १ *॥

हे मदीया ऋत्विजः! "वः" यूयमित्यर्थः। "मित्राय" "वरुणाय" "विपा" व्याप्तया "गिरा" स्तुत्या "गायत" स्तुतिं कुरुत [स्तुया स्तुतेत्येतत् पाकं पचतीतिवत्]। हे "महिक्षत्रौ" प्रभूत-बलौ युवाम् "ऋत" यज्ञं † "बृहत्" महत् अपि प्रशस्तं स्तुत्यर्थमागच्छतमिति शेषः [अथवा "महत्" प्रभूतम् "ऋत" स्तोत्रं शृणुतमिति शेषः॥ १॥

अथ द्वितीया।

३ २ ३ २ ३ १ २ ३ २ ३ १र २र
सम्राजायाघृतयोनीमित्रश्चोभावरुणश्च।
३ २ ३ १ २ ३ २
देवादेवेषुप्रशस्ता॥ २ ‡॥

"या" यौ "मित्रश्च" "वरुणश्च" [परस्परापेक्षया च-शब्दः] "उभा" उभौ "सम्राजा" सम्राजानौ सर्वस्य स्वामिनौ "घृतयोनी"

* ऋ० वे० ५, ४, ६, १।

† 'ऋत सत्यम्'—इति वि०।

‡ ऋ० वे० ५, ४, ६, २।

उदकस्योत्पादकौ "देवा" द्योतमानौ "देवेषु" मध्ये "प्रशस्ता" प्रकर्षेण स्तुत्यौ तौ स्तुत्या गायतेति पूर्वेणान्वयः॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३१ २ ३ २ ३ १ २
तानःशक्तम्पार्थिवस्यमहोरायोदिव्यस्य।

१ २ ३ २ ३ १ २
महिवाङ्क्षत्रन्देवेषु॥ ३ *॥ ४

"ता" तौ देवौ "नः" अस्मदर्थं "पार्थिवस्य" पृथिवी-सम्बन्धस्य "दिव्यस्य" दिविभवस्य च "महः" महतः "रायः" धनस्य "शक्तं" समर्थम्, भवतं दातुमिति शेषः। हे देवौ! "वां" युवयोः "महि" महत् पूज्यं "क्षत्रं" बलं देवेषु प्रसिद्धं, स्तुम इति शेषः॥ ३॥ ४

अथ तृतीय-तृचे—

प्रथमा॥

१र २र ३ २ ३ २ ३ १ २
इन्द्रायाहिचित्रभानोसुताइमेत्वायवः।

१ २ ३ १ २ ३ १ २
अण्वीभिस्तनापूतासः॥ १ †॥

"चित्रभानो" हे विचित्र-दीप्ते "इन्द्र!" अस्मिन् कर्म्मणि "आयाहि" आगच्छ। "सुताः" अभिषुताः "इमे" सोमाः

---

* अत्रैव पुनः ६, ३, ११, १=ऋ० वे० ४, ४, ६, ३।

† य० वे० २१, ३=ऋ० वे० १, १, ५, ४।

"त्वायवः" त्वां कामयमाना वर्त्तन्ते । "अण्वीभिः"* [ अङ्गुलिनामैतत् ( निघ० २, ५, २ ) ] ऋत्विजा मङ्गुलिभिः सुता इत्यन्वयः । किञ्च, ते सोमाः "तना" नित्यं "पूतासः" शुद्धाः ऊर्णा-पवित्रेण शोधितत्वात् ॥ १ ॥

अथ द्वितीया ।

१र २र ३२ ३ १र २र ३ १ २
इन्द्रायाहिधियेषितोविप्रजूतःसुतावतः ।
२ ३ १ २ ३ १ २
उपब्रह्माणिवाघतः ॥ २ * ॥

हे "इन्द्र!" त्वम् "आयाहि" अस्मिन् कर्मणि आगच्छ । किमर्थम्? "वाघतः" [ ऋत्विङ्नामैतत् ( निघ० ३, १८, ३ )] ऋत्विजः "ब्रह्माणि" वेद-रूपाणि स्तोत्राणि "उप" एतुम् । कीदृशस्त्वम्? "धिया" अस्मदीयया प्रज्ञया "इषितः" प्राप्तः, अस्मद्भक्त्या प्रेरित इत्यर्थः । "विप्रजूतः" यथा यजमान-भक्त्या प्रेरितः तथान्यैरपि विप्रैः मेधाविभिः ऋत्विग्भिः प्रेरितः ! कीदृशस्य? "वाघतः?" "सुतावतः" अभिषुत-सोम युक्तस्य ॥२॥

अथ तृतीया ।

१र २र ३ १ २ ३ २ ३ १ २
इन्द्रायाहितूतुजानउपब्रह्माणिहरिवः ।
३ १ २ ३ १ २
सुतेदधिष्वनश्चनः ॥ ३ ‡ ॥ ५

---

* 'अण्वीभिः—सूक्ष्माभिः वीथिभिः'—इति वि० ।

† ऋ० वे० १, १, ५, ५ ।

‡ ऋ० वे० १, १, ५, ६ ।

[हरि-शब्दः इन्द्र-सम्बन्धिनोरश्वयोर्नामधेयम् "हरी इन्द्रस्य, लोहितोऽग्नेः (नि०१,१५,१-२)"—इति तदीयाश्व-नामत्वेन पठितत्वात्] हे "हरिवः" अश्व-युक्तेन्द्र! त्वं "ब्रह्माणि" आनेतुम् "आ याहि"। कीदृशस्त्वम्? "तूतुजानः" त्वरमाणः। आगत्य च अस्मिन् "सुते" सोमाभिषव-युक्ते कर्म्मणि "नः" अस्मदीयं "चनः" [अन्न-नामैतत् (निरु० नै० ६,१६)] हविर्लक्षणमन्नं "दधिष्व" धारय स्वीकुर्व्वित्यर्थः॥ ३॥ ५

अथ चतुर्थ-तृचे—

प्रथमा ।

१ २　३ १ २ १ २ ३ १ ३ १ २　३ १ २
तमीडिष्वयोअर्च्चिषावनाविश्वापरिष्वजत्।
३ १　३ १ २ ३ १ २
कृष्णाकृणोतिजिह्वया॥ १ *॥

हे स्तोतः! "तम्" अग्निम् "ईडिष्व" स्तुहि, "यः" अग्निः "अर्चिषा" ज्वाला-रूपेण तेजसा "विश्वा" सर्व्वाणि "वना" वनान्यरण्यानि "परिष्वजत्" परिष्वजति परितो वेष्टयति, यश्च तानि वनानि "जिह्वया" ज्वालया दग्ध्वा "कृष्णा" कृष्णवर्णानि "कृणोति", तमीडिष्वेति सम्बन्धः॥ १॥

* ऋ० वे० ४, ८, २८, ५।

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
यइन्द्रआविवासतिसुम्नमिन्द्रस्यमर्त्यः।
३ १ २ ३ १ २ ३ २
द्युम्नायसुतराअपः॥ २ *॥

"यः" "मर्त्यः" मनुष्यः "इद्धे" दीप्ते अग्नौ "सुम्नं" सुखकरं हविः "इन्द्रस्य" [ चतुर्थ्यर्थे षष्ठी (२, ३, ६२) ] इन्द्राय "आविवासति" परिचरति प्रयच्छति, तस्य मर्त्तस्य "सुम्नाय" द्योतमानायान्नाय तदर्थं "सुतराः" सुखेन तरणीयाः "अपः" उदकानि वृष्ट्यात्मकानि, इन्द्रः करोत्विति शेषः॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ ३ ३ १ २
तानोवाजवतीरिषआशून्पिपृतमर्वतः।
१ २ ३ २ ३ १ २
एन्द्रमग्निञ्चवोढवे॥ ३ †॥ ६

हे इन्द्राग्नी! "ता" तौ युवां "वाजवतीः" अन्नवतीः "इषः" इष्यमाणा "वृष्टीः" [ यद्वा, वाजो बलं तद्वतीः इषः अन्नानि ] "आशून्" शीघ्रगान् "अर्वतः" अश्वांश्च "नः" अस्मभ्यं "पिपृतम्

* ऋ० वे० ४, ८, २९, १।

† ऋ० वे० ४, ८, २९, १।

पूरयतम् प्रयच्छतम्। किमर्थम्? "इन्द्रम्" "अग्निञ्च" "आ वोढवे" आ समन्तात् वोढुं हविर्भिः प्रापयन्तु ॥ ३ ॥६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य तृतीयः खण्डः * ॥ ३ ॥

---

अथ चतुर्थ-खण्डे,† प्रथम-तृचे—

प्रथमा।

१ १ ७ २ ३ १ २ ३ १उ
प्रोअयासीदिन्दुरिन्द्रस्यनिष्कृतं

२ २ ३ २र २र ३ १ १
सखासख्युर्नप्रमिनातिसङ्गिरम्।

१ २ ३ २ ३ १ २ ३
मर्यइवयुवतिभिःसमर्षति

१ २ ३ १ २ ३ १ १ ३ २
सोमःकलशेशतयामनापथा ॥ १ ‡ ॥

"इन्दुः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थानमुदरं "प्रो अयासीत्" प्रैव गच्छति; गत्वा च "सखा" सखिभूतः "सख्युः"

* 'उक्तं प्रातःसवनं चतुर्विंशस्तौमिकम्'—इति वि०।

† 'इदानीं माध्यन्दिनं सवनम्। इषाषव वृषारयेभिं सन्तनि-प्रभृतीनि सामानि ब्राह्मणेनोक्तार्थानि, पुनानः सोमधारयेति कण्व-रथन्त-प्रभृतीनि सामानि बार्हस्पत्यानि'—इति वि०।

‡ छ० आ० ६, २, २, ४ (२भा० १७९पृ०) = ऋ० म० ७, ३, ११, १।

इन्द्रस्य "सक्किरं" सम्यग् गिरणाधारभूतम् उदरं "न" "प्र मिनाति" हिनस्ति, किञ्च "मर्य इव युवतिभिः" मर्त्तो यथा तरुणीभिः स्त्रीभिः सह सङ्गतो भवति तद्वदयमपि सोमो युवतिभिर्मिश्रण-शीलादिभिर्वसतीवरीभिरद्भिः सह "समर्षते" सङ्गच्छते अभिषव-काल-पश्चात् सोमः "शतयामना" अनेक-यामन-साधन-वित्तोपेतेन "पथा" मार्गेण दशापवित्र-सम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः यद्वैकमेव वाक्यम्—यथा मर्यो मर्त्तो युवतिभिः सह सङ्गच्छते एवं कलशे शत-यामना पथा सङ्गच्छते॥

"शतयामना"—"शतयाम्ना"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २
प्रबोधियोमन्द्रयुवोविपन्युवः

२ १ २ ३ १ २
मनस्युवःसंवरणेष्वक्रमुः।

२ ३ १ १ ३ क २र ३ २ ३
हरिङ्गोडन्तमभ्यनूषतस्तुभो

२ ३ १ ३ २ ३ १ २
भिधेनवःपयसेदशिश्रयुः॥ २ *॥

हे सोमाः "वः" युष्माकं "धियः" ध्यातारः† "मन्द्रयुवः" मदकरं शब्दं कामयमानाः "पनस्युवः" स्तुतिं कामयमानाः

---

* ऋ० वे० ७, ३, १४, २।

† 'धियः—बुद्धयः'—इति वि०।

"विपन्यवः" [—स्तोतृ-नामैतत्*) स्तोतारः "संवरेषु" तृण-कटा-वरणोपेतेषु याग-गृहेषु "प्राक्रमुः" प्रक्रमन्ते। तदेवाह— "स्तुभः" स्तोतारः† "हरिं" हरितवर्णं "क्रीड़न्तं" क्रीड़न-शीलं सोमम् "अभ्यनूषत" अभिष्टुवन्ति "धेनवः" अपि "पयसा" स्वीयेन क्षीरेणैव "इत्" इमं सोमम् अभिलक्ष्य "अशिश्रयुः" अधिकं श्रीणन्ति॥

"संवरणेषु"-"संवसनेषु"—इति पाठौ, "हरिङ्क्रीड़न्तं"-"सोमम्मनीषां"—इति च, "पयसेदशिश्रयुः"-"पयसेमशिश्रयुः"—इति च ॥ २ ॥

अथ तृतीया।

१ २ ३ ० ९ २ २ ३ २ ३
आ नः सोम संयतम्पिप्युषीमिष
० ३ १ २ ३ १ २ ० १ २
मिन्दो पवस्व पवमान ऊर्मिणा ।
२ ३ १ २ ३ २उ ९ १ २
या नो दोहते त्रिरहन्नसश्चुषी
३ १र ९र ३ १ २ ३ १ ९
क्षुमद्वाजवन्मधुमत्सुवीर्य्यम् ॥ ३ ‡॥ ७

---

* "विपन्यवः"—इति निघण्टौ मेधावि-नामसु सप्तदशं पदम् ( ३, १५ )।

† 'स्तुभः—स्तोभवत्यः'—इति वि०।

‡ ऋ० वे० ७, २, १५, ३।

हे "इन्दो" दीप्त! "सोम!" "पवमानः" त्वं "नः" अस्माकं "संयतं" सङ्गृहीतं "पिप्युषीं" प्रवृद्धम्* "इषम्" अन्नम् "ऊर्म्मिणा" प्रवाह-रूपेण तदीयेन रसेन "पवस्व" प्रयच्छेत्यर्थः । "या" इट् "नः" अस्माकम् "अहन्" अहनि अह्नः "त्रिः" त्रिषु सवनेषु "असश्चुषो" अप्रतिबन्धेन† "दीहते" । किम् ? "द्युमत्" शब्दोपेतं सर्व्वत्र श्रूयमाणं "वाजवत्" बलवत् "मधुमत् माधुर्य्योपेतं "सुवीर्य्यं" शोभन-सामर्थ्यं पुनः दोहते । तामिषं पवस्वेति समन्वयः ॥

"ऊर्म्मिणा"-"अभ्रियम्"—इति पाठौ ॥ ३ ॥ ७

२र १र १ १
॥ प्रवङ्गार्गवम् ॥ प्रोश्रयासायित् । इन्दुरिन्द्रा । स्या
१ २ र १ २ १ १
२निष्कृताम् । सखासख्यूः । नप्रमिना । ता२यिस
२ १ २ १ १
ङ्गिराम् । मर्य्यइवा । युवतिभायिः । सा२मर्षतायि ।
२र १ २र १ १र १ १ र
सोमःकला । शशतया । मा२नापथा३१उ ॥(१) प्रवो
१ २ १ १ २ १
धियो । मन्द्रयुवो । वा२यिपन्युवाः । पनस्युवाः ।
२ १ १ २ १र २ १
संवरणायि । पू२वक्रमूः । च्चरिङ्कोडा । तमभ्यन् । षा

---

* 'पिप्युषी'—पानेच्छाम्'—इति वि० ।

† 'असश्चुषी—अानुपूर्व्येण'—इति वि० ।

२तस्तुभाः। अभिधेना। वःपयसायित्। आ२श्रिश्र
यू३राउ॥(२) आनःसोमा। संयतम्यायि। प्यू२षीमि
षाम्। इन्दोपवा। स्वपवमा। ना२ऊर्म्मिणा। यानो
टोहा। तेत्रिरद्दान्। आ२सश्रुषायि। त्तुमद्वाजाः।
वन्मधुमात्। सू२वीरियाउमाउ। वा२३४५(३)॥७*॥[१]

॥ कावम्॥ प्रवो। अयामोदिन्दुरिन्द्रा। स्यनि
ष्कात्तो२म्। सखासख्युर्नप्रमिना। तिसङ्गायिरा२म्।
मर्यइवयुवतिभायिः। समर्षाता२३यि। सोमा३ःकाला।
शेभ्रतायाऽ२३। माना३पा५थाई५६॥(१) प्रवोवा। धि
योमन्द्रयुवे। विपन्यूवा२ः। पनस्युवःसंवरणायि। षु
वक्रामू२ः। हरिंक्रीडन्तमभ्यनू। षतस्त्वभा२३ः। आ
भी३धेना। वःपयासा२३यित्। आशा३यिश्रा५यू६

* ऊ० गा० ४प्र० १ख० ७सा०।

२र ९ र १र १
५६ ॥(२) आनोवा। सोमसंयतम्मायि। प्युषीमायि
१ र २ र १ १र र
षा२म्। इन्दोपवस्वपवमा। नऊर्म्मायिणा२। यानो
र र २ १ १२ ४५ १
दोह्वतेत्रिरह्वान्। असश्चपा२३यि। द्युमा३द्वाजा। व
१ १२ ४
न्मधूमार३त्। सुवा३यिरा५याथ५६म(३)॥ १० *॥ [२]
७र २ ३र ५र १
॥ लौशाद्यम्॥ प्रोअयासीत्। इन्दुरिन्द्रा २ ३।
४ २ १ ५ ३२र ३ ५ १ ४ २
स्या३निष्कृतम्। सखासख्युः। नप्रामिना२३। तीङ्स
३ ५ ३ २ ३४ १ ४ २३ ५
ङ्गिरम्। मर्य्य इव। युवतिभा२३यिः। सा३मर्षति।
३र२ २ ५ १र २ ४
सोमःकला। प्रशतया २ ३। मना३पा५था६५६ ॥(१)
३०र ३ ५ १ ४ २३ ५ ३१३ ५
प्रवोधियः। मद्रयुवो२३। वा३यिपन्युवः। पनस्युवः।
१ ४ २२ ५ ३ २ ७र ५ १
सुवरणा२३यि। पू३वक्रमुः। हरिक्रीड। तमभ्यनू२३।
४ २ ३ ५ ७ २३र ५ १ २
षा३तस्तुभः। ऊअभिधेना। वःपयसा२३यित्। अभा
४ ७र २ ३र ५ १
३यिआ५यू६५६ः ॥(२) आनःसोम। संयतपा २ ३ यि।

* ऊ० गा० ६प्र० १अ० १०मा०।

४ १र ३ ५ ३ १र ३ ५ १ ४ १र ३
प्यू३षीमिषम्। इन्दोपव। स्वपवमा २ ३। ना३ऊर्म्मि

५र ३र २र ३र ५ १र ४ र ३ ५र ३ १
णा। यानोदोह। तेन्विरद्दा२३न्। आ३सस्तुषी। तूम

३र ५ १ १ ४
द्वाजा। वन्मधुमा २ ३ त्। सुवा ३ यिरा ५ या ६ ५

६ म् (३) ॥ ११ * ॥ [३]

३र २ ३ ५ २ ३
॥ यज्ञसारथिम् ॥ प्रोआया२३४मीत्। इन्दूरा२३

५ १ २ १ २ १ ३ २ ३
४यिन्द्रा। स्यानिष्कृता३म्। होयि। सखासा२३४

५ २ ३ ५ १ २ १ २ १
ख्यूः। नप्रामी२३४ना। तायिमङ्गिरा३म्। होयि।

३ २ ३ ५ २ ३ ५ १ २ १ २
मर्य्याई२३४वा। युवाती२३४भायिः। सामर्षता३यि।

१ ३र २ ३ ५ ३र ३ ५ १ ३र
होयि। सोमाःका२३४ला। प्रशाता२३४या। माना

१ २ १ ३ २ ३ ५ २ ३
पथा३। हो२३४५ई ॥(१) प्रवोधी२३४यो। मन्द्रायू२

५ १ २ १ २ १ ३ २ ३ ५
३४वो। वायिपन्युवा३ः। होयि। पनास्यू२३४वाः।

२ ३ ५ १ २ १ २ १ ३ २ ३
संवारा२३४णायि। पूवक्रमू३ः। होयि। इरायिन्द्रा

* ज० गा० ७प्र० २ख० ११सा०।

५ २ ३ ५ १ २ १ १ १
२३४यिडा। तमाभ्या२३४नू। षातस्तुभा३ः। चोयि।
३१ ३ ५ २ ३ ५ १ १ १ २
अभायिधे२३४ना। वःपाया२३४सायित्। आग्निश्रयू३ः।
१ ३१ २ २ ५ २ ३ ५
चो२३४५ई॥(२) आनाःसो२३४मा। संयाता२३४म्पो।
१ २१ १ २ १ ११ ३ ५ २ १
प्यूषीमिषा३म्। होयि। इन्दोपा२३४वा। स्वपावा२३
५ १ १२ १ २ १ ३१ २ ३ ५
४मा। नाऊर्म्मिणा३। चोयि। यानोदो२३४द्दा।
२१ ५ १ २ १ १ १ ३ २ ३
तेचोरा२३४द्दान्। आसस्वषा३यि। होयि। त्तुमादा
५ २ ५ ५ १ २१ १ २ १
२३४जा। वन्माधू२३४मात्। सुवीरिया३म्। हो२३
४५ई। डा(३)॥५॥[४]

२१ २ १ २१ १२
॥वाराहम्†॥ द्दाउद्दाउ। ऊप्। प्रोअयासायित्।
२ १ २ ३ ४ ५ २ १२ २१
इन्दुरि। द्रस्यनिष्कृताम्। सखासख्युः। नप्रमि।
१२ ३ ४ ५ २ १ २ १ २ ३ ४ ५
नातिसङ्गिराम्। मर्य्यइवा। युवति। भिःसमर्षता
२१ १ २१ १ २१ ३ २ ४
यि। सोमःकला। शेष्वत। या। मनाउपा५था ६५

* ज० गा० १०प्र० १ख० ५सा०।

† "जगतीवाराहम्"—इति ख० पु०-पाठः।

२ १र १ १ १र ३ ४ ५ १ १
६ ॥(१) प्रवोधियो। मन्द्रयु। वोविपन्युवाः। पनस्यु

२ १ १र ३ ४ ५ १ १ र २ १
वाः। संवर। णेष्ववक्रमूः। हरिक्रीडा। तमभ्य।

२र ३ ४ ५ २ १ र १ १ १र ७ २
नूषतस्तुभाः। अभिधेना। वःपय। सेत्। अशाइयि

४ २र १ र २ १ १ ३ ४र
आपुयू६५६ः ॥(२) आनःसोमा। संयतम्। पिप्युषी

५ २ १र २ १ १र ३ ४र ५ १र
मिषाम्। इन्दोपवा। स्वपव। मानऊर्म्मिणा। या

१र र २र १ २ १ ४ ५ १र र
नोदोहा। तेचिर। ह्वन्नसश्चुषाऽयि। हाउहाउ।

१ २ १ र २ १ २ ३ २ ४
ऊप्। क्षुमद्वाजा। वन्मधु। मत्। सुवाइरापुयाइ५

६म्(३) ॥ १५ * ॥ [५]

२र १ १र र ४ २
॥ अपामीवम् ॥ प्राश्रा। यासीदिन्दुरिन्द्राइस्याइनि

१ ५ २ १ २ ४ २ ३ ५ २
ष्कृतम्। सखा। सख्युर्नप्रमिनाइतीइसङ्गिरम्। म

१ २ ४ २ ३ ५ २र १ २
र्य्योः। इवयुवतिभाइयिःमाइमर्षति। सोमाः। कल

र ३ १ ४ २ १ १ र
शेशतया। मनाइपापुथाइ५६ ॥(१) प्रवो। धियोमन्द्र

* ऊ० गा० १३प्र० १अ० १५सा०।

४ १२५ २१ १ ४ २१५
युवोऽ३वाऽ३यिपन्युवः। पना। स्युवःसंवरणाऽ३यिषूऽ३वक्रमुः।
२१ २र ४ १२५ ११ २र
हरायिम्। क्रीडन्तमभ्यनूऽ३षाऽ३तस्तुभः। अभायि। धे
र १२ ४ १र १ २र
नवःपयसेत्। अशाऽ३यिआ५यूऽ६५ऽ६ः॥(२) आनाः। सो
४ २र १५ ११ १
मसंयतम्याऽ३यिप्यूऽ३षी मिषम् इन्दो। पवस्वपवमाऽ३ना
१र १ ५र १र१ १र र ४ २१५
ऽ३ऊर्म्मिणा। यानो। दोहते। त्रिरह्वाऽ३नाऽ३सश्चुषी।
२१ २र ३२ ४
क्षुमात्। वाजवन्मधुमत्। सुवाऽ३ यिरा ५ या ६ ५
६ म्(३)॥ १८ *॥[६] ७

अथ नकिरिति प्रगाथरूपे द्वितीयसूक्ते†—

प्रथमा।

२ ३१र २र ३१२१ २३१२
नकिष्टङ्कर्मणानशद्यश्चकारसदावृधम्।
१३२३ २ ३१२३ १ २३१२ ३१र २र
इन्द्रन्नयज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टन्धृष्णुमोजसा॥ १ ‡॥

---

* ऊ० गा० २३प्र० २ख० १८सा०।

† 'उक्तो माध्यन्दिनः पवमानः। बृहत्पृष्ठं वामदेव्यं मैत्रावरुणं साम अभिनिधनं काण्वं अच्छसाम वैखानसमच्छावाकसाम'—इति वि०।

‡ ऋ० आ० १, १, १, १ (१भा० ५०२पृ०)=ऋ० वे० ६, ५, ८, २।

"तं" जनम् अन्यो मर्षको जनः "कर्मणा" हननादि-व्यापारेण "नकिः नशत्" नैव व्याप्नोति, "यः" "इन्द्रं चकार" इन्द्रमेवानुकूलं यज्ञैः साधनैश्चकार। कीदृश-मिन्द्रम्? "सदावृधं" सर्व्वदा वर्द्धकं, "विश्वगूर्त्तं" सर्व्वैस्तुत्यम्, "ऋभ्वसं" महान्तम् "ओजसा" स्वीयेन बलेन "अधृष्टं" शत्रुभिरनभिभूतम् "धृष्णुं" शत्रूणामभिभवनशीलम्॥

"धृष्णुमोजसा"—"धृष्णवोजसम्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १र २र ३ १र २र ३ १ २ ३ १ २

अषाढमुग्रम्पृतनासुसासहिंयस्मिन्महीरुरुज्रयः।

२ ३ २ ३ १ २ ३ २ ३ १ २

सन्धेनवोजायमानेअनोनवुर्द्यावक्षामीरनोनवुः॥ २ *॥८

"अषाढम्" असोढ़म् "उग्रम्" उद्गूर्णबलं "पृतनासु" शत्रुसेनासु "सासहिम्" अभिभवितारमिन्द्रं† स्तौमीत्यर्थः, "यस्मिन्" इन्द्रे "जायमाने" "महीः" महिभ्यः "उरुज्रयः" बहु-वेगाः "धेनवः" हविरादिना प्रीणयित्र्यः अजा गाव एव वा‡ "समनोनवुः" समस्तुवन्। न केवलं धेनव एव अपि तु "द्यावः" द्युलोकाः "क्षामीः" पृथिव्यश्च ¶ समनोनवुः, तत्रत्याः सर्व्वे

* ऋ० वे० ६, ५, ८, ४।

† 'सासहिं—साधन-स्वभावम्'—इति वि०।

‡ 'धनवः—गावः, आपः आदित्यरश्मयो वा'—इति वि०।

¶ 'क्षामीः—द्युलोकात् क्षेपणसमर्थाः, आदित्य-रश्मयः'—इति वि०।

प्राणिनो नमन्त इत्यर्थः "त्रिवृतो लोकाः"—इति श्रुतेः बहु-वचनम् ॥

"त्वामीः"—"त्वामः"—इति पाठौ॥ २ ॥ ८

॥ वैखानसम्॥ नकिष्टा३ङ्कर्मणानशात्। यश्चाकारा। सदावृधार३म्। सदावृधाम्। इन्द्रान्नया। ज्ञेविश्वग्। तमा२र्भ्वं तार३म्। तमृभ्वसाम्। अधाष्टे न्धा। षणुमाजमा२३। षणमोजमा३४३॥(१) अधृष्टा३न्धृष्णु मोजसा। अधाष्टन्धा। षणु मोजसा२३। षणुमोजसा। अषाढम्। यम्पृतना। सुसा२सह्वा२३यिम्। सुसासहीम्। यस्मायिन्महायिः। उरुज्रया२३ः। उरुज्रया३४३ः॥(२) यस्मिन्मा३हीरुरुज्रयाः। यस्मायिन्महायिः। उरुजया२३ः। उरुज्रयाः। सन्धायिनवो। जायमाने। अनो२नवू२३ः। अनोनवूः। द्यावाक्षामा

२ ३र १ १   १ ३र २   १
यिः। आनोनवूर३ः। अनोनवू३४३ः। ओ२ ३४ ५ई।

डा(३) ॥ ८ * ॥ [१] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
चतुर्थः खण्डः † ॥ ४ ॥

---

अथ पञ्चम खण्डे‡, प्रथम तृचे—

प्रथमा।

१ २ ३ १र २र ३ १ ३ १ २
सखायआनिषीदतपुनानायप्रगायत।

२ ३ २ ३ १र २र ३ २
शिशुन्नयज्ञैःपरिभूषतश्रिये ॥ १ ¶ ॥

हे "सखायः" सखीभूताः स्तोतार ऋत्विजः! "आ निषीदत" स्तोतुमुपविशत। अत्र "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत। ततः अभिष्टुतं सोमं "यज्ञैः" यजमानीयैः हविर्भिर्मिश्रणैश्च "श्रिये" शोभार्थं "परि भूषत" परितोऽलङ्कुरुत। तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितर आभरणैरलङ्कुर्व्वन्ति तद्वत् ॥ १ ॥

---

* ऊ० गा० ४प्र० १अ० ९सा०।

† 'उक्तानि छक्तानि'—इति वि०।

‡ 'इदानीमार्भवः पवमानः'—इति वि०।

¶ ऋ० आ० ६, २, ३, २ (२भा० २०६पृ०) = ऋ० वे० ७, ५, ७, १।

अथ द्वितीया ।

१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २

समीवत्सन्नमातृभिःसृजतागयसाधनम् ।

३ २ १ २ ३ १र २र

देवाव्यां३ऽमदमभिप्रद्विशवसम् ॥ २ * ॥

हे ऋत्विजः! "गय-साधनं" गृहस्य साधनभूतम्† "ईम्" एनं‡ सोमं "मातृभिः" मातृभूताभिः वसतीवरीभिः "संसृजत" सम्मिश्रयत, कथमिव? "वत्सन्न" यथा वत्सं मातृभिः गोभिः संयोजयन्ति तद्वत् । कीदृशम्? "देवाव्यं" देवानां रक्षकं "मदं" मदन-हेतुं "द्विशवसं" द्विगुण-वेगम् अतिशयित-बलं वा यद्वा द्वयोर्लोकयोस्तत्र स्थिता देवमनुष्या इत्यर्थः, तेषां हविर्द्दान-प्रदानेन प्रवर्द्धयितारं तं सोमम् "अभि" सं सृजत ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ १

पुनानादक्षसाधनंयथाशर्द्धायवीतये ।

१ २ ३ २ ३ १ २ ३ १ २

यथामित्रायवरुणायशन्तमम् ॥ ३ ¶ ॥ ९

* ऋ० वे० ७, ५, ७, २ ।

† "गयः"—इति निघण्टौ गृहनामस्वाद्यं पदम् ( ३, ४ ) । विवरणकृता त्वेवं व्याख्यातम्—'गयः प्राणाः, देवानां प्राण-साधनार्थं मिश्रणं सोमस्य'—इति ।

‡ "ईम्"—इति ऋग्वेदीय-पाठमवलम्ब्यैषा व्याख्या सामवेदीयपाठस्तु "ईं"—इति

¶ ऋ० वे० ७, ५, ७, ३ ।

"दक्षसाधनं" बलस्य साधनं* धनानां हृद्देर्वा साधकं सोमं "पुनाता" पवित्रेण पुनीत [पूञ् पवने (उ०) क्र्यादिः; तस्माल्लोटि "तप्तनप्तनथनाश्च (७, १, ४५)"—इति तस्य तबादेशः, पित्त्वादीत्वाभावः "शर्द्धाय" वेगार्थं† "वीतये" देवानां पानार्थं यथा भवति तथा "मित्राय" "वरुणाय" च "शन्तमम्" अतिशयेन सुखं यथा भवति तथा पुनीतेत्यर्थः॥

"शन्तमं" "शन्तमः"—इति पाठौ॥ ३ ॥ ९

२ २ २ २ ३
॥ प्रथम‡॥ हाऽ। वो३हा। वो३हा३। हा। ओ
५ १ ३ ५ २ ३ ५
२३४वा। हायि। साखायार२३४आ। नीषीदार२३४ता।
२ ३ ५ ३ ५ १ ५ ३
पूनानार२३४या। प्रार२३४गा। यार२३४ता। शायिष्ठुन्ना
५ १र ३ ५ १ ५ ३ ५
२३४या। ज्जैःपारार२३४यिभू। षार२३४त। आर२३४यायि॥(१)
२ ३ २ १ ३ ५ २ ३
सामीबार२३४त्माम्। नामातृर२३३भायिः। साज्जातार२
५ ३ ५ ३ ५ २ ३
४गा। यार२३४सा। धार२३४नाम्। दायिवावार२३४
५ २ ३ ५ ३ ५ ३
याम्। मादामार२३४भो। द्वार२३४यिश्रा॥(२) वार२३४

* 'दक्षसाधनं—शीघ्र-कर्म-कर्त्तारम्'—इति वि०।

† 'शर्द्धाय—बलाय'—इति वि०।

‡ "प्रवः"—इति ख० पु० पाठः।

साम् । पूनाता२३४दा । त्सासाधा२३४नाम् । याथा
दा२३४र्वा । या२३४वी । ता२३४यायि । यथामा२३४
यित्रा । यावाह्व२३४णा । या२३४म्र । ता२३४माम् ।
हाऽ । वो३हा । वो३हाइ । हा । ओ२३४वा । हा
३४ । औहोवा । ए३ । अतिविश्वानिदुरितातरेमा२३
४५(३) ॥ १२ * ॥ [१]

॥ सुज्ञानम् ॥ सखायआ । निषीदता । पुनाना
या२ । प्रगायता । शिशुन्नाया२ । श्वैः प । रा२यि
भू२३४औहोवा । षतश्रियए३ ॥(२) समीवत्साम् । न
मातृभायि । सृजतागा२ । यसाधनाम् । देवावाया२
म् । मदम् । आ२भा२३४औहोवा । द्विग्रवसमे३ ॥(१)
पुनातादा । क्षसाधनाम् । यथाशार्द्धा२ । यवीतया

* अ० गा० ४प्र० १अ० १२सा० ।

२ र १   १   २   ५र र   १
यि। यथामायिचा२। यव। हुरणा२३४औहोवा। य

२   १   १११
शम्ममे३उपा२३४५(३)॥ १८*॥ [२]

२१   २१   ५र
॥ दैवोदासम्॥ सखा३१। यआ३१२३४। निषी।

१ २   ११   २र १   ५र   १ २
दा३ता। पुना३१। नाया३१२३४। प्रगा। या३ता।

२ १   २१   र १   १   २   २१
शिशू३१म्। नया३१२३४। द्यौःप। रा३यिभूः। षता

२१   १   ५   २१   २१
३१। श्रिया३। औ२३४वा॥(१) समौ३१। वत्सा३१२

५र   १   २   २१   ५र
४म्। नमा। तृ३३भायिः। स्वजा३१२३४। यसा।

१ २   २र १   २१   ५   २
सा३नाम्। देवा३१। विया३१२३४म्। मदम्। आ

१   २१   २१   १   ५
३भायि। द्विशा३१। वसा३म्। औ२३४वा॥(१)

२१   २र १   ५र   २ १   २१
पुना३१। तादा३१२३४। चसा। धा३नाम्। यथा

२१   ५र   १ २   २१   २१
३१शर्द्धा३१२३४। यवी। ता३यायि। यथा३। मित्रा

* ऊ० गा० ७प्र० १ख० १८सा०।

५ २ २ १ ० ३ २ १
३१२३४। यव। हू३णा। यग्रा३१। तमा३म्। ओ
५ ३ ५
२३४वा। ऊ२३४पा(३) ॥ १८ * ॥ [३]

२ १र २ ४ ५ २ ३ ५
॥ पौष्कलम् ॥ सखाया३आनि। षीदा२ ३ ४ता।
२ १ २र १ २ ० ५ २ १ ७ र
पुनानाया। प्रागायार३४ता। शिशूनया। ज्ञैःपार
३ २ १ ३ १ १ १ १ २ १र २ ४ ५
रा२३४५यिभू६५६। षतश्रियेर३४५ ॥(१) समीवा३त्सन्न।
२ ३ ५ २ १ २र १ २ ३ ५
मातॄ२३४भायिः। सृजातागा। यासाधा २ ३ ४नाम्।
२र १ ० ३ २ १ ३ १
देवावियाम्। मदा२मा२३४५भा६५६यि। दिव्यवसा२
१ १ १ २ १र २ ३ ५ १ ३ ५ २ १
३४५म् ॥(२) पुनाता३दच्च। साधा२३४नाम्। यथा
२ १ २ ३ ५ २ १ ७ ३
शर्द्धा। पावीता२३४यायि। यथामित्रा। यवा२रू२३
२ १ ३ १ १ १ १
४५णा६५६। यशन्तमा२३४५म्(३) ॥ १८ † ॥ [४]

५ र ३ २ ३ ५ २ १
॥ शौक्तम् ॥ सखा। यआओ२३४वा। निषायि।

---

* ऊ० गा० ७प्र० १अ० १९सा०।

† ऊ० गा० ६प्र० १अ० १८सा०।

२ ३ ५ २ र१र ३ १ १ १ १ १
दाताओ२३४वा । पुनानायप्रगा २यता२३४५ । शायि

२ ३ ५ १ र ३१११११ १ २ ३
यिग्राओ२३४वा । नयज्ञैःपरिभू२३४५ । षाताओ२३४

५ २ ५ र ३१ ३ ५ २ १
वा । श्रिये१ ॥(१) समी । वत्साओ२३४वा । नमा ।

२ ३ ५ २ १र २१र ३ ११११ १ १
तृभाओ२३४वा । हृजतागयसाधना२३४५म् । दाग्रिवा

३ ५ १ ३ २ २ ३ ५
ओ२३४वा । वियम्मदमभा१यि । द्वायिग्राओ२३४वा ।

२ ५ र ३र२ ३ ५ ३ १ २
वसा१म् ॥(२) पुना । तादाओ२३४वा । त्तमा । धाना ।

३ ५ १२र १ र २ र १ ३ ११११ १ २ ३
ओ२३४वा । यथाशर्द्धायवीतया२३४५यि । याथाओ२३

५ २ १र २ १ ३ ११११ १ २ ३ ५ २
४वा । मित्रायवरुणा२३४५ । याग्राओ२३४वा । तमा

१म्(३) ॥ १५ ॥ [५] ९

अथ प्रवाजीति तृचात्मकं द्वेपदं द्वितीयं सूक्तं—

तत्र प्रथमा ।

२ ३क २र ३ १ २ ३ २ ३ २ ३२उ ३ १ २
प्रवाज्यत्ताःसहस्रधारस्तिरःपवित्रंविवारमव्यम् ॥ १ † ॥

---

* ऊ० गा० १४प्र० २अ० १५मा० ।

† ऋ० वे० ७, ५, ०१,५ ।

"वाजी" बलवान् वेगवान् वा "सहस्रधारः" बहुधारायुक्तः सोमः "अव्यम्" अविभवं "वारं" वालं पवित्रं "तिरः" व्यवधायकं कुर्व्वन् "प्राचाः" विविधं प्रचरति [चरतेर्लुङि रूपम्] ॥

"प्रवाजी"-"प्रसुवानः"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २क २र ३ १ २ ३ १ २ ३ १र २र ३ १
सवाज्यचाःसहस्ररेताअद्भिर्मृजानोगोभिःश्रीणानः॥२*॥

"सः" सोमः "अचाः" चरति। कीदृशः? "सहस्ररेतः" बहु-रेतस्कः "बहूदकः" "अद्भिः" वसतीवरीभिः "मृजानः" मृज्यमानः "गोभिः" गोविकारैः चीरादिभिः "श्रीणानः" श्रियमाणः ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १र २र ३ १र २र ३ २
प्रसोमयाहीन्द्रस्यकुक्षानृभिर्येमाणोअद्रिभिःसुतः॥३†॥१०

हे "सोम!" "नृभिः" ऋत्विग्भिः "येमानः" नियम्यमानः‡ "अद्रिभिः" ग्रावभिः "सुतः" अभिषुतः "इन्द्रस्य" "कुक्षा" [सप्तम्या डादेशः (३, ४, ३९)] कुक्षौ उदरभूते कलशे वा "प्रयाहि" प्रकर्षेण गच्छ [संहितायां येमान इत्यत्र णत्वम्] ॥ ३ ॥ १०

* ऋ० वे० ७, ५, ११, ६।

† ऋ० वे० ७, ५, ११, ७।

‡ 'येमानः—सु यमानः'—इति वि०।

॥ सोहविषम् ॥ प्रवाजियत्त्वाः। सहस्रधारास्ता१यि रा२३४ः। हायि। पविचाम्। विवारा२३४५हायि। आ२३४व्योई हायि ॥(१) सवाजियश्वाः। सहस्ररेताञ्च ञ्चा२३४यिः। हायि। मृजानाः। गोभायिश्रा२३४यि हायि। णा२३४नोई हायि ॥(२) प्रसोमयाहो। इन्द्र स्यकुत्तानृभा२३४यिः। हायि। येमानाः। अद्रिभा२ ३४। यिर्हायि। सू२३४तोई हायि(३) ॥ १५ * ॥ [१]

॥ जराबोधीयम् ॥ प्रवाजियोवा। त्वाः। सहा२ ३स्रा। धारस्तायिराः। पवायित्रा१वार३यिवा। रम्। अव्यो३४५ई। डा। सवाजियोवा। त्वाः। सहा२ ३स्रा। रेताश्रद्भायिः। म्टजाना१गोर३भायिः। श्रो। णानो३४५ई। डा। प्रसोमयोवा। हायि। इन्द्रास्या

* ऋ० गा० ४प्र० १ख० १५सा०।

२ र १ र २ ४ऽ ५
२३कू । स्वानुभायिः । येमानो१आर२३द्रायि । भिः ।

१ २
सुनो३४५ई । डा(३) ॥ १ * ॥ [२] १०

अथ येसोमास इति तृचात्मकं तृतीयं सूक्तम्, †

तत्र प्रथमा ।

१र २र ३ २ ३१ २ ३ १ २ ३ १
येसोमासःपरावतियेअर्वावतिसुन्विरे ।

२ ३ १ २ ३ १ २
येवादःशर्य्यणावति ॥ १ ‡ ॥

एतदादिभ्यामृग्भ्यामिन्द्रार्थं सर्वत्र सोमाभिषवोऽस्तीत्याह— "ये" "सोमासः" "परावति" विप्रकृष्टेऽतिदूरेण देशे ¶ "ये" वा "अर्वावति" अन्तिके देशे§ "सुन्विरे" अभिषूयन्ते "ये वा" "शर्य्यणावति" ‖ [कुरुक्षेत्रस्य जघनार्द्धे शर्य्यणावत्संज्ञकं मधुर-रस-युक्तं सोमवत् सरोऽस्ति] "अदः" अस्मिन् सरसि सुरमा ये सोमा इन्द्रायाभिषूयन्ते । ते अस्माकमभिमत-फलं ददात्विति वक्ष्यमाणेन सम्बन्धः ॥ १ ॥

---

* ऊ० गा० २३प्र० ३ख० १सा० ।

† 'यज्ञायज्ञीयमाग्निष्टोमसाम'—इति ।

‡ ऋ० वे० ७, १, ४, १ ।

¶ "परावतः"—इति निघण्टौ दूर-नामसु पञ्चमं पदम् ( ३, २६ ) ।

§ "अर्वाके"—इति निघण्टावन्तिक-नामसु षष्ठमं पदम् ( ३, १६ ) ।

‖ 'शर्य्यणावति—भूमौ'—इति वि० ।

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २

यआर्जीकेषुकृत्वसुयेमध्येपस्त्यानाम्।

२ ३ १ २ ३ १ २

येवाजनेषुपञ्चसु॥ २ *॥

"ये" वा सोमाः "आर्जीकेषु" ऋजीकानामदूरभवाः आर्जीकादेशास्तेषु† तथा "कृत्वसु" कृत्वानइति देशाभिधानम्, तेषु‡ कर्मवत्सु देशेषु च; किञ्च "पस्त्यानां" सरस्वत्यादीनां नदीनां¶ "मध्ये" समीपे च ये सोमा अभिषूयन्ते [ "ऋषयो वै सरस्वत्यां सत्रमासतेत्यादिषु§ नदीतीरे यज्ञकरणस्य श्रवणात्; किञ्च "जनेषु पञ्चसु" निषाद-पञ्चमाश्चत्वारो वर्णा पञ्चजनास्तेषु ‖ च "ये वा" सोमा अभिषुताः। ते सोमा अस्माकमभिमत-फलं ददात्वित्युत्तरेण सम्बन्धः ॥ २ ॥

---

* ऋ० वे० ७, २, ५, ३।

† 'आर्जीकेषु—ऋजषु'—इति वि०।

‡ 'कृत्वसु—कृतेषु स्थानेषु'—इति वि०।

¶ 'पस्त्यानां—गृहाणाम्'—इति वि०। "पस्त्यम्—इति निघण्टौ गृह-नामसु षष्ठं पदम् ( ३, ४, )।

§ "ऋषयो वै सरस्वत्यां सत्रमासत। ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति"--इति ऐत० ब्रा०।

‖ जनेषु पञ्चसु—'पञ्चजनाः, यजमानश्चत्वारऋत्विजः'—इति वि०।

अथ तृतीया ।

१ १ २ २ २१र ३१२ २ २ ३ १ २

तेनोवृष्टिन्दिवस्परिपवन्तामासुवीर्यम् ।

२ १ ३ २ २ १ १

स्वानादेवासइन्दवः ॥ ३ * ॥ ११

"स्वानाः" सुवानाः तत्र चात्र अभिषूयमाणा "देवासः" देवाः दीपन-शीलाः स्तुत्या वा "इन्दवः" "ग्रहेषु" चमसेषु चरन्तः, "ते" सोमाः "नः" अस्माकं "दिवस्परि" परि-शब्दः पञ्चमी-द्योतकः, अन्तरिक्षादादित्याद्वा "वृष्टिम्" [ "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते । आदित्याज्जायते वृष्टिः (म० १अ० )"—इति वृष्टि-कारणत्वात् ] किञ्च "सुवीर्यम्" शोभन-वीर्योपेतम् पुत्रञ्च धनादिकं वा "आ पवन्ताम्" प्रापयन्तु । यजमानः सोमेनाभिमत-फलानि प्राप्नोति खलु ॥

"स्वानाः"-"सुवानाः"—इति पाठौ ॥ ३ ॥ ११

२र र १ १ १ र २ १

॥ जराबोधीयम् ॥ येसोमासोवा । पारावतायि ।

२र १ २ १ र २ ४

येआर्वा२३वा । तिसुन्वायिरायि । येवादा१:आ२३र्व्वा ।

४र ३ १ २ र १ २ १ ११

णा । वतो३४५ई । डा ॥(१) यआञ्जीकोवा । षूक्तत्वमू ।

२र १ २ १ र २ ४

येँमाध्या२३यिपा । स्तियानाम् । येवाजा१ना२३यिषू ।

* ऋ० वे० ७, १, ५, ४ ।

५　२ १　१२२ १　२　१　११
प। चतो३४५ई। तेनोवृष्टोवा। दायिवस्पराथि।
१　२　२ १　२　२　४
पवान्ता२३मा। सुवीरायाम्। स्वानादा१यिवा२३साः।
५　२ २
द्व। दवो३४५ई। डा(३)॥ ११ *॥[१ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठमस्याध्यायस्य
पञ्चमः खण्डः॥ ५॥

---

अथ षष्ठे खण्डे—

आतेवत्सइति द्व्यृचात्मकं प्रथमं सूक्तम्,—

तत्र प्रथमा।

१ २३१२ १२　३१ २ ३१२
आतेवत्सोमनोयमत्परमाच्चित्सधस्थात्।
१ २ १ २　३ १
अग्नेत्वाङ्कामयेगिरा॥ १ †॥

हे "अग्ने!" "वत्सः" ऋषिः "ते" तव "मनः" "परमा-च्चित्" उत्कृष्टादपि "सधस्थात्" द्युलोकात् "आ यमत्" आयमन्ति आगमयन्ति। केन साधनेन? "त्वां" "कामये"

---

* ऊ० गा० ४प्र० १अ० १६गा०।

† छ० आ० १, १, १, ८ (१आ० १०ख०)=ऋ० वे० १९, ११५=ऋ० वे० ५, ८, १६, १।

कामया अभिलषन्त्या "गिरा" स्तुत्या ["कामये"—इत्यत्रापि ये आदेशः पूर्ववत्। यद्वा त्वां कामये अभिलषामि]॥

"कामये"-"कामया"—इति पाठौ॥ १॥

अथ द्वितीया।

२ ३उ १२उ ३ २ ३ १ ३ १ १ १ २
पुरुत्राहिसदृङ्ङसिदिशोविश्वाअनुप्रभुः।

३ १ २
समत्सुत्वाहवामहे॥ २ *॥

हे अग्ने! "पुरुत्रा हि" बहुषु हि देशेषु त्वं "सदृङ् असि" समान-द्रष्टा भवसि अतएव "विश्वाः" सर्वा दिश "अनु" लक्ष्य "प्रभुः" ईश्वरो भवसि। ईदृशं "त्वा" त्वां "समत्सु" सङ्ग्रामेषु रक्षणार्थं "हवामहे" आह्वयामहे॥

"दिशः"-"विदिशः"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २
समत्स्वग्निमवसेवाजयन्तोहवामहे।

१ २ ३ १ २
वाजेषुचित्रराधसम्॥ ३ †॥ १२

"समत्सु" समदेषु सङ्ग्रामेषु "वाजयन्तः" बलमिच्छन्तो वयम् "अवसे" रक्षणार्थम् "अग्निं हवामहे"। कीदृशम्? "वाजेषु" सङ्ग्रामेषु "चित्रराधसम्" याचनीय-धनम्॥ ३॥१२

---

* ऋ० वे० ५, ८, २६, २।

† ऋ० वे० ५, ८, २६, ४।

५र र १ र २ १ २र
॥ वात्सम् ॥ आतेवत्साः । मनोयमत् । परमात् ।

१ २ १ २ २ ४ ५ ४
चित्सधार२३स्थात् । अग्नायित्वा३ङ्का३ । मयोवा । गां

५ २ र १ १ १ र
पुयिरो६हायि ॥(१) पुरुत्वाहो । सहङ्ङसि । दिशो

२ र १ १ १ २ २ ४ ५
विश्वाः । अनुप्रार२३भूः । समात्सू३त्वा३ । हवोवा ।

४ ५ २ १ २ र १र १
मापुचो६हायि ॥(२) समत्सुवा । ग्निमवसे । वाजयन्तः

र १ १र २ २ ४ ५ ४
हवामार२३हायि । वाजायिषू३चा३यि । न्नरोवा । धा

५
पुसो६हायि(३) ॥ १७ ॥ ॥ [१] १२

अथ द्वितीय-तृचे—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २
त्वन्न इन्द्राभरओजोनृम्णंशतक्रतोविचर्षणे ।

२ ३ १ २ ३ १ २
आवीरम्पृतनासहम् ॥ १ †॥

* ऊ० गा० ४प्र० १अ० १७सा० ।

† छ० आ० ५, १, २, ७ ( १भा० ८२४पृ० ) = ऋ० वे० ४, २, १०, १ ।

हे "शतक्रतो" बहुकर्मन्! "विचर्षणे" विद्रष्टः इन्द्र! त्वं "नः" अस्मभ्यम् "ओजः" बलं "नृम्णं" धनं च "आ भर" आहर। "वीरं" वीर्योपेतम् "पृतनासहं" सेनानामभिभवितारं त्वाम् "आ" याचामह इति शेषः ॥

"आभरओजः"-आरुतामोजः"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१र २र ३१ २३ २३ १२ ३१२
त्वꣳहिनःपितावसोत्वम्माताशतक्रतोबभूविथ।

१ २ ३१२
अथातेसुम्नमीमहे ॥ २ * ॥

हे "वसो" वासयितः! "शतक्रतो" बहुकर्मन्निन्द्र! त्वं "नः" अस्माकं "पिता" पितृवत् पालको "बभूविथ" भव "त्वं" "माता" मातृवद्धारकश्च बभूविथ। अथ च वयं "ते" तव स्वभूतं "सुम्नं" सुखम् "ईमहे" याचामहे ॥ २ ॥

अथ तृतीया।

१ २ ३१२ १२
त्वाꣳशुष्मिन्पुरुहूतवाजयन्तमुपब्रुवेसहस्कृत।

१२ ३१२
संनोरास्वसुवीर्य्यम् ॥ ३ † ॥ १२

---

* ऋ० वे० ४, १, १०, १।

† ऋ० वे० ४, १, १०, १।

[ सहसा बलेन स्तोतृभिर्युक्तः कृतः सहस्कृतः ] हे “सह-स्कृत” इन्द्र ! [स्तुत्या हि देवताया बलं वर्द्धते, तस्य सम्बोधनम्] —“शुष्मिन्” अतएव बलवन् ! “पुरुहूत” पुरुभिर्बहुभिर्यजमानै राहुतेन्द्र ! “वाजयन्तं” बलमिच्छयन्तं त्वाम “उपब्रुवे” उप स्तौमि । “सः” त्वं “नः” अस्मभ्यं सुवीर्यं धनं “रास्व” देहि ॥

“सहस्कृत”-“शतक्रतो”—इति पाठौ ॥ ३ ॥ १३

५ २ ४ ५र १र र
॥ औपगवाद्यम् ॥ तुवन्नाऽ३इन्द्रआभरा । ओजोनृ

र २र १
म्णाꣳशतक्रतोविचर्षणायि । आवौ२ । हौ२ । ऊवा

२ ५ १र १ २ ५ १ ४
२३यि । राऽ३४पा । जनासाह्याम् ॥(१) तुवꣳह्याऽ३यिन्नः

५र १ र र र र १
पितावसाउ । त्वम्माताशतक्रतोबभूविथा । अथौ२ ।

१ २ ५ २र १ २
हौ२ । ऊवा२३यि । ता३४यिसू । म्नमीमाह्यायि ॥(२)

५र १ ४ ५ र १र र १
तुवाꣳशू३ष्मिन्पुरुहूता । वाजयन्तमुपब्रुवेसहस्कृता । स

१ २ ५ २र १ १
नौ२ । हौ२ । ऊवा२३यि । राऽ३४स्वा । सुवौरायाम् ।

र १ १ ५र र १ १२ १
ऐ । हाऽ२ए३ । हिया३४औहोवा । ए३ । उपा३१२

१११
३४५ (३) ॥ १८ * ॥ [१] १३

---

* ऊ० आ० ४प्र० १ख० १८आ० ।

अथ तृतीय-तृचे—

प्रथमा ॥

१ २ ३ १२ ३ ३ १ २
यदिन्द्र चित्रमइ्हनास्ति त्वादातमद्रिवः ।

२ ३ १ २ ३ १ २
राधस्तन्नो विदद्वस उभयाहस्त्याभर ॥ १ * ॥

हे "अद्रिवः" वज्रवन् ! "चित्र" चायनीयेन्द्र ! "त्वादातं त्वया दातव्यं यद्धनं "मे" मम "इह" अस्मिंल्लोके "नास्ति", हे "विदद्वसो" लब्धधनेन्द्र ! "नः" अस्मभ्यम् "उभया हस्ती" उभाभ्यां हस्ताभ्यां तद् "राधः" "आभर" आहर ॥

"मइह"–"मेहना"—इति छन्दोगानां बह्वृचानां पाठौ ॥१॥

अथ द्वितीया ।

१२ ३२ ३ १ २ ३ १ २ ३ १२ ३२
यन्मन्यसे वरेण्यमिन्द्र द्युक्षन्तदाभर ।

३ २ ३ १ २ ३ १२ ३२ ३ १ २
विद्याम तस्य ते वयमकूपारस्य दावनः ॥ २ † ॥

हे इन्द्र ! "यत्" "द्युक्षम" अन्नं "वरेण्यं" वरणीयं "मन्यसे" "तत्" द्युक्षम् "आभर" अस्मभ्यम् । "ते" तव सम्बन्धिनो "वयं"

---

* ऋ० आ० ४, २, १, ४ (१भा० ७४४०) = ऋ० वे० ४, १, १०, १ ।

† ऋ० वे० ४, २, १०, १ ।

"तस्य" तादृशस्योक्तलक्षणस्य "अकूपारस्य" [ अकुत्सितः पारो अन्तो यस्य तादृशस्यानस्य "दावनः" दानस्य "विद्याम" स्याम ॥

"दावनः"-"दावने"—इति पाठौ ॥

अथ तृतीया।

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १
यत्तेदित्सुप्राध्यम्मनोअस्तिश्रुतम्बृहत्।
१ १ २ १ १ २ ३ १ २ २ २ ३ १ २
तेनदृढाचिदद्रिवआवाजन्दर्षिसातये॥ ३* ॥ १४

॥ इति चतुर्थः प्रपाठकः ॥

हे इन्द्र! "ते" तव "दित्सु" "प्राध्यं" प्रकर्षेण स्तुत्यं "श्रुतं" "बृहत्" महत् यत् "मनः" "अस्ति", "तेन" मनसा हे "अद्रिवः" वज्रवन्निन्द्र! "दृढाचित्" दृढमपि "वाजम्" अन्नम् "आ दर्षि" आदारयसि, "सातये" अस्मत्सम्भजनाय लाभाय वा ॥

"दित्सु"-"दित्सु"—इति पाठौ ॥ ३ ॥ १४

३ ४ ५ ३ १ ४ ५
॥ वौङ्कम् ॥ यदिद्रचित्तमइ। हना३। आस्तौ।
१२ २ २ १ १ १
त्वादातमद्रिवः। राधस्ता२३न्नाः। वीवो२। ददसा
२ १ १ २
उ। उभया२३हा। स्तायार३। भा२३रा३४३ ॥(१)

* ऋ० वे० ४, २, १०, ३।

यन्मन्यसेवरे। णियाइम्। आयिन्द्रा। द्युन्नन्तदाभ र। विद्यामा२३ता। स्यास्या२। तेवयाम्। अकूपा २३रा। स्यादार३। वा२३ना२४३ः॥(२) यत्तेदिचुप्र रा। धियाइम्। मामाः। अस्तिश्रुतम्बृहत्। तेनदा २३ढी। चायिवा२यित्। अद्रिवाः। आवाजा२३दा। षायिसा२३। ता२३या३४३यि। ओ२३४५ई। डा(३)॥ १९*॥ [१]

॥ वसिष्ठप्रियम्॥ यदिन्द्रा२३। चित्रमइह। ना स्ती। त्वादा३तामद्रायिवो२। राधास्तन्नो३। विदा रद्वा२३४साउ। उभाओ२३४वा। याहाओ२३४वा। स्तियापुभरा॥(१) यन्मन्या२३। सेवरेणिम्। आयिन्द्रा। द्युत्ता३न्तादा१भारा२। विद्यामता३। स्यतार२यिवा२३

* ऊ० गा० ४प्र० १प० १९सा०।

५ १ २ २ ५ १ २ ३ ५ ४
४याम् । आकाओ२३४वा । पाराओ२३४वा । स्वदा

२ १र ४ ५र ४ ५
५ना: ॥(२) यस्तेदो२३ । त्तुप्राधियम् । मानाः ।

२ १ ० २ १ २ १ १
अस्तोइअूतम्बृहा२त् । तेनाहढाइ । चिदा२द्रा२३४यि

५ १ २ ३ ५ १ २ ३ ५ ४
वा: । आवाओ२३४वा । जान्दाओ२३४वा । पिसा५त

यायि । हो५ई । डा(३) ॥ १८ * ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
षष्ठः खण्डः † ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ८ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे अष्टमोऽध्यायः ‡ ॥ ८ ॥

---

* ऊ० गा० १३प्र० २ख० १९गा० ।

† 'समाप्तश्चैतत्प्रपाठकः'—इति वि० ।

‡ चतुर्थः प्रपाठकः परिसमाप्तः'—इति वि० मूलपुस्तकादिसम्मतश्चेतिशम् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ९ ॥

॥ अथ नवमोऽध्याय आरभ्यते* ॥

तत्र,

शिशुञ्जज्ञानमिति प्रथम-खण्डे† तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २
शिशुञ्जज्ञानꣳहर्यतम्मृजन्ति

३ २ ३ १ २ ३ १ २ ३ १ ०
शुम्भन्तिविप्रम्मरुतोगणेन ।

३ २ ३ १र २ ३ १र
कविर्गीर्भिष्काव्येन‡कविःसंसत्

२र ३ २ ३ १ २ ३ १ २
सोमःपवित्रमत्येतिरेभन् ॥ १ ¶ ॥

"शिशुम्" इदानीमुत्पन्नत्वाच्छिशुवत्तिष्ठन्तम्§ [यद्वा, पापान्वित मकुर्व्वन्तं विनाशयन्तम्] "जज्ञानम्" प्रादुर्भूतम्‖ अतएव

---

* 'इदानीमष्टममध्यायत्वारिंश मुच्यते'—इति वि०।

† "गायत्र-प्रभृति-साम्नां ब्राह्मणेनार्षेयमुक्तम्'—इति वि०।

‡ "गोभिः काव्येन"—इति विसर्गमध्यपाठः ख० मु० पु०।

¶ ऋ० वे० ७, ४, ९, १।

§ 'शिशु—शंसनीयम्'—इति वि०।

‖ 'जज्ञानं—जायमानम्'—इति वि०।

"हर्यतं" [ हर्य गतिकान्त्योः ( भ्वा० प० ) ]। भृमृदृशी-त्यादिना अतच्। सर्वैः काम्यमानं सोमं "मृजन्ति" मरुतः* शोधयन्ति किञ्च "विप्रं" मेधाविनं सोमं "गणे न" आत्मीयेन† सप्तसङ्ख्याकेन "शुम्भन्ति" अलङ्कुर्वन्ति‡। ततः "कविः" क्रान्तप्रज्ञः सोमः "काव्येन" कवि-कर्म्मणैव "कविः" शब्दयितव्यः सन् शब्दायमानः "गीर्भिः" स्तुतिभिः सह "पवित्रम्" "अत्येति" अतीत्य गच्छति॥

"विप्रम्"—इति छन्दोगाः, "वह्निम्"—इति बह्वृचाः पठन्ति॥१॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २
ऋषिमनायऋषिकृत्स्वर्षाः

३ १ २ ३ १ २ ३ २
सहस्रनीथःपदवीष्कवीनाम्¶।

३ २ ३ १ २ ३ १र २र ३
तृतीयन्धाममहिषस्सिषास

१ २ ३ २ ३ १ २ ३ २
न्त्सोमोविराजमनुराजतिष्टुप्॥ २ §॥

"ऋषिमनाः" सर्व्वदर्शनशीलमनस्कः, अतएव "ऋषिकृत्" सर्वस्य दर्शनकर्त्ता प्रकाशनस्य कर्त्ता "स्वर्षाः" सर्वस्य सूर्य्यस्य वा

---

* 'मरुतः—आदित्यरश्मयः' - इति वि०।

† 'गणम—सम्पातेन'—इति वि०।

‡ 'शुम्भन्ति—पावयन्ति'—इति वि०।

¶ "पदवीः कवीनाम्"—इति विसर्गमध्यपाठः ख० मु० पाठः।

§ ऋ० वे० ७, ४, ९, २।

सम्भक्ता: "सहस्रनीथ:" [ नीथा स्तुति: ] बहुविध-स्तुतिकः "कवीनां" क्रान्त-प्रज्ञानां मध्ये "पदवी:" स्खलितानां पदानां साधुत्वेन संयोजयिता य: सोमो विद्यते स "महिष:" महान् पूज्यो वा सोम: "तृतीयं धाम" द्युलोकं "सिषासन्" सम्भक्तुमिच्छन् "स्तुप्" स्तूयमान: सन् "विराज" विशेषेण राजन्तं दीप्यमान मिन्द्रम् "अनुराजति" प्रकाशयति ॥ २ ॥

अथ तृतीया।

३ २३ १ २३२ ३१ १
चमूषच्छ्येनःशकुनोविभृत्वा

३२ ३१र २र ३१२
गोविन्दुर्द्रप्सआयुधानिबिभ्रत्।

३२ ३१र २र ३२
अपामूर्मिंᳫसचमानःसमुद्र

३ २ ३१ २ ३१ २
न्तुरीयन्धाममहिषोविवक्ति ॥ ३ * ॥ १

"चमूषत्" चमन्ति भक्षयन्त्यत्रेति चम्वश्चमसास्तेषु सीदन्† यद्वा, चम्वौ अधिषवणफलके तयोर्वर्त्तमान: "श्येन:" शंसनीय: "शकुन:" शक्तः सामर्थ्यकारी "विभृत्वा" [ हरतेरातोमनिन्निन्त्यादिना (३, २, ७४) क्वनिप् ] पात्रेषु विहरणशील:

---

* ऋ० वे० ७, ४, ९, ४।

† 'चमूषत्— * * *। अथवा चमूम् सेनासु सीदति'—इति वि०।

"गोविन्दुः" यजमानानां गवां लम्भकः* [विन्दुरिच्छुरिति उ-प्रत्ययान्तत्वेन निपातितः] "द्रप्सः" धारयन् † "अपाम्" उदकानाम् "ऊर्म्मिं" प्रेरकं "समुद्रम्" [अन्तरिक्षनामैतत् (निघ० १, ३)] अन्तरिक्षं "सचमानः" सेवमानः "महिषः" महान् य एवं विधः सोमः स "तुरीयं" चतुर्थं धाम चान्द्रमसं स्थानं‡ "विवक्ति" सेवते सूर्य्यलोकस्योपरि चन्द्रमलोको विघत इति यमः पृथिव्या अधिपतिः समावत्वित्यादिभिश्चन्द्रमानक्षत्राणामधिपतिः सद्यमत्ववैचित्यन्तैर्मन्त्रैर्ज्ञायते ॥ ३ ॥ १

॥ पार्थम् ॥ ओ२हो२होयि। श्रिग्रुञ्जज्ञा। ना३ए हर्य्यं। तम्मृजन्तायि। गुभन्तिवायि। प्रा३मरुः। तो गणेना। कविगीर्भायिः। का३विये। नाकविरसान्। सोमःपवायि। चा३मति। आ३४३यि। ती३रा५यि भा६५६न् ॥ (१) ऋषिमनाः। या३ऋषि। कृत्सुवर्णाः। सहस्रनायि। था३ःपदः। वीःकवीनाम्। तृतीयन्धा।

* 'गोविन्दः—गावः उदकं वाक् पृथिवी आदित्यरश्मयो वा। एतानि यो विन्दति स गोवित्। विद्ज्ञाने विदलाभे विदसत्तायाम्'—इति वि०।

† 'द्रप्सः—उदकसम्मिश्रः'—इति वि०।

‡ 'तुरीयं धाम— * * * द्रोणकलशम्'—इति वि०।

२ १ २ १ ४ ५ २र १र १ २ १
मा३महि। षःसिषासान्। सोमोविरा। जा३मनु।

२ २ ४ १ र १ २
रा३४३। जा३ता५यिष्टइ५इ॥ २) चिमूषच्छायि। ना

१ १ ३ ४ ५ २र १ २ १र
३:ग्रकु। नोःविभृत्वा। गोविन्दुद्रा। प्रसा३आयु।

१र१ ४ ५ २ १र १र १ १ र २ ३ ४ ५
धानिबिभ्रात्। अपामूर्मायिम्। सचमा। नःसमुद्रा

१ र १ र १ २ २
म्। ओ३हो३हायि। तुरीयन्धा। मा३महि। षो३

२ ४
४३। वा३यिवा५क्ता३इ५इयि(३)॥ १२ *॥ [१]

३ ४ १
॥ महावामदेव्यम्॥ ग्राऽ५यिग्रुम्। यज्ञा३ना३ए

४ ५ १ र र
द्दर्य्यताम्। मा। जन्तिग्रुम्भन्तिविप्रम्मरुतोगणेनकवि

र र र र र १ १ १ र १ १
गीर्भिःकाव्येनाकविःसन्सोमः। पा। औ३होहायि।

२ ३र र २ १ १
विश्वा२३मतायि। एत्ये। हो३। ऊम्मा२। राऽ२यि

५ ० ४ २ ४ ५
भो३५ हायि॥(१) आऽ५यिं। मना३या३ऋषिकृत्।

१ र र र र र र
सू। वर्षाःमहस्रनीथःपदवीःकवीनांस्तृतीयन्धाममहिषः

* ऊ० गा० ९प्र० १अ० १२मा०।

सिषासन्सोमः। वा। औ३होहायि। राजार३मनू।
राजौहो३। ऊम्मा२। ता५२यिष्टो३५हायि ॥(२) चा
५मू। षक्कराइयिना३:शकुनाः। वायि। भृत्वागोवि
न्दुर्द्रप्सआयुधानिबिभ्रदपामूर्म्मिᳲसचमानःसमुद्रन्तुरी।
या। औ३होहायि। धामार३महायि। षोवौहो३।
ऊम्मा२। वा५२क्तो३५हायि(३) ॥ ७ * ॥ [२]

॥ हाउउऊवायिवासिष्ठम् ॥ हायि। उऊवायि।
भिशा३४औहोवा। जज्ञा। ना३ᳲहर्य्य। तम्मृजन्ता
यि। शुम्भा३४औहोवा। तिवायि। प्रा३म्मरु। तो
गणेना। कवा३४औहोवा। गीर्भायिः। का३विय।
नाकविःसान्। सोमा३४औहोवा। पवायि। ऋा३
मति। आ३४३यि। ती३रा५यिभा६५६न् ॥(१) ऋषा

* ऊ० गा० १०प्र० १अ० ७गा०।

३४औहोवा । मनाः । या३ऋषि । कृत्सुवर्षाः । स

हा३४औहोवा । मनायि । या३:पद । वीःकवीनाम् ।

तृता३४औहोवा । यन्था । मा३महि । षःसिषासान् ।

सोमा३४औहोवा । विरा । जा३मनु । रा३४३ । जा

३ता५यिष्टू६५६प् ॥(२) चमू३४औहोवा । षक्कायि ।

ना३:शकु । नोविभूत्वा । गोवा३४औहोवा । दुर्द्री ।

प्सा३आयु । धानिविभ्रान् । अपा३४औहोवा । ऊ

म्मायिम् । सचमा । नःसमुद्राम् । हायि । उद्भवा

यि । तुरा३४औहोवा । यन्था । मा३महि । षो३४

३ । वा३यिवा५क्का६५६यि(३) ॥ ७ * ॥ [३]

॥ उद्भवायिवासिष्ठम् ॥ उद्भवायि । शिशा३४औ

होवा । जज्ञा । ना३७हर्य्यं । तंमृजन्तायि । प्रुभा

---

* ऊ० गा० १७प्र० १अ० ७सा० ।

३४औहोवा । तिवायि । प्रा३म्मरु । तोगणेना । क
वा३४औहोवा । गोर्भायिः । का३विये । नाकविःसा
न । सोमा३४औहोवा । पवायि । चा३मति । आ
३४३यि । ती३रा५यिभा६५६न् ॥(१) ऋपा३४औहोवा ।
मनाः । या३ऋषि । कृत्सुवर्षाः । सहा३४औहोवा ।
स्नायि । था३ःपद । वीःकवीनाम् । तृता३४औहो
वा । यन्धा । मा३महि । षःसिषासान् । सोमा ३ ४
औहोवा । विरा । जा३मनु । रा३४३ । जा३ता५
यिष्टू६५६प् ॥(२) चमू३४औहोवा । षच्छ्रायि । ना
३ःशकु । नोविभृत्वाम् । गावा३४औहोवा । दुद्री ।
प्सा३आयु । धानिबिभ्रात् । अपा३४औहोवा । ऊ
र्मायिम् । सचमा । नःसमुद्राम् । उक्थायि । तु

रा३४औहोवा। यन्धा। मा३मह्नि। षो३४३। वा

३यिवा५त्था६५६यि(३) ॥ १८ * ॥ [४]

॥ उद्वद्भार्गवम् ॥ भ्रिप्रुञ्जाज्ञा२३। न०हव्यांना

२३म्। मृजन्तायि। प्रभन्तायिवा२३यि। प्रम्महूतो

२३। गणेना। कविर्गीयिर्भा२३यिः। काविंयेना२३ः।

कविःसान्। सोमःपावा२३यि। अमतायिये२३। ति

रेभा३नाउ ॥(१) ऋषिमाना२३। ओयऋषीकृ२३त्।

सुवर्षाः। सहस्राना२३यि। यःपदावा२३यिः। कवी

नाम्। तृतीयान्धा२३। ममहायिषा२३ः। सिषासा

न्। सोमोवायिरा२३। जमनूरा२३। जतिष्ठा३१उ ॥(२)

चमूषाष्टया२३यि। नःशकुनो२३। विभृत्वा। गोवि

न्दुर्द्रा२३। प्मअायुधा२३। निविभ्रात्। अपामूर्मा

---

१ ऊ० गा० १७प्र० १अ० ८मा० ।

२३यिम् । सचमाना२३ः । समुद्राम् । तुरीयान्धा२३ । ममहायिषो२३ । विवक्षा३१उवा२३४५(३) ॥ ४ * ॥ [५]

॥ वैश्वज्योतिराद्यम् ॥ हाउहोवा३हायि । शिशुञ्ज ज्ञानाꣳहर्य्या३तांमृजन्ता२३४५यि । शुम्भन्तिविप्रम्मरु ३तोगणेना२३४५ । कविर्गीर्भिःकाव्ये३नाकविःसा२३४५ न् । सोमःपवित्रमतो३यायिनिरेभा२३४५न् ॥(१) ऋषि मनायऋषो३कृत्सुवर्षा२३४५ः । सहस्रनीथःपदा३वायिः कवीना२३४५म् । तृतीयन्धाममहो३षाःसिषामा२३४५ न् । सोमोविराजमनू३राजतिष्टू२३४५प् ॥(२) चमूषच्छ्ये नःशकुनोविभृत्वा२३४५ । गोविन्दुर्द्रप्सआयू३धानिवि भ्रा२३४५त् । अपामूर्म्मिꣳसचमा३नाःसमुद्राम्३४५म् ।

---

* ऊ० गा० २३प्र० २अ० ४मा० ।

२ र र ३र १ ७ १११२ २र र २
तुरीयन्धाममद्धो३षोविवक्ता२३४५यि। हाउहोवा३हायि।
१११
वा३४५(३) ॥ ७ ॥ * [६] १

एतेसोमा इति नवर्चं द्वितीयं सूक्तं,

तत्र प्रथमा।

३१र २र ३ २ ३१र २र २ १ २
एतेसोमाअभिप्रियमिन्द्रस्यकाममचरन्।
१२ ३ २क २र
वर्द्धन्तोअस्यवीर्यम् ॥ १ † ॥

"एते" अभिषुता इमे सोमाः "अस्य" इन्द्रस्य "वीर्य्यं" शक्तिं "वर्द्धन्तः" वर्द्धयन्तः "इन्द्रस्य" "कामं" काम्यं "प्रियं" प्रीतिकरं "समभ्यचरन्" अभ्यवर्षन् अभिपवन्ते ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ २ ३ १ २ १ २ ३ १ २
पुनानासश्चमूषदोगच्छन्तोवायुमश्विना।
१ २ ३ १ २
तेनोधत्तसुवीर्यम् ॥ २ ‡ ॥

हे सोमाः! "पुनानासः" पुनाना अभिषूयमाणाः "चमूषदः"¶ चमसेषु सीदन्तः गच्छन्तः "वायुम्" "अश्विना" अश्विनौ च

* ऊ० गा० २३प्र० २अ० ७सा०।

† ऋ० वे० ६, ७, ३०, १। ‡ ऋ० वे० ६, ७, ३०, २।

¶ 'चमूषदः—भक्षणीयेषु सीदन्ति अथवा अभिषवणफलककचर्मण उपरि सीदन्ति चमूषदः'—इति वि०।

"गच्छन्तः" प्राप्नुवन्तः ते यूयं "नः" अस्मभ्यं "सुवीर्य्यं" शोभन-वीर्य्यं "धत्त" प्रयच्छत ॥

"धत्त"-"धान्तु"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ २ १ २ २ १र २र

इन्द्रस्यसोमराधसेपुनानोहार्दिचोदय ।

३ २ ३ १ २ ३ १ २

देवानांयोनिमासदम् ॥ ३* ॥

हे सोम ! "पुनानः" पूयमानस्त्वं "राधसे इन्द्रस्य" इन्द्रस्य संराधनाय "हार्दि"—इति हृदय-सम्बन्धि स्थानं† "चोदय" प्रेरय । अहमपि "देवानाम्" इन्द्रादीनां "योनि" स्वर्गाख्यं स्थानम् "आसदं" प्राप्तवान् [यद्वा, देवानां यवन-साधनं यज्ञाख्यं स्थानं प्राप्तवानस्मि ॥

"देवानाम्"-"ऋतस्य"—इति पाठौ ॥ ३ ॥

अथ चतुर्थी ।

२ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २

मृजन्तित्वादशक्षिपोहिन्वन्तिसप्तधीतयः ।

२ ३ १ २

अनुविप्राअमादिषुः ॥ ४‡ ॥

---

* ऋ० वे० ६, ७, ३०, ३ ।

† 'हार्दि'—हृदये'—इति वि० ।

‡ ऋ० वे० ६, ७, ३०, ४ ।

हे सोम! "त्वा" त्वां "दश" दशसङ्ख्याकाः [ "क्षिपः अङ्गुलिनामैतत् ( २, ५, ३, ) ] अङ्गुलयः "मृजन्ति" शोधयन्ति। ततः "सप्त" सप्तसङ्ख्याकाः* "धीतयः" होत्रकाश्च त्वां "हिन्वन्ति" स्व-स्व-व्यापारैः प्रीणयन्ति। तथा "विप्राः" मेधाविनः स्तोतारश्च त्वाम् "अनु अमादिषुः" अनुमादयन्ति ॥४॥

अथ पञ्चमी।

३ १ २ ३ १ २ ३ १ २ ३ १ २र ३क २र
देवेभ्यस्त्वामदायकꣳसृजानमतिमेष्यः।

१र २र
सङ्गोभिर्वासयामसि ॥ ५ † ॥

हे सोम! "कं" सुखभूतं "त्वा" त्वां "देवेभ्यः" देवानां "मदाय" मदार्थं "गोभिः" गोर्विकारैः पयोभिः "संवासयामः" संस्थापयामः। कीदृशम्? "मेष्यः" अवेर्लोमानि दशापवित्र रूपेण "अति सृजानम्" अत्यन्तं सृजन्तं दशापवित्ररूपेषु अवेर्लोमसु वर्त्तमानमित्यर्थः ॥ ५ ॥

अथ षष्ठी।

३ १ ३ २ ३ १र २र ३ १र २र
पुनानः कलशेष्वावस्त्राण्यरुषो हरिः।

२.३ १ २
परिगव्यान्यव्यत ॥ ६ ‡ ॥

---

* 'सप्तधीतय—बुद्धियुक्ताः सप्तर्त्विजः; धीतयः स्थापनकराः'—इति वि०।

† ऋ० वे० ६, ७, ३०, ५।

‡ ऋ० वे० ६, ७, ३०, ६।

"पुनानः" पूयमानः "कलशेषु" द्रोणकलशेषु* आसिच्यमानः "अरुषः" आरोचमानः "हरिः" हरितवर्णः सोमः "गव्यानि" गो-सम्बन्धीनि पयःप्रभृतीनि "वस्त्राणि" वासांसि "परि अव्यत" पर्याच्छादयति† ॥ ६ ॥

अथ सप्तमी ।

३ २ ३ १ २ ३ २३ ३ २ ३ १ २
मघोन आ पवस्व नो जहि विश्वा अप द्विषः ।
२ ३ १ २ ३ १ २
इन्दो सखायमा विश ॥ ७ ‡ ॥

हे "इन्दो" सोम ! "मघोनः" धनवतः "नः" अस्मान् "आ" आभिमुख्ये न "पवस्व" क्षर "विश्वा" विश्वान् "द्विषः" द्वेष्टीन् "अप जहि" मारय च "सखायं" मित्रभूतमिन्द्रम् "आविश" प्राप्नुहि ॥ ७ ॥

अथाष्टमी ।

३ १ २ २१र २र ३ १ २
नृचक्षसन्त्वा वयमिन्द्रपीतꣳ स्वर्विदम् ।
३ १ २ ३१र २
भक्षीमहि प्रजामिषम् ॥ ८ ¶ ॥

---

* 'कलशेषु कलशसम्बन्धिषु ग्रहचमसादिषु'—इति वि० ।

† 'अव्यत—गमय'—इति वि० ।

‡ ऋ० वे० ६, ७, ३१, १ ।

¶ ऋ० वे० ६, ७, ३१, २ ।

हे सोम! "नृचक्षसं" नृणां द्रष्टारं "स्वर्विदं" सर्वज्ञम्* "इन्द्रपीतं" त्वां सेवमाना वयं "प्रजां" पुत्रादिकाम् "इषम्" अन्नञ्च "भक्षीमहि" भजेम ॥ ८ ॥

अथ नवमी।

३ २ ३ १र २र ३ १ २ ३ १र २र
वृष्टिन्दिवःपरिस्रवद्युम्नम्पृथिव्याअधि।

१ २ ३ १ २
सहोनःसोमपृत्सुधाः ॥ ६ † ॥ २

हे "सोम!" त्वं "दिवः" द्युलोकात् "वृष्टिं" वर्षं "परिस्रव" परितो वर्ष, "पृथिव्या अधि" [ अधीति सप्तम्यर्थानुवादो] "द्युम्नम्" अन्नञ्च उत्पादयेति शेषः। "नः" अस्माकं‡ "सहः" बलं "पृत्सु" सङ्ग्रामेषु "धाः" धेहि ॥ ६ ॥ २

इति सामवेदार्थ प्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

* 'स्वर्विदं—स्वर्गस्य वेत्तारम्'—इति वि०।

† ऋ० वे० ६, ७, ३१, ३।

‡ 'नः—अस्मभ्यम्'—इति वि०।

अथ द्वितीये खण्डे—

सोमःपुनानइति नवर्चं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २
सोमःपुनानोअर्षतिसहस्रधारोअत्यविः ।
३ १र २र ३ २
वायोरिन्द्रस्यनिष्कृतम् ॥ १ * ॥

अयं "पुनानः" पावकः "सोमः" अर्षति" गच्छति । कीदृशोऽयम् ? "सहस्रधारः" अपरिमितधारः "अत्यविः" अवि-शब्देन तल्लोमान्युच्यन्ते ; अवेर्लोमभिर्निष्पादितं दशापवित्रमित्यर्थः, तदतिक्रम्य गच्छतीत्यत्यविः । किमर्थम् ? "वायोः" "इन्द्रस्य" च पानायेति शेषः । किम्प्रति ? "निष्कृतम्" [ निरित्येषः समित्येतस्मिन्नर्थे ] संस्कृतं पात्रं प्रति ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १र २र
पवमानमवस्यवोविप्रमभिप्रगायत ।
३ २ ३ १ २
सुष्वाणन्देववीतये ॥ २ † ॥

हे "अवस्यवः" रक्षण-कामाः ! उद्गात्रादयो यूयं "पवमानं" शोधकं "विप्रं" विशेषेण देवानां प्रीणयितारं विप्रवद्बुद्धं वा

---

* ऋ० वे० ६, ८, १, १ ।

† ऋ० वे० ६, ८, १, २ ।

[अथवा विप्रइति मेधावि नामसु (निघ० ३,१५,१) मेधाविनम्] "देववीतये" देवपानाय* "सुवाणम्" अभिषूयमाणं सोमम् "अभि" आभिमुख्येन "प्रगायत" प्रकर्षेण स्तुत ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३१ २र ३१ २
पवन्तेवाजसातयेसोमाःसहस्रपाजसः ।
३ २ ३ १ २
गृणानादेववीतये ॥ ३ † ॥

"पवन्ते" चरन्ति "सोमाः" । किमर्थम् ? "वाजसातये" अन्नस्य लाभाय । कीदृशाः ? "सहस्रपाजसः" बहुबलाः नृणां बलप्रदा इत्यर्थः‡ "गृणानाः" [कर्मणि कर्तृप्रत्ययः (३,१,८५)] स्तूयमानाः । पुनः किमर्थम् ? "देववीतये" [देवानां वीतिर्गतिः प्राप्तिलक्षणं वा यस्मिन् स देववीतिः] यज्ञः, तदर्थम् [यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा वाज-लाभइति ॥ ३ ॥

अथ चतुर्थी ।

३ २ ३ १ २ ३ १ २ ३ १र २र
उतनोवाजसातयेपवस्वबृहतीरिषः ।
२ १ २ ३ १ २
द्युमदिन्दोसुवीर्यम् ॥ ४ ¶ ॥

---

* 'देववीतये—देवानां भक्षणाय'—इति वि० ।

† ऋ० वे० ६, ८, १, ३ ।

‡ 'सहस्रपाजसः—सहस्र-पान-समर्थाः'—इति वि० ।

¶ ऋ० वे० ६, ८, १, १ ।

हे "इन्दो" "द्युमत्" दीप्तिमत् "सुवीर्य्यं" शोभन-वीर्य्यं सामर्थ्यञ्च "पवस्व" क्षर, शोभन-सामर्थ्योपेता धाराः पवस्वेत्यर्थः। "उत्" अथवा "नः" अस्माकं* "वाजसातये" सङ्ग्रामाय† "बृहतीः" "इषः" द्युमत् सुवीर्यं सम्पादयितुं पवस्वेति योज्यम् ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ १र २र ३ २ ३ १ २ ३ १ २
अत्याह्नियानानहेतृभिरसृग्रं वाजसातये।

२र ३ १ २ ३ १ २
विवारमव्यमाशवः ॥ ५ ‡ ॥

"वाजसातये" सङ्ग्रामाय "ह्नियानाः" प्रेर्य्यमाणाः आशवः शीघ्रं धावन्ति तद्वत् "हेतृभिः" प्रेरकैः प्रेर्य्यमाणाः "आशवः" शीघ्रगामिनः सोमाः "वाजाय" अन्नलाभाय "अव्यं" "वारं" वालं दशापवित्रं "व्यत्यसृग्रम्" व्यतिसृजन्ते¶ ॥ ५ ॥

---

* 'नः—अस्मभ्यम्'—इति वि०।

† 'वाजसातये अन्नदानार्थम्'—इति वि०।

‡ ऋ० वे० ६, ८, २, २।

¶ "व्यत्यसृग्रम्"—इत्यत्र ऋगादिपादाद् "अति"—इत्युपसर्गः, ऋक्तृतीयपादाद् "वि"—इत्युपसर्गश्च सङ्गृहीतः, "अत्या"—इति श्रुतावापदस्यानर्थक्यमपि स्वीकृतमाचार्य्येण। विवरणकृता त्वश्विनाम दानवदित्यादिना व्याख्यातम्। परन्तूभय-[illegible]व्याख्यानं पदग्रन्थविरुद्धत्वादुपेक्षणीयम्, तत्र हि—"अत्याः, ह्नियानाः"—ति पाठ-दर्शनात्।

[अथवा विप्रइति मेधावि नामसु (निघ०३,१५,१) मेधाविनम्] "देववीतये" देवपानाय* "सुष्वाणम्" अभिषूयमाणं सोमम् "अभि" आभिमुख्येन "प्रगायत" प्रकर्षेण स्तुत ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ ३ १ २र ३ १ २

पवन्तेवाजसातयेसोमाःसहस्रपाजसः ।

३ २ ३ १ २

गृणानादेववीतये ॥ ३ † ॥

"पवन्ते" चरन्ति "सोमाः" । किमर्थम् ? "वाजसातये" अन्नस्य लाभाय । कीदृशाः ? "सहस्रपाजसः" बहुबलाः नृणां बलप्रदा इत्यर्थः‡ "गृणानाः" [कर्मणि कर्त्तृप्रत्ययः (३,१,८५)] स्तूयमानाः । पुनः किमर्थम् ? "देववीतये" [देवानां वीतिर्गतिः प्राप्तिलक्षणं वा यस्मिन् स देववीतिः] यज्ञः, तदर्थम् [यज्ञसिद्धिः साक्षात् प्रयोजनं तद्द्वारा वाज-लाभइति ॥ ३ ॥

अथ चतुर्थी ।

३ २ ३ १ २ ३ १ २ ३ १र २र

उतनोवाजसातयेपवस्वबृहतीरिषः ।

२ १ २ ३ १ २

द्युमदिन्दोसुवीर्यम् ॥ ४ ¶ ॥

---

* 'देववीतये—देवानां भक्षणाय'—इति वि० ।

† ऋ० वे० ६, ८, १, १ ।

‡ 'सहस्रपाजसः—सहस्र-पान-समर्थाः'—इति वि० ।

¶ ऋ० वे० ६, ८, १, १ ।

हे "इन्दो" "द्युमत्" दीप्तिमत् "सुवीर्य्यं" शोभन-वीर्य्यं सामर्थ्यञ्च "पवस्व" क्षर, शोभन-सामर्थ्योपेता धाराः पवस्वेत्यर्थः। "उत्" अथवा "नः" अस्माकं* "वाजसातये" सङ्ग्रामाय† "बृहतीः" "इषः" द्युमत् सुवीर्यं सम्पादयितुं पवस्वेति योज्यम्॥ ४॥

अथ पञ्चमी।

१ २  ३ १र  ३ २ ३ १ २ ३ १ २
अत्याहियानानहेतृभिरसृग्रं वाजसातये।
 २र  ३ १ २ ३  १ २
विवारमव्यमाशवः॥ ५ ‡॥

"वाजसातये" सङ्ग्रामाय "हियानाः" प्रेर्य्यमाणाः आशवः शीघ्रं धावन्ति तद्वत् "हेतृभिः" प्रेरकैः प्रेर्य्यमाणाः "आशवः" शीघ्रगामिनः सोमाः "वाजाय" अन्नलाभाय "अव्यं" "वारं" वालं दशापवित्रं "व्यत्यसृग्रम्" व्यतिसृजन्ति¶॥ ५॥

---

* 'नः—अस्मभ्यम्'—इति वि०।

† 'वाजसातये अन्नदानार्थम्'—इति वि०।

‡ ऋ० वे० ६, ८, २, २।

¶ "व्यत्यसृग्रम्"—इत्यत्र ऋगादिपादाद् "अति"—इत्युपसर्गः, ऋक्तृतीयपादाद् "वि"—इत्युपसर्गश्च सङ्गृहीतः, "व्यत्या"—इति श्रुतावापदस्यानर्थक्यमपि स्वीकृतमाचार्य्येण। विवरणकृता त्वश्विनाम दानवदित्यादिना व्याख्यातम्। परन्तूभय-[illegible] व्याख्यानं पदपन्यविरुद्धत्वादुपेक्षणीयम्, तत्र हि—"अत्याः, हियानाः"—इति पाठ-दर्शनात्।

अथ षष्ठी।

१ २ ३ १ २ ३ १र २र ३ २ ३ १ २
तेनःसहस्रिण्ँरयिम्पवन्तामासुवीर्यम्।
३ २ ३ २ ३ १ २
स्वानादेवासइन्दवः॥ ६ *॥

"ते" "इन्दवः" सोमाः "नः" अस्माकं "सहस्रिणं" सहस्रसङ्ख्या-युक्तं "रयिं" धनं "सुवीर्यं" च "आ पवन्ताम्"†। कीदृशास्ते? "स्वानाः" सुवानाः स्तूयमाना "देवासः" द्योतनादि-गुणकाः॥

"स्वानाः"-"सुवानाः"—इति पाठौ॥ ६॥

अथ सप्तमी।

२ १ २ ३ २ ३ ३ २ ३ २उ ३ १ २
वाश्राअर्षन्तीन्दवोभिवत्सन्नमातरः।
३ १र २र
दधन्विरेगभस्त्योः॥ ७ ‡॥

"वाश्राः" शब्दयन्तः¶ "इन्दवः" सोमाः "अभ्यर्षन्ति" पात्रं प्रति वाश्राः शब्दकारिण्यो "मातरः" मातृभूता गावः

* ऋ० वे० ६, ८, २, ३।

† 'आ—आनुपूर्व्येण'—इति वि०।

‡ ऋ० वे० ६, ८, २, ४।

¶ 'वाश्राः—वामनशीलाः'—इति वि०।

"वत्सं न" वत्सं यथा प्रत्यागच्छन्ति तद्वत् तएव "गभस्त्योः" बाह्वोः "दधन्विरे" ध्रियन्ते च॥

"मातरः"-"धेनवः"—इति पाठौ॥ ७॥

अथाष्टमी।

२ ३ १ २ ३ १र २र ३ १ २
जुष्टइन्द्रायमत्सरःपवमानःकनिक्रदत्।
२ ३ २ ३ १ २
विश्वाअपद्विषोजहि॥ ८ *॥

"इन्द्राय" "जुष्टः" पर्य्याप्तः सोमो भवतीति शेषः "मत्सरः" स मः [ "मन्दतेस्तृप्ति-कर्म्मणः"—इति निरुक्तम् ] "पवमानः" पूयमानः तादृशः सोमः "कनिक्रदत्" "विश्वाः द्विषः" सर्वानस्माकं द्वेष्टॄन् "अप जहि"॥

"पवमानः"-"पवमाना"—इति पाठौ॥ ८॥

अथ नवमी।

३ २ ३ १ २ ३ १ २ ३ १ २
अपघ्नन्तोअराव्णःपवमानाःस्वर्दृशः।
१ २ ३ १ २
योनावृतस्यसीदत॥ ६ †॥ ३

---

* ऋ० वे० ६, ८, २, १।

† ऋ० वे० ६, ८, २, २।

हे "पवमानाः !" "अराव्णः" अदानान् यजमानान् "अप घ्नन्तः" हिंसन्तः "स्वर्दृशः" सर्वस्य द्रष्टारश्च* यूयम् "ऋतस्य योनौ" यज्ञस्य† स्थाने "सीदत"। अथ सोम-पानार्थमुक्तलक्षणा देवा ऋतस्य योनौ सीदतेति योज्यम् ॥ ९ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे—

सोमाअसृग्रमिति नवर्च्चं विद्यमानमेकं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

**सोमाअसृग्रमिन्दवःसुताऋतस्यधारया।**

१ २ ३ १ २

**इन्द्रायमधुमत्तमाः ॥ १ ‡ ॥**

"ऋतस्य" यज्ञार्थं "सुताः" अभिषुताः "मधुमत्तमाः" अतिशयेन माधुर्योपेताः "इन्दवः" सोमाः "इन्द्राय" इन्द्रार्थं "धारया" "असृग्रम्" सृज्यन्ते ॥

"धारया"-"सादने"—इति पाठौ ॥ १ ॥

---

* 'स्वर्दृशः—स्वर्गस्य लोकस्य दर्शितारः'—इति वि० ।

† 'ऋतस्य—सत्यस्य यज्ञस्यान्नस्य वा'—इति वि० ।

‡ ऋ० वे० ६, ७, २८, १ ।

अथ द्वितीया।

२ १र २र २ १ २ ३ १ २उ ३ १ २
अभिविप्रा अनूषतगावोवत्सन्नधेनवः।
२ ३ १ २ ३ १ २
इन्द्रꣳसोमस्यपीतये ॥ २ * ॥

"विप्राः" मेधाविनः† "सोमस्य" "पीतये" पानाय "इन्द्रम्" "अभि अनूषत" अभिष्टुवन्ति। तत्र दृष्टान्तः— "धेनवः" प्रीणयित्र्यो गावः "वत्सं न" वत्सं यथा पयः-पानाय अभिशब्दयन्ति तद्वत् ॥

"धेनवः"-"मातरः"—इति पाठो ॥ २ ॥

अथ तृतीया।

२ १ १ २ १ २ ३ १ २ ३ १ ० ३ २
मदच्युत्क्षेतिसादनेसिन्धोरूर्माविपश्चित्।
१ २ ३ १र २र ३ २
सोमोगौरीअधिश्रितः ॥ ३ ‡ ॥

"मदच्युत्" मदकरस्य रसस्य च्यावयिता सोमः "सदने" यज्ञस्य स्थाने "क्षेति" निवसति। एतदेव विवृणोति—"सिन्धोः" नद्याः "ऊर्मा" ऊर्मौ तरङ्गे "विपश्चित्" विद्वान् सोमः "गौरी

---

* 'विप्राः—ऋत्विजः'—इति वि०।

† ऋ० वे० ६, ७, ३८, २।

‡ ऋ० वे० ६, ७, ३८, ४।

अधि"* गौर्यामधि [ अधीति सप्तम्यर्थानुवादः, माध्यमिकायां वाचि गौरी गान्धर्वीति वाङ्नामैतत् ( निघ० १,११,५-६ ) ] "श्रितः" निवसति ॥ ३ ॥

अथ चतुर्थी ।

३१२ २१ ३ २ ३ १ ३
दिवोनाभाविचक्षणोव्यावारे†महीयते ।
२ ३ २ ३१२ ३ १
सोमोयःसुक्रतुःकविः ॥ ४ ‡ ॥

"यः" "सुक्रतुः" सुप्रज्ञः "कविः" क्रान्त-कर्मा "विचक्षणः" विद्रष्टा स "सोमः" "दिवः" अन्तरिक्षस्य¶ "नाभा" नाभौ नाभिभूते "अव्याः" अवेः "वारे" वाले "महीयते" पूज्यते ॥४॥

अथ पञ्चमी ।

१२ ३१ ३ २ ३ १ ३ २ ३ २ ३ १ २
यःसोमःकलशेष्वा§अन्तःपवित्रआहितः ।
२३ ३ १ २
तमिन्दुःपरिषस्वजे ॥ ५ ‖ ॥

---

* "इदुतौ च सप्तम्यर्थे ( १, १, १९ )"—इति प्रगृह्यभावः ।

† "व्योवारे"—इति ऋ०-पाठः ।

‡ ऋ० वे० ६, ७, २८, ३ ।

¶ 'दिवः—द्युलोकस्य'—इति वि० ।

§ "कलशेष्वा"—इति ऋ०.पाठः ।

‖ ऋ० वे० ६, ७, २८, ५ ।

"यः" सोमः "कलशेषु" कुम्भेषु आस्ते, यश्च "पवित्रे" पवित्रस्य "अन्तः" मध्ये "आ हितः" निहितः, "तं" त्वामंशभूतं सोमम् "इन्दुः" तदभिमानी सो देवः "परिषस्वजे" प्रविशति ॥ ५ ॥

अथ षष्ठी।

१उ २ १ २ ३१र २र३१२

प्रवाचमिन्दुरिष्यतिसमुद्रस्याधिविष्टपि।

२ ३ १ २ ३१२

जिन्वन्कोशम्मधुश्चुतम्॥ ६ * ॥

"इन्दुः" सोमः [ उन्दी क्लेदने (रु० प०)—इत्यस्य रूपम् क्लेदनवांश्च ] "मधुश्चुतं" मधुनश्श्रावकं द्रोण-कलशं "जिन्वन्" प्रीणयन् पूरयन्नित्यर्थः। समुद्रस्यान्तरिक्षस्य "अधिविष्टपि" विष्टब्धे स्थाने "वाचं" "प्रेष्यति" प्रेरयति; पवित्रे पूयमानः शब्दं करोतीत्यर्थः ॥ ६ ॥

अथ सप्तमी।

१ २ ३ २ ३ १ २ ३२ ३१ २३१२

नित्यस्तोत्रोवनस्पतिर्धीनामन्तःसबर्दुघाम्।

३ १र २र ३ १

हिन्वानोमानुषायुजा ॥ ७ † ॥

"नित्यस्तोत्रः" सन्ततस्तोत्रः "वनस्पतिः" वनानां स्वामी, सोमः "मानुषा" मानुषाणि "युजा" युग्मानि‡ अहोनैकाहा-

* ऋ० सं० ६, ७, २८, ६।

† ऋ० सं० ६, ७, २९, १।

‡ "युजा—योजन"—इति वि०।

अकानि* "हिन्वानः" प्रीणयन् "सबर्दुघाम्" अमृतसदृशाति-प्रियवचनानि दोग्ध्रीम्† "अन्तः" स्तोतॄणां मध्ये स्थितां "धेनां" स्तुतिरूपां वाचं‡ गच्छत्विति शेषः॥

"धेनामन्तस्सबर्दुघाम्"-"धीनामन्तस्सबर्दुघस्सः"—इति पाठौ॥७॥

अथाष्टमी।

१ २ ३ २ ३ १ २
आपवमानधारयरयिꣳसहस्रवर्चसम्।

२ ११ ३ १ २
अस्मेइन्दोस्वाभुवम्॥८¶॥

हे "पवमान" पूयमान! पुनान! वा "इन्दो" सोम! त्वं "सहस्रवर्चसं" बहुदीप्तिं "स्वाभुवम्" शोभन-भवनं "रयिं" धनम् "अस्मे" अस्मासु "धारय" प्रक्षिपेत्यर्थः॥८॥

अथ नवमी।

३ १ ३१ ३ १ ३ २उ ३ १र २र ३ १
अभिप्रियादिवःकविर्विप्रःसधारयासुतः।

१ २ ३ १ २
सोमोहिन्वेपरावति॥९§॥४

---

* दिनैकसम्पाद्यमेकाहम्, द्वादशदिनातिरिक्तसम्पाद्यं सत्रम्, अहीनमन्यत् यागकर्म।

† 'सबर्दुघां—सुखदोग्ध्रीं'—इति वि०।

‡ 'धेनां—धेनूनाम्'—इति वि०। "धेना"—इति निघण्टौ वाङ्नामसु अष्ट-चत्वारिंशत्तमं पदम् (१, ११)।

¶ ऋ० वे० ६, ७, ३९, १।

§ ऋ० वे० ६, ७, ३९, २।

"कविः" क्रान्तकर्म्मा, "सुतः" अभिषुतः, सोमः "परावति" विप्रकृष्टे देशे स्थितः सन् "विप्रः" मेधावी "स्वधारया" स्वस्य धारया "दिवः" द्युलोकस्य "प्रिया" प्रियाणि स्थानानि "अभि" लक्ष्य "हिन्वे" प्रेरयति ॥

"दिवःकविः"-"दिवस्पतिः"—इति पाठौ, "हिन्वेपरावति"-"हिन्वेपरानोअर्षति"—इति च,"सुतः"-"कविः"—इति च ॥ ८ ॥ ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

अथ उत्तेशुष्मासइति चतुर्थे खण्डे—

विद्यमानं पञ्चर्चं सूक्तं,

तत्र प्रथमा।

१ ३ १ २ ३ १ १ ३ १ २ ३ १

उत्तेशुष्मासईरतेसिन्धोरूर्मेरिवस्वनः।

३ १ २ ३ २

वाणस्यचोदयापविम् ॥ १ * ॥

हे सोम! "ते" तव "शुष्मासः" शुष्मा वेगाः "उत् ईरते" उद्गच्छन्ति। तत्र दृष्टान्तः—"सिन्धोः" समुद्रस्य "ऊर्मेरिव"

---

* ऋ० वे० ७, १, ७, १।

यथा तरङ्गात् "स्वनः" ध्वनिः उद्गच्छति तद्वत्*। स त्वं "वाणस्य" विसृष्टस्य नालस्य शततन्त्रीकस्य वीणा-विशेषस्य† "पविं" [ शब्द-नामैतत् (निघ० १, ११)] शब्दं "चोदय" प्रेरय, वेगेन स्यन्दमानस्त्वं विसृष्ट-वाण-शब्द-सदृशं शब्दं कुर्व्वित्यर्थः॥ १॥

अथ द्वितीया।

२ १ ३ १ १ १ १ र १र १ १ १
प्रसवेतउदीरतेतिस्रोवाचोमखस्युवः।

२उ ३ २ ३ १ ७
यदव्यएषिसानवि॥ २ ‡॥

हे सोम! "ते" तव "प्रसवे" सति "मखस्युवः" यज्ञ-मिच्छतो यजमानस्य "तिस्रोवाचः" ऋग्यजुःसामात्मकानि त्रीणि वाक्यानि "उदीरते" उद्गच्छन्ति। कदेत्यत आह—"यद्" यदा "सानवि" उच्छ्रिते "अव्ये" अविमये पवित्रे पवित्रम् "एषि" गच्छसि॥ २॥

अथ तृतीया।

२ १ २ ३ १ १ ३ १र १र ३ १ २
अव्यावारैःपरिप्रियꣳहरिꣳहिन्वन्त्यद्रिभिः।

१ २ ३ १ २
पवमानम्मधुश्चुतम्॥ ३ ¶॥

---

* 'सिन्धोरूर्म्मेरिव—अपामिव सङ्घातः, यादृक् तेषां स्वनः'—इति वि०।

† 'वाणस्य—वीणाविशेषस्य'—इति वि०।

‡ ऋ० वे० ७, १, ७, १।

¶ ऋ० वे० ७, १, ७, ३।

"प्रियं" देवानां प्रीतिकरं "हरिं" हरितवर्णं "अद्रिभिः" ग्रावभिः अभिषुतं "मधुश्चुतं" मधुनो रसस्य च्यावयितारं "पवमानं" सोमम् "अव्याः" अवेः "वारैः" वालैः "परि हिन्वन्ति" ऋत्विजः परिप्रेरयन्ति ॥ ३ ॥

अथ चतुर्थी ।

१ २ ३ १ २ १ २

आपवस्वमदिन्तमपवित्रन्धारयाकवे ।

३ २ ३ १ २ १ १ २

अर्कस्ययोनिमासदम् ॥ ४ * ॥

हे "मदिन्तम" मादयितृतम ! "कवे" क्रान्तकर्म्मन् ! सोम ! "अर्कस्य" अर्चनीयस्य इन्द्रस्य† "योनिम्" उदरभूतं स्थानम् "आसदं" प्राप्तुं‡ "पवित्रम्" अतीत्य "धारया" सम्पातेन "आ पवस्व" आभिमुख्येन चर ॥ ४ ॥

अथ पञ्चमी ।

१ २ २ १ २ ३ १ ३ १ २

सपवस्वमदिन्तमगोभिरञ्जानोअक्तुभिः ।

१ २ ३ १ २

एन्द्रस्यजठरंविश ॥ ५ ¶ ॥ ५

---

* ऋ० वे० ६, ८, १५, ६ ।

† 'अर्कोद्रोणकलशः अथवा अर्कआदित्यः अथवा आदित्यरश्मयोऽर्काः अथवा अर्का मन्त्रास्तेषां योनिं स्थानम्'—इति वि० ।

‡ 'आसदम्—आसीदम्'—इति वि० ।

¶ ऋ० वे० ७, १, ७, ५ ।

हे "मदिन्तम" मादयितृतम! सोम! "अक्तुभिः" अञ्जन-साधन-भूतैः "गोभिः" गोविकारैः पयोभिः "अञ्जानः" अज्यमानः संस्तूयमानः स त्वं "पवस्व" क्षरत। "अनन्तरम्" "इन्द्रस्य" "जठरम्" उदरम् "आविश" प्रविश॥ "ऐन्द्रस्यजठरं-विश"—"इन्द्रइन्द्रायपीतये"—इति पाठौ॥ ५॥ ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य चतुर्थः खण्डः॥ ४॥

---

अथ पञ्चमे-खण्डे—

अयावीतीति त्र्यचात्मकम् प्रथमं सूक्तम्,

तत्र प्रथमा।

३ २ ३ १र २र ३ १ २ ३ १ २ २

अयावीतीपरिस्रवयस्तइन्दोमदेष्वा।

३ १ २ ३ १र २

अवाहन्नवतीर्नव॥ १ *॥

हे "इन्दो" सोम! "अया" अनेन रसेन "वीती" वीत्यै इन्द्रस्य भक्षणाय "परिस्रव" परिक्षर†। कीदृशेन रसेनेत्यत आह—"ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु "नवतीर्नव" नवनवति-सङ्ख्याकाः शत्रुपुरीः "अवाहन्" जघान। इमं सोमरसं पीत्वा मत्तः सन्निन्द्रउक्तसङ्ख्याकाः शत्रुपुरीः जघानेति कृत्वा रसो जघानेत्युपचारः॥ १॥

---

* ऋ० भा० ६, १, १, ९ (२भा० ५२३०)=ऋ० वे० ७, १, १८, १।

† 'अया—अनया, वीत्या मार्गेण परिस्रव'—इति वि०।

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
पुरः सद्य इत्थाधिये दिवोदासाय शम्बरम्।
१ ३ २ ३ २ ३ १ २
अध त्यन्तुर्वशं यदुम्॥ २ *॥

"सद्यः" एकस्मिन्नेवाहनि† "पुरः" शत्रूणां पुराणि सोमरसः अवाहन्। "इत्था धिये" सत्य-कर्म्मणे‡ "दिवोदासाय" राज्ञे "शम्बरं" शत्रु-पुराणां स्वामिनम् "अध" अथ अनन्तरं "त्यं" तं "तुर्वशं" तुर्वश-नामानं राजानं दिवोदास-शत्रुं "यदुम्" यदु-नामकञ्च राजानमवाहन्। [अत्रापि सोमरसं पीत्वा मत्तः सन्निन्द्रः सर्व्वमेतदकार्षीदिति सोमरसे कर्त्तृत्वमुपचर्य्यते॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १२ १२ ३ १ २
परि नो अश्वमश्वविद्गोमदिन्दो हिरण्यवत्।
१ २ ३ २ ३ १ २
क्षरा सहस्रिणीरिषः॥ ३ ¶॥ ६

हे सोम! "अश्ववित्" अश्वस्य लम्भकः त्वं "नः" अस्माकम् "अश्वं" "गोमत्" गोयुक्तं "हिरण्यवत्" हिरण्योपेतं पश्वादि-

* ऋ० वे० ७, १, १८, २।

† 'सद्यः—क्षणादेव'—इति वि०।

‡ 'इत्था—इदानीम्'—इति वि०।

¶ ऋ० वे० ७, १, १८, ३।

धनञ्च "परि स्रव"। अपिच "सहस्रिणी:" बहूनि* "इष:" अन्नानि स्रव॥

"पविन:"–"परिण:"—इति पाठौ॥ २॥ ६

अथ तृचात्मके द्वितीय-सूक्ते—

तत्र प्रथमा।

२ १ २ ३ २उ ३ २ ३ १ २
अपघ्नन्पवतेमृधोपसोमोअराव्णः।

२ ३ १ २ ३ २
गच्छन्निन्द्रस्यनिःकृतम् †॥ १ ‡॥

"सोम:" "मृध:" हिंसकान् शत्रून् "अपघ्नन्" मारयन् "अराव्ण:" सक्तौ सत्यां धनानामदातॄं श्च "अप" घ्नन्¶ "इन्द्रस्य" "निष्कृतं" स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया क्षरति॥ १॥

अथ द्वितीया।

३१ २ ३ १२ २र३१२ ३ १२ २र
महोनोरायआभरपवमानजहीमृधः।

१ २ ३ २३१२
रास्वेन्दोवीरवद्यशः॥ २ §॥

---

* 'सहस्रिणी:—सहस्रसम्मिता इष: अन्नानि'—इति वि०।

† "निष्कृतम्"—इति ख० पु० मू०पु० पाठः।

‡ छ० आ० ६, १, २, १८ (२भा० १९५०)=ऋ० वे० ७, १, २२५।

¶ अपेत्युपसर्गद्वयदर्शनात् घ्नन्नित्यस्यावृत्तिः।

§ ऋ० वे० ७, १, १३, १।

हे "पवमान!" "इन्दो" सोम! "नः" अस्माकं "महः" महान्ति "रायः" धनानि "आ भर" आहर "मृधः" हिंसकान् शत्रूंश्च "जहि"* मारय "वीरवत्" पुत्राद्युपेतं "यशः" कीर्त्तिञ्च "रास्व" अस्मभ्यं देहि ॥ २ ॥

अथ तृतीया ।

१ २ २ २ १ १उ १ २ १ १ २ २ १ २
नत्वाशतञ्चनह्रुतोराधोदित्सन्तमामिनन् ।
१ २ ३ १ २ ३ १ २
यत्पुनानोमखस्यसे ॥ ३ † ॥ ७

हे सोम! "राधः" धनं‡ "दित्सन्तम्" आदातुमिच्छन्तं "त्वा" त्वां "शतञ्चन" बहवोऽपि "ह्रुतः" हिंसकाः शत्रवः¶ "न आमिनन्" न हिंसन्ति। कदा? इत्यत्राह—"यत्" यदा "पुनानः" पूयमानः त्वं "मखस्यसे" धनं धातुमिच्छसि§ ॥३॥७

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

१ १ २ ३ १ २ १ २ १ २ २ २ १ २
अयापवस्वधारयाययासूर्यमरोचयः ।
३ १२ २२ ३२
हिन्वानोमानुषीरपः ॥ १ ‖ ॥

* संहितायां "जही"—इति दीर्घान्तं श्रूयते, द्व्यचः इति (६,३,१३५) सूत्रेण दीर्घः ।

† ऋ० वे० ७, १, १३, २ ।

‡ 'राधः—धनस्य'—इति वि० ।

¶ 'ह्रुतः—हरणशीलाः'—इति वि० ।

§ 'मखस्यसे—यज्ञसमये यज्ञं त्वं यदा करोषि'—इति वि० ।

‖ छ० आ० ६, १, १, ७ ( १भा० ५०४० )=ऋ० वे० ७, १, ११, १ ।

हे सोम! "मानुषीः" मनुष्याणां हितानि "अपः" उदकानि "हिन्वानः" प्रेरयन् त्वं "यया" "धारया" "सूर्य्यम्" "अरोचयः" प्रकाशयसि तया "अया" अनया धारया "पवस्व" चर॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ १ ० ३ १ २ ३ १र २र

अयुक्तसूरएतशम्पवमानोमनावधि।

३ १ २ ३ १ १

अन्तरिक्षेणयातवे॥ २ *॥

"पवमानः" पूयमानः सोमः "मनावधि" मनुर्मनुष्यस्तस्मिन् मनुष्यइत्यर्थः। "अन्तरिक्षेण" "यातवे" गन्तुं "सूरः" प्रेरकस्यादित्यस्य "एतशम्" [अश्वनामैतत् (निघ० १, १४, १०)] अश्वं "अयुक्त" युङ्क्ते॥ २॥

अथ तृतीया।

२ १३ २ २ ३ १ ३ १ २ २ १ २

उतत्याहरितोरथेसूरोअयुक्तयातवे।

२ ३ २ ३ १ १ ३ १

इन्दुरिन्द्रइतिब्रुवन् †॥ ३ ‡॥ ८

"उत" अपिच "इन्दुः" सोमः "इन्द्र इति ब्रुवन्" "त्याः"

---

* ऋ० वे० ७, १, ३१, १।

† "ब्रूवन्"—इति ख० पु० पाठः।

‡ ऋ० वे० ७, १, १, १, ४।

तान् "हरितः" हरितवर्णान् अश्वान् "सूरः" सूर्य्यस्य "रथे" "यातवे" गन्तुम् "अयुक्त" युनक्ति*॥

"रथे"-"दश"—इति पाठौ ॥ ३ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य पञ्चमः खण्डः† ॥ ५ ॥

---

अथ षष्ठे खण्डे‡:—

अग्निंवइति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ २ ३ २ ३ १ २ ३ २ ३
अग्निंवोदेवमग्निभिःसजोषा

१ २ ३ १ २ ३ १ २
यजिष्ठन्दूतमध्वरेकृणुध्वम्।

१र २ ३ १ २ ३ १ ३
योमर्त्येषुनिध्रुविर्ऋतावा

१ २ ३ १ २ ३ २
तपुर्मूर्द्धाघृतान्नःपावकः ॥ १ ¶ ॥

---

* 'एतदुक्तम्भवति—यदा सोमस्य इन्द्रस्य पाकानं क्रियते तदा सूर्य्यो रथे नियुक्तः स्यात् यातवे गमनाय'—इति वि०।

† 'उक्तं षड्विंशवमानम्'—इति वि०।

‡ 'इदानीमाज्यानि'—इति वि०।

¶ य०'वे० १५, ६१=ऋ० वे० ५, २, ३, १।

हे देवाः! "वः" यूयं "देवं" द्योतमानम् "अग्निम्" "अध्वरे" कौटिल्य-रहिते यज्ञे "दूतं" "कृणुध्वं" कुरुत। कीदृशम्? "अग्निभिः" अन्यैः "सजोषा" सजोषसम् [ द्वितीयार्थे प्रथमा ( ३, १, ८५ ) ] "यजिष्ठं" यष्टृतमं* "यः" अग्निः देवोऽपि सन् "मर्त्त्येषु" "निध्रुविः" नितरां ध्रुवस्तिष्ठति। कीदृशः? "ऋतावा" यज्ञवान् सत्यवान् वा "तपुर्मूर्द्धा" तापकं तेजः† "घृतान्नः पावकः" शोधकं तमग्निं दूतं कृणुध्वमिति योजना॥१

अथ द्वितीया।

२ ३२३ १र २र ३ २
प्रोथदश्वो न यवसेऽविष्यन्

३ २ ३ २ ३ १ २ ३ १ २
यदा महः संवरणाद्व्यस्थात्।

१ २ ३ २ ३ १ २ ३ १र
आदस्य वातो अनु वाति शोचि

१ २र ३ १ २ ३ १ २
रध स्म ते व्रजनं कृष्णमस्ति॥ २ ‡॥

"यवसे" घासे "अविष्यन्" भक्षयन्¶ "प्रोथत्" शब्दं कुर्व्वन् सञ्चरन् वा "अश्वो न" अश्व इव "महः" महतः "संवर-

---

* 'यजिष्ठं'—यजनीयम्'—इति वि०।

† 'तपुः—तापनशीलः, मूर्द्धा—प्रधानभूतः'—इति वि०।

‡ ऋ० वे० ५, २, ३, २।

¶ 'यवसे—सन्निधानभूते। अथवा द्वितीयार्थे सप्तमी। यवसमविष्यन् भक्षयन्'—इति वि०।

णात्" निरोधात् दावरूपोऽग्निः "यदा" "व्यस्थात्" संवृतेषु वृक्षेषु वितिष्ठते, "आत्" तदा "अस्य" अग्नेः "शोचिः" अर्चिः "अनु वातः वाति"। अथ प्रत्यक्षस्तुतिः—"अध" अथानन्तरं हे अग्ने ! "ते" तव "व्रजनं" वर्त्म "कृष्णमस्ति"। "स्म"—इति पूरणम् ॥ २ ॥

अथ तृतीया ।

१ २र ३ १ २ ३ २उ
उद्यस्यतेनवजातस्यवृष्णो
३ १ २ ३ १ २ ३ २
ऽग्नेचरन्त्यजराइधानाः ।
२ ३ १ २ ३ २ ३ १ २ ३
अच्छाद्यामरुषोधूमएषि
२ ३ १ २ ३ १ २ ३ १ २ २
सन्दूतोअग्नईयसेहिदेवान् ॥ ३ * ॥ ९

हे "अग्ने ! " "नवजातस्य" नूतन-प्रादुर्भूतस्य "वृष्णः" वर्षितुः "यस्य" "ते" तव "अजरा" जरा-रहिता ज्वाला "इधानाः" दीप्यमाना या "उच्चरन्ति" उद्गच्छन्ति । हे "अग्ने !" "अरुषः" आरोचमानः "धूमः" धूमयुक्तः "दूतः" त्वं "द्यामच्छ"† द्युलोकं प्रति "समेषि" सम्यग् गच्छसि, पश्चात् तत्रत्यान् "देवान्" इन्द्रादीन् "ईयसे हि" प्राप्नोषि खलु, [ यद्वा, हे

* ऋ० वे० ५, २, ३, ३ ।

† 'अच्छ—आप्तुम्'—इति वि० । संहितायाम् "अच्छा"—इति दीर्घान्तं श्रूयते, तत्र निपातस्य चेति दीर्घः ।

अग्ने ! त्वदीयो यो धूमः द्युलोकं प्रति एषि गच्छति, पुरुष-व्यत्ययः ; त्वमपि देवान् प्राप्नोषि ॥

"एषि"-"एति"—इति पाठौ ॥ ३ ॥ ९

अथ तमिन्द्रमिति त्र्यृचात्मकं द्वितीयं सूक्तम् ;*

तत्र प्रथमा ।

१२ २र ३ २ ३ १ २ ३ १ २
तमिन्द्रंवाजयामसिमहेवृत्रायहन्तवे ।
१ २र ३ १ २
सवृषावृषभोभुवत् ॥ १ † ॥

यजमाना आहुः—"तं" पूर्वोक्तम् "इन्द्र" "वाजयामसि" वाजयामः सोमेन स्तुतिभिः "वाजवन्तं" बलवन्तं कुर्मः । किमर्थम् ? "महे" महान्तं "वृत्राय" अपामावरकं वृत्रासुरं "हन्तवे" हन्तुं सोम-पानेन मत्तः स्तुतिभि र्वा स्तुतः सन् वृत्रहन्तवे [ वाजयामसि—वाजवन्तं करोतीत्यर्थे "तत्करोतीति (३, १, २५ वा० ) णिच्, "णाविष्ठवत् ( ३, १, २५वा० )"—इति णेरिष्ठवद्भावात् "टेः ( ६, ४, १५५ )"—इति टि-लोपः, "विन्मतोर्लुक् ( ५, ३, ६५ )"—इति मतुपो लुक् ]। "वृषा" धनानां सेक्ता दाता "सः" इन्द्रः "वृषभः" अस्माकं स्तोतॄणां सोमस्य दातॄणां धनादि-सेचको दाता "भुवत्" भवतु ॥ १ ॥

* 'मैत्रावरुणसामाख्यम्'—इति वि० ।

† छ० आ० २, १, ३, ५ ( १भा० २८६पृ० )=ऋ० वे० ८, ६, १९, १ ।

अथ द्वितीया।

२ ३ १र २र ३ १र २र ३ १र २र ३ २
इन्द्रःमदामनेक्रतओजिष्ठःसबलेहितः।
३ २ ३ २उ ३ २
द्युम्नीश्लोकीमसोम्यः॥ २ *॥

"सः" इन्द्रः "दामने" स्तोतृभ्यः धनादि-दानायैव "क्रतः" प्रजापतिना सृष्टः। किञ्च "ओजिष्ठः" ओजस्वितमः "सः" एवेन्द्रः "बले" बलवति सोमे प्रजापतिना सृष्टिकाले निहितः सोम-पानार्थञ्च निहित इत्यर्थः। "द्युम्नी" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५, ५) यास्केनोक्तत्वात्] यशस्वी अन्नवान् वा अतएव "श्लोकी" श्लोकः स्तुतिः तद्वान्† "सः" इन्द्रः "सोम्यः" सोमार्हो भवति‡॥

"बले"-"मदे"—इति पाठौ॥ २॥

अथ तृतीया।

१ २उ ३ १र २र ३ १ २ ३ १ २
गिरावज्रोनमम्भृतःसबलोअनपच्युतः।
३ २ ३ १र २र
ववक्षउग्रोअस्तृतः॥ ३ ¶॥ १०

* ऋ० वे० ६, ६, ११, ३।

† 'श्लोकी—श्लोकैर्मन्त्रैर्योऽतिशयो गीयते सः श्लोकी'—इति वि०।

‡ 'सोमैर्यः सम्भ्रियते स सोम्यः'—इति वि०। "सोममर्हति यः"—इति पा० ४, ४, १३७।

¶ ऋ० वे० ६, ६, १०, ४।

"गिरा" स्तुति-लक्षणया वाचा स्तोतृभिः "सम्भृतः" उत्पादितः तीक्ष्णीकृतः। तत्र दृष्टान्तः—"वज्रेण" वज्र आयुधं तत्कर्तृभिः शितधारो यथा भवति तीक्ष्णीक्रियते तद्वत् स्तोतृभिः स्तुत्या सम्भृतः, अतएव "सबलः" बल-सहितः तस्माद् "अनपच्युतः" परैरपच्युतः अनभिगतइत्यर्थः, तादृशः "उग्रः" महान् "अस्तृतः" युद्धे शत्रुभिरहिंसितइन्द्रः "ववक्षे" स्तोतृभ्यो धनादिकं वोढुमिच्छति॥

"उग्रः"-"ऋष्वः"—इति पाठौ॥ ३॥ १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

षष्ठः खण्डः* ॥ ६॥

---

अथ सप्तम-खण्डे†—

अध्वर्यो अद्रिभिरिति तृचात्मकं प्रथमं सूक्तम्,‡

तत्र प्रथमा¶॥ ॥

१ २ ३ १ ८ ३ १र २र ३ २ ३ १ २

अध्वर्यो अद्रिभिः सुतꣳ सोमम्पवित्र आनय।

३ १ २ ३ १ २

पुनाहीन्द्रायपातवे॥ १ ¶॥

---

* 'इन्द्रेणाग्नानुमोदईदित्यैन्द्राग्नम्'—इति वि०। अतोऽनन्तरं विनियोक्ष्यमाणीति तदभिप्रायः। अनुतस्य तदिहैव द्वितीये( ९,१, ९,१ = ३भा० ३११पृ० )प्रपाठके।

† 'उक्तान्याज्यानि, इदानीं माध्यन्दिनः पवमानः'—इति वि०।

‡ 'गायत्रप्रभृतीनि सामानि ब्राह्मणेनोक्तान्यार्षाणि—इति वि०।

¶ ऋ० आ० ६, १, २, ३ ( २भा० ५०पृ० )=ऋ० वे० ७, १, ८, १।

हे "अध्वर्यो!" "अद्रिभिः" ग्रावभिः "सुतम्" अभिषुतं "सोमं" "पवित्रे" "आनय" प्रापय। एवदेव दर्शयति— "इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय॥

"आनय"-"आसृज"—इति पाठौ, "पुनाहि"-"पुनीहि"—इति च॥ १॥

अथ द्वितीया।

१ १ १ २ ३ १ २ १ २उ क२ २र
तवत्यइन्दोअन्धसोदेवामधोर्व्याशत।

१२ ३ १ २
पवमानस्यमरुतः॥ २ *॥

हे "इन्दो" सोम! "तव" सम्बन्धिनं "मधोः" मदकरस्य "पवमानस्य" पूयमानम् "अन्धसः" अन्नं [ तत्र कर्मणि षष्ठी (३, १, २५)] "त्ये" ते इमे "देवाः" इन्द्रादयो "मरुतश्च"† एवम्भूतमन्नं "व्याशत" व्याप्नुवन्तीत्यर्थः॥

"व्याशत"-व्यश्नुत"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ १उ ३ १ २ ३ १ १
दिवःपीयूषमुत्तमꣳसोममिन्द्रायवज्रिणे।

१ २ ३ १ २
सुनोतामधुमत्तमम्॥ ३ ‡॥ ११

* ऋ० वे० ७, १, ८, २।

† 'मरुतः—मरुतो देवाः अथवा मरुतः रश्मयः'—इति वि०।

‡ ऋ० वे० ७, १, ८, ३।

हे अध्वर्यवः ! यूयं "मधुमत्तमम्" अतिशयेन माधुर्योपेतं "दिवः" द्युलोकस्य "पीयूषम्" अमृतभूतम् "उत्तमं" श्रेष्ठं "सोमं" "वज्रिणे" वज्रवते "इन्द्राय" "सुनोत"* अभिषुणुत ॥ ३ ॥ ११

२ १ ५ १ १ ९ २
॥ वैरूपम्† ॥ अध्वर्य्यो२३४आ । द्रिभायिःसू३ता३म ।
१र ३ ५ १ २ १ र २
सोमांपार३४वी । त्वाआ१नाया२ । पुना२३ । हौन्द्रा३४
५र र २१र२३ १ १ १ १ २ १ ५ २र
औहोवा । यपात्तवे२३४५ ॥(१) तवत्या२३४ई । दो
१ २ २ १र ३ ५ १ २
आन्धा३सा३ः । देवा२मा२३४धोः । वाया१भ्राता२ ।
१ र २ ५र र २ १ ३ २ १ १ १ १
पवा२३ । माना३४औहोवा । स्यमरुता२ ३ ४ ५ः ॥(२)
२ १ ५ २ १ २ २ १र ३ ५
दिवःपी२३४यू । षमुत्ता३मा३म । सोमा२मा२३४इन्द्रा ।
१ ० १ २ २ ५र र
यावज्रायिणा२यि । सुनो२३ । तामा३४औहोवा ।
५ १ २ ३ १ १ १ १
धुमत्तमा२३४५म्(३) ॥ २० ‡ ॥ [१]

---

* संहितायां "सुनोता" -इत्याकारान्तं श्रूयते, तत्र द्व्यचोऽतस्तिङ इत्यनेनास्मात् तिङ इति (६. ३, १३५) योगविभागाद्दीर्घः ।

† "गायत्रे वैरूपम"—इति ख० पु० पाठः ।

‡ ऊ० ग्रा० ११० १अ० २०मा० ।

॥ आप्तुभार्गवम् ॥ अध्वर्य्योअद्रि। भिःसूतम्। सोममवाश्यि। त्राआरनार२३४या। पुनाद्याश्यिन्द्रा२। यपा३। तार२३४वो६ह्वायि॥(१) तवत्यइन्दो। अन्धाइसाः। दायिवामधो३ः। वायार२आर२३४ता। पवा मा१नार२। स्यमा३। रूर२३४तो६ह्वायि॥(२) दिवःपीयूषम्। उत्ता३माम्। सोममिन्द्रा३। यावार२आर२३४यिणायि। सुनोता१मा२। धुमा३। तार२३४मो६ह्वायि(३) ॥ १ * ॥ [२]

॥ मार्गीयवम्† ॥ अध्वौहोवा। र्य्योआर२। द्रिभायिःसूर२३४ताम्। सोममवि। त्रआना१या२। पुना। हा। औ३होयि। हो२३४न्द्रा। यार२आर२३४औहोवा। ए३। तवेर२३४५॥(१) तवौहोवा। त्याआरयि। दो

* ऊ० गा० ४प्र० २अ० १सा०।

† "मार्गीयवम्"—इति ख० पु० पाठः।

२ ३ ५ १२२ १ २ १ १ १२
अन्धा२३४साः । देवामधोः । वियाश्शा१ता२ । पवा ।
२ २ ३ ५ १ २ ३ ५२ २
हा । औ३हो यि । मा२३४ना । स्था२मा२३४औहो
२ १ ११११ २२ १ २ १
वा । ए३ । ऋता२३४५ः ॥(२) दिवौहोवा । पीयू२ ।
३ २ ३ ५ १२ २२ १ २
षमुत्ता२३४माम् । सोममिन्द्रा । यवाज्रा१यिणा२यि ।
१२ २ २ ३ ५ १ २
सुनो । हा । औ३होयि । ता२३४मा । धू२मा२३४
५२ २ २ १ ११११
औहोवा । ए३तमा२३४५म् (३) ॥ २ * ॥ [३]

२ २ २ १२
॥ सोमित्रम् ॥ अध्वर्यो अद्रिभिः सुता३मे । सोम
२ २ २ १ २ २
म्पवित्रे । आ२१२३ । नया३४३ । पू२३ना । इन्द्रा
१ ४ ५ ४ ५ २ २
२ओ२३ । यपोवा । ता५ो६हायि ॥(१) तवत्यइन्दो
२ १२२ २ २ २
अन्धसा३ए । देवामधोर्वि । आ२१२३ । श्राता ३ ४ ३ ।
१ २ २ १ ४ ५ ४ ५
पा२३वा । मार्ना२ओ२३ । स्यसोवा । ऋ५ तो ६ हा
२ २ २ २ १२ २ १
यि ॥(२) दिवःपीयूषमुत्तमा३मे । सोममिन्द्राय । वा

---

* ऊ० गा० ४प्र० १अ० १मा० ।

२१२३ । जिणा३४३यि । सू२३नो । तामा२श्रो२३ ।
धुमोवा । ता५मोई३यि(३) ॥ ३ * ॥ [४]

॥ ऐटतम् ॥ अध्व । एश्राध्वा । यौंश्रद्रि । भा३
यिः । द्रा२यिभा२३४औहोवा । मू२३४ताम् । सोमा
स्या२३४वी । त्रश्रा३ । त्रा२श्रा२३४औहोवा । ना२३
४या । पुनाहा२३४यिन्द्रा । यपा३ । या२पा२३४औ
होवा । ता२३४वे ॥(१) तव । एतावा । त्यइन्दो । श्रा३ ।
दो२श्रा२३४औहोवा । धा२३४माः । देवामा२३४धोः ।
विया३ । वा२या२३४औहोवा । ग्रा२३४ता । पवामा
२३४ना । स्यमा३ । स्या२मा२३४औहोवा । ह२ ३ ४
ताः ॥(२) दिवः । एदायिवाः । पीयूषम् । ऊ३ । षा
२मू२३४औहोवा । ता२३४माम् । सोमामा२३४यिन्द्रा ।

* ऊ० गा० ४प्र० २ख० ३सा० ।

यवा३ । या२वा२३४औहोवा । ओ२३४णे । सुनोता
२३४मा । धुमा ३ । धू२मा२३४औहोवा । ता २ ३ ४
माम्(३) ॥ ४ *॥ [५]

॥ धुरासाकमश्वम् ॥ अध्वर्य्यों आ३ । हौ३हो३१ । द्रि
भिःसुता३म् । हौ३हो३१यि । सोमम्पवा३यि । हौ३
हो३१ । त्रआनया३ । हौ३हो३१यि । पुनाहीन्द्रा ३ ।
हौ३हो३१ । यपातवा३यि । हौ३हो३१२३४५ई । डा ॥(१)
तवत्यआ३ । हौ३हो३१ । दोअन्धसा३ः । हौ३हो३१
यि । देवामधा३ः । हौ३हो३१यि । वियाशता३ । हौ
३हो३१यि । पवमाना३ । हौ३हो३१ । स्यमरुता:३ ।
हौ३हो३१२३४५ई । डा ॥(२) दिवःपीयू३ । हौ३हो३
१ । षमुत्तमा३म् । हौ३हो३ १ यि । सोममिन्द्रा ३ ।

* ऊ० गा० ४प्र० ०अ० ४गा० ।

हौ३हो३१ । यवज्रिणा३यि । हौ३हो३१यि । सुनोतामा
३ । हौ३हो३१ । धुमत्तमा३म् । हौ३हो३१२३४५ई ।
डा (३) ॥ ५ * ॥ [६]

॥ विलम्बसौपर्णम् ॥ अध्वर्यो अद्रिभिः सुतम् । ईय
इयाहायि । सोमम्पवित्र आ । हा३हा३यि । ना२३४
या । पूना३उवा३ । हा२यिन्द्रा२३४औहोवा । यपा
तवे२३४५ ॥(१) तवत्य इन्दो अन्धसः । ईयईयाहायि ।
देवामधोर्वियाः । हा३हा३यि । शा२३४ता । पावा३
उवा३ । मा२ना२३४औहोवा । स्यमरुता२३४५: ॥(२)
दिवः पीयूषमुत्तमम् । ईयइयाहायि । सोममिन्द्रायवा ।
हा३हा३ । ज्रा२३४यिणायि । मूना३उवा३ । ता२मा
२३४औहोवा । धुमत्तमा२३४५म् (३) ॥ ६ † ॥ [७]

---

* ऊ० गा० ४प्र० २ख० ५सा० ।

† ऊ० गा० ४प्र० २ख० ६सा० ।

॥ सौपर्णम्* ॥ अध्वर्य्यो ओवा। द्रायिभायिःसू२३४ताम्। सोमाम्पवायि। त्र्आ२ना२३४या। पू२ना। ह्वा२३यिन्द्रा। यापातवा। औ३हो्वा ॥(१) तवत्य ओवा। दो अन्धा२३४साः। देवामधाः। विया२शा २३४ता। पा२वा। मा२३ना। स्यामरुता। औ३ होवा ॥(२) दिवःपीयोवा। षामुत्ता२३४माम्। सोमामिन्द्रा। यवा२ज्रा२३४यिणायि। मू२नो। ता२३मा। धूमत्तमाम्। औ२३होवा। हो५ई। डा(३)

॥ १३ † ॥ [८]

॥ रोहितकुलीयोत्तरम् ॥ अध्वर्य्यो अद्रिभायिः। सुता२म्। सोमम्पवित्र्आना२३या। पूना२ह्वायिन्द्रा२१। यपो२३४वा। ता५वो६ह्वायि ॥(१) तवत्यइन्दो त्र्आ।

* "ऐडसौपर्णम्"—इति ख० पु० पाठः।

† ऊ० गा० १६प्र० २ख० १३सा०।

धमा२ः। देवामधेर्वियाशा२३ना। पावा२माना२३।
स्यमो२३४वा। ह५तो६हायि॥(२) दिवःपीयूषम्। त
मा२म्। सोममिन्द्रायवज्रा२३यिणायि। सूनो२तामा
२३। धुमा२३४वा। ता५मो६हायि(३)॥ १४ *॥ [८] ११

धर्त्तादिवइति तृचात्मकं द्वितीयं सूक्तम्।†

तत्र प्रथमा।

धर्त्तादिवःपवतेकृत्व्योरसो
दक्षोदेवानामनुमाद्योनृभिः।
हरिःसृजानोअत्योनसत्वभि
र्वृथापाजांसिकृणुषेनदीष्वा॥ १ ‡॥

---

* ऊ० गा० १६प्र० ७ख० १४सा०।

† 'अभिसोमासआयवइति बृहत्य, धर्त्तादिवो जगत्यः त्रिष्टुभो रूपेण'—इति वि०। यथा पूर्वमभिसोमासइति (२, २, ८, १=३भा० ४०१पृ०) तथैवात्र धर्त्ता दिवइति भावः।

‡ ऋ० सा० ६, २, २, ५ (२भा० १८१पृ०)=ऋ० वे० ७, ३, १, १।

"धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्त-रिक्षस्थितात् दशापवित्रात् "पवते" पूयते। कीदृशः सोमः? "क्रत्व्यः" कर्त्तव्यः शोध्यइत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः" बलप्रदः [यद्वा, दक्षः प्रवर्द्धनीयो देवानामर्थाय]। तथा "नृभिः" नेतृभिः ऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। शेषः प्रत्यक्षकृतः। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न" अश्वइव [स यथा शिक्षितोऽनायासेन गच्छति तद्वत्] "वृथा" अप्रयत्नेन "पाजांसि" बलानि स्वीयान् "कृणुषे" कुरुते "नदीषु" वसतीवरीषु ताभिरित्यर्थः॥

"कृणुषे"-"कृणुते"—इति पाठौ॥१॥

अथ द्वितीया।

२ ३ १२ ३ १ २ ३ १ २ ३
शूरो नधत्त आयुधा गभस्त्योः
२ १ २ ३ १२ २२
स्वाऽ३ःसिषासन्रथिरो गविष्टिषु।
१ २ ३ १ २ ३ १ २ ३ २ ३
इन्द्रस्य शुष्ममीरयन्नपस्युभि
१ २ ३ १ २ ३ १ २
रिन्दुर्हिन्वानो अज्यते मनीषिभिः॥२*॥

अयं सोमः "गभस्त्योः" हस्तयोः "आयुधा" आयुधानि

* ऋ० वे० ७, ३. १, २।

"शूरो न" शूर इव "धत्ते" धारयति,* "स्वः" स्वर्गं सुख-साधनं यज्ञं वा "सिषासन्" सम्भक्तुमिच्छन् "रथिनः" रथवान् [ रथादिन-प्रत्ययः ] "गविष्टिषु" यजमानस्य गवामेषणेषु सत्सु यजमानोऽहं गो-सम्भजनाय रथवानित्यर्थः । "इन्द्रस्य" "शुष्मं" बलम् "ईरयन्" प्रेरयन् "इन्दुः" सोमः देवः "अपस्युभिः" कर्मेच्छुभिः† "मनीषिभिः" मेधाविभिः ऋत्विग्भिः "हिन्वानः" प्रेर्यमाणः "अज्यते"‡ गोभिः ॥ २ ॥

अथ तृतीया ।

इन्द्रस्यसोमपवमानऊर्मिणा

तविष्यमाणोजठरेष्वाविश ।

प्रनःपिन्वविद्युदभ्रेवरोदसी

धियानोवाजाँउपमाहिशश्वतः ॥ ३ ¶ ॥ १२

हे "सोम !" "पवमान" पूयमान ! त्वं "तविष्यमाणो" वर्द्धिष्यमाणः§ सन् "इन्द्रस्य" "जठरेषु" "ऊर्मिणा" प्रभूतया

* 'असि-परशु-पाश-प्रभृतीनि यथा शूरः धारयति तद्वत् सोमः धारयतीति स्रुक्-स्रुव-ग्रह-चमसान्यायुधानि गमस्तयोः'—इति वि० ।

† 'अपस्युभिः—अपइच्छद्भिः ऋत्विग्भिः'—इति वि० ।

‡ 'अज्यते—अज क्षेपणे, क्षिप्यते'—इति वि० ।

¶ ऋ०.वे० ७, ९, १, ३ ।

§ 'तविष्यमाणः—स्तूयमानः'—इति वि० ।

धारया "आ विश" जठर-प्रदेशस्य बाहुल्यात् बहुवचनम्* "नः" अस्मदर्थं "विद्युत्" "अभ्रेव" अभ्राणीव सा यथा अभ्राणि दोग्धि तद्वत् "प्र पिन्व" धुच "रोदसी" द्यावापृथिव्यौ† किञ्च "धिया" कर्मणा‡ "नः" अस्मभ्यं "शश्वतः" [बहुनामैतत् (निघ० ३, १, ५)] बह्वन् "वाजान्" अन्नान् "उप" समीपे "माहि" निर्मोहि ॥

"माहि"-"मासि"—इति पाठौ, "नः"-"न"—इति च ॥३।१२

॥ उद्वङ्गार्गवम् ॥ धर्त्तादायिवा२३ः। पवतायिका २३। त्वीयोरसाः। दत्तोदायिवा२३। नामनूमा२३। दीयोनूभायिः। हरिःमार्ज्जा२३। नोअतायियो२३। नासत्वभायिः। वृथापाजा२३। सिक्रणूषा२३यि। ना दीघुवा३१उ ॥(१) शूरोनाधा२३। तंआयूधा२३। गा भस्तियोः। सुवःसायिषा२३। सन्नथायिरो२३। गाविष्टि

---

* 'जठरेषु आविश'—सप्तम्या बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्।

† 'प्र प्र पिन्व—पुनःपुनः पूरय दीपयास्मान् विद्युदभ्रे यथा अभ्राणीव रोदसी द्यावापृथिवी व्यापय'—इति वि०।

‡ धिया—बुद्ध्या—इति वि०। "धीः"—इति निघण्टौ कर्मनामस्वेकविंशति-तमम्पदम् (२, १)।

२ १ २र १ ३र १
षु। इन्द्रत्वाशू२३। षमीरायार२३न्। आपस्तुभायिः।
१ १ र १ १र १र
इन्दुर्ह्वायिन्वा२३। नोअज्याता२३यि। मानीषिभा३१
२ १ २ १ २र १र
उ ॥(२) इन्द्रत्वासो२३। मपवामा२३। नाऊर्मिणा।
२ १ २र १ २र १र २
तविष्यामा२३। णोजठारा२३यि। षुआविशा। प्रनः
१ २ १ २र १र २ र १
पायिन्वा२३। विद्युदाभ्रे२३। वारोदसायि। धियानो
२र १ २र १ २ १ १ १ १
वा२३। जाऽ३उपामा२३। हौमस्वता३१उवा२३४५ (३)

॥ १४ * ॥ [१]

२ १ र २ र १
॥ कावम् १ ॥ धर्त्तावा। दिवःपवतेका। त्वियोरा
१ र र र र २ र १ १
सो२ः। दक्षोदेवानामनुमा। दियोन्दभा२यिः। हरिः
र र २ १ १ २ ४ ५
सृजानोअतियो। नसत्वाभा२३यिः। वार्थो ३ पाजा।
२ १ १ २ ४ २र १
सिक्नणूषा२३यि। नादा३यिषू५वा६५६ ॥(१) शूरोवा।
र २ १ १ र
नधत्तआयुधा। गभस्तायो२ः। स्वःसिषासन्नथिरो।

* ऊ० गा० ४प्र० २ख० १४सा०। "स्वारकावम्"—इति ख० पु० पाठः।

गविष्टायिषू२ । इन्द्रस्यप्रुष्ममीरयान् । अपस्युभार३यिः ।
आयिन्द्३हीयिन्वा । नोअज्याता२३यि । माना३यिषा
पुयिभा६५६यिः ॥(२) इन्द्रोवा । स्यसोमपवमा । नऊ
र्म्मायिणा२ । तविष्यमाणोजठरायि । पुआवायिशा२ ।
प्रनःपिन्वविद्युदभ्रे । वरोदासा२३यि । धाया३नोवा ।
जा(०)उपामा२३ । क्षीया३स्वा५ता६५६ः(३) ॥ १६ * ॥ [२]

॥ यज्ञायज्ञीयम् ॥ धर्त्ताऽ५दि । वा३ःपा३वतेका ।
त्वीयेरसोदक्षोदेवानामनुमा । दी३येनृ३भायिः । हरा
२यिःसृजानोअत्योमत्व । भिर्वा२३र्था । ऊम्मायि । पा
३जा । सायिकृणुषेनदा२यिषवाउ ॥(१) आमू । रो
नधक्तआयुधागभस्त्योःस्वःसिषासन्नयिरो । गा३वायिष्टा
३यिषू । इन्द्रा२स्यप्रुष्ममीरयन्नपस्यु । भिरा२३यिन्दः ।

* ऊ० गा० ६प्र० १अ० १६गा० ।

१ १ २ १ र ३ २
ऊम्मायि। हा३यिन्वा। नोअज्यतेमना२यिषिभाउ॥(२)
१ २ १ र र र र र र
भायिरायि। द्रस्यमोमपवमानऊर्म्मिणातविष्यमाणोजठरा
२ १ २ २ १ १ र र
यि। षू३आवा३यिशा। प्रना२:पिन्वविद्युदभ्रेवरोद।
र २ १ २ २ १ र
सीधार२३या। ऊम्मायि। नो३वा। जा॰उपमाहिशा२
३ २ १ १ १
स्वताउ। वा३४५(३)॥ १५ * ॥ [३]

१ २ २ २ १
॥ शाक्करम् † ॥ हाउधार्त्ता। दा२३४यि। वःपवते
र १ ३ २ १ ३ २ १ २
क्रत्वियोरसा। एहिया। एहिया३४। हाउदाक्षाः।
१ २र र र र १ ३ २ १ ३
दा२३४यि। वानामनुमादियोनृभिः। एहिया। एहि
२ १ ० १ २र र र
या३४। हाउहारीः। सा२३४। जानोअत्योनसत्व
१ ३ २ १ ३ २ १ २ १
भिः। एहिया। एहिया३४। हाउवार्था। पा२३४।
२र र र र १ ३ २ १ ३ २ ५
जा॰सिक्तणुषेनदीषुवा। एहिया। एहिया३४। हाउ॥(१)
१ २ १ २ र र र १ ३
हाउप्रूराः। ना२३४। धत्तआयुधागभस्त्योः। एहि

* ऊ० गा० १५प्र० १ख० १५सा०।   † "शार्गम"—इति ख० पु० पाठः।

या । एहियाइ४ । हाउस्वाः । सा२३४यि । षास
नृथिरोगविष्टिषु । एहिया । एहियाइ४ । हावायिन्द्रा ।
स्या२३४ । ऊस्मीरयन्नपस्युभिः । एहिया । एहिया
३४ । हावायिन्दूः । हा२३४यि । न्वानोअज्यतेमनो
षिभिः । एहिया । एहियाइ४ । हाउ ॥(२) हावायि
न्द्रा । स्या२३४ । सोमपवमानऊर्म्मिणा । एहिया ।
एहियाइ४ । हाउतावायि । ष्या२३४ । माणोजठरेष्वा
विश । एहिया । एहियाइ४ । हाउप्रानाः । पा२३४
यि । न्वविद्युदभ्रेमवरोदसी । एहिया । एहियाइ४ ।
हाउधाया । नो२३४ । वाजाँउपमाहिशश्वतः । एहि
या । एहियाइ४ । हाउ । वो५ई । डा(३) ॥ २० * ॥ [४]

॥ वासिष्ठम् † ॥ उड़वायि । धर्त्ता३४औहोवा । दि

* ऊ० उ० १७प्र० १ख० २०सा० ।

† "उड़वायि वासिष्ठम्"—इति ख० पु० पाठः ।

२ १ ९   २ २ ४र ५   ३ २   ३र ४र ५   १र
वाः। पवते। क्रत्वियोरसाः। दत्ता३४औहोवा। दे

१ १   २र ३ ४र ५   ३ २   ३र ४र ५
वा। ना३मनु। मादियोनृभायिः। हरा३४औहोवा।

१   २ १   २र ३ ४ ५   ३ २   ३र ४र ५
वृजा। नो३अति। योनसत्वभायिः। वृथा३४औहोवा।

१र   २ १   २र   ३ २   ४   ३र
पाजा। सिक्णु। षे। नदा३यिषृ५वा६५६॥(१) शूं

२   ३र ४र ५   १   २   १र   २र ३ ४   ५
रा३४औहोवा। नधा। ता३आयु। धागभस्तियोः।

३ २   ३र ४र ५   १   २ १   २र ३ ४ ५
सुवा३४औहोवा। सिषा। सा३नृथि। रोगविष्टिषू।

३ २   ३र ४र ५   १   २ १   २ ३ ४   ५
इन्द्रा३४औहोवा। स्यशू। ष्मा३मीर। यंन्नपस्युभा

३ २   ३र ४र ५   १   २र १   २र   ३
यिः। इन्दू३४औहोवा। चिन्वा। नो३अज्य। ते। म

२   ४   ३ २   ३र ४र ५   १
ना३यिषा५यिभा६५६यिः॥(२) इन्द्रा३४औहोवा। स्य

१ १   २र ३ ४र   ५   ३ २   ३र ४र ५
सो। मा३पव। मानऊर्म्मिणा। नषा ३ ४ औहोवा।

१   २ १   २र ३ ४र   ५   ३ २   ३र ४र   ५
ष्यमा। णो३जठ। रेष्वाविशा। प्रना३४औहोवा।

१   २ १   २र ३ ४र ५   ३ २   ३ २
पिन्वा। विद्य द। भ्रंवरोदसायि। उक्षवायि। धिया

३४औहोवा। नोवा। जा७उप। मा। हिम्रा३स्वा

५ताई५६:(३) ॥ १६ * ॥ [५]

॥ वायोरभिक्रदन् † ॥ धर्त्तादिवःपवतेकृत्वियो। हो

यिरासाः। दक्षोदेवानामनुमादियो१नृ३भायिः। हरिः

सृजानोअत्तियोनसा१त्वा३भायिः। वा२३४र्था। पा२३४

जा। सायिक्तणुषा३यि। हा२३यि। नदा३यिषू५वा६

५६ ॥(१) शूरोनधत्तआयुधागभौ। होस्तायोः। स्वःसि

षासन्नथिरोगवा१यिष्टा३यिषू। इन्द्रस्यशुष्ममीरयन्नपा१

स्यू३भायिः। आ२३४यिन्दूः। हा२३४यिन्वा। नोअ

ज्यता३यि। हा२३यि। मना३यिषा५यिभा६५६यिः ॥(२)

इन्द्रस्यसोमपवमानओ। होर्म्मायिणा। तविष्यमाणो

जठरेषुआ१वा३यिशा। प्रनःपिन्वविद्युदभ्रेवरो१दा३सा

* ऊ० गा० २३प्र० २ख० १६गा० ।

† "वायोरभिक्रन्दः"—इति ख० पु० पाठः ।

२ ५ ३ ५ १ २ ३ १ १
यि। धा२३४या। नो२३४वा। जा७उपमा३। हा२

२ ४
३। चिश्रा३स्वा५ता६५६ः(३) ॥ १८ * ॥ [६] १२

अथ प्रगाथरूपे तृतीयसूक्ते†—

प्रथमा।

१ २ ३ २उ ३ २ ३क २र ३ १ ३ १ २
यदिन्द्रप्रागपागुदग्न्यग्वाहूयसेनृभिः।

१ २ ३ १र २र ३ २ ३ १ ३ १ २
सिमापुरूनृषूतोअस्यानवेसिप्रशर्द्धतुर्वशे ॥ १ ‡ ॥

हे "इन्द्र!" "यद्" यदि "प्राक्" प्राच्यां दिशि वर्त्तमानैः [सप्तम्यां प्राक्-शब्दात् विहितस्यास्तातेः¶"अञ्चेर्लुगिति(५,३,३०) लुक्], यदि वा "अपाक्" प्रतीच्यां दिशि वर्त्तमानैः, यदि वा "उदक्" उदीच्यां दिशि वर्त्तमानैः यद्वा "न्यक्" नीच्यां दिशि अधस्ताद्वर्त्तमानैः ["न्यधी च (६,२,५३)"—इति प्रकृतिस्वरत्वम्, "उदात्तस्वरितयोर्यणः (८,२,४)"—इति परस्यानुदात्तस्य स्वरितत्वम्]; एवम्भूतैः "नृभिः" स्तोतृभिः त्वं "हूयसे" स्व-स्व-कार्थ्याय आहूयसे ["हिंसिमश्रेष्ठेन्द्रसिमइतिवैश्रेष्ठमाचक्षतइति वाजसनेयकम्]। यद्यप्येवं बहुभिराहूयसे तथापि "अनवे"

---

* ऊ० गा० १३प्र० २अ० १९सा०।

† उक्तो माध्यन्दिनः पवमानः, इदानीं पृष्ठान्युच्यन्ते—इति वि०।

‡ छ० आ० ३, २, ४, ७ (१भा० ५७३पृ०) = ऋ० वे० ५, ७, ३०, १।

¶ "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः"—इति पा० ५, ३, २७।

अनुर्नाम राजा तस्य पुत्रे राजर्षौ "पुरु" बहुलं "नृषूतः" नृभि-स्त्वदीयैः स्तोतृभिः प्रेरितः "असि" भवसि राज्ञो हितकरणे त्वां स्तोतारः प्रीणयन्तीत्यर्थः [षु प्रेरणे, अस्मात् कर्म्मणि निष्ठा "तृतीया कर्म्मणि (६,२,४८)"—इति पूर्वपद-प्रकृति-स्वरत्वम्] अपिच हे "प्रशर्द्ध" प्रकर्षेण शर्द्धयितरभिभवितरिन्द्र! "तुर्वशे" —एतत्संज्ञके राजनि नृषूतोऽसि नृभिः प्रेरितोऽसि भवसि ॥१॥

अथ द्वितीया।

यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा।

कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रा यच्छन्त्या गहि ॥२* ॥१३

"यद्वा" यद्यपि "रुमे" रुमादिषु चतुर्षु राजसु हे "इन्द्र"! त्वं "सचा" सह "मादयसे" मादयसि तथापि "ब्रह्मवाहसः" ब्रह्मणां स्तोत्राणां वोढारः अथवा अन्नानां वोढारः "कण्वासः" कण्वगोत्रा ऋषयः "स्तोमेभिः" स्तोत्रैः स्तोत्रसमूहैः सह "इन्द्र!" त्वाम् "आयच्छन्ति" आयमयन्ति अतस्त्वम् "आगहि" शीघ्र-मागच्छ [गमेर्लोटि छान्दसः (२, ४, ७३) शपो लुक्]॥

"स्तोमेभिर्ब्रह्मवाहसः"—"ब्रह्मभिः स्तोमवाहसः"——इति पाठौ॥ २ ॥ १३ .

॥ नैपातिथम् ॥ यदिन्द्रप्रागपागुदा३गे। नायमवा

* ऋ० वे० ५, ७, २०, १।

२ १ २ २ ३र ५ १
द्र। यसायिनृभी३ः। हा। औहो२३४हा। सिमा२

१र १२र १ २ १ ७ २ ३र ५
पुरूनृषूतोअ। सियानवे२३। हा। औहो२३४हा।

१ २ २ ३र ५ १ ३ ५र
असायिप्रागा३। हा। औहो२३४हा। धा२तू२३४औ

र ५ २ २ १
होवा। वा२३४शे॥(१) अमिप्रग्रर्दतुर्वशा३ए। आसि

२ १ २ २ ३र ५ १ १२र
प्रश। धतूर्वशे३। हा। औहो२३४हा। यदा२रूमे

१२र १र २ १ ७ २ ३र ५ १
रुशमेच्या। वकायिक्रपा२३। हा। औहो२३४हा। इ

२ २ ३र ५ १ ३ ५र
न्द्रामादा३। हा। औहो२३४हा। या२सा२३४औ

३ ५ २ र र २ १
होवा। सा२३४चा॥(२) इन्द्रमादयसेसचा३ए। आ

२र १ २ २ ३र ५
यिन्द्रमाद। यसायिसचा३। हा। औहो२३४हा।

१ र १र र २ १ २ १ ७ २ ३र
कण्वा२सस्वास्तोमेभिर्। ह्मवाहमा२३ः। हा। औ

१ १ २ ३र ५
हो२३४हा। इन्द्रायाच्छा३। हा। औहो २ ३ ४ हा।

१ ३ ५र र ३ ५
तार्आ२३४औहोवा। गा२३४हो(३)॥ १५ *॥ [१] १३

* ऊ० गा० ४प्र० २ख० १५सा०।

अथ प्रगाथे चतुर्थसूक्ते*—

प्रथमा ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ १ २र
उभयꣳशृणवच्चनइन्द्रोअर्वागिदंवचः ।
३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
सत्राच्यामघवांत्सोमपीतयेधियाशविष्ठआगमत् ॥ १ † ॥

"उभयं" स्तोत्रात्मकं शस्त्रात्मकञ्चोभयविधम् "इदं" "वचः" "अर्वाग्" अस्मदभिमुखम् इन्द्रः "शृणवत्" शृणोतु त्वञ्च "मघवान्" धनवान् इन्द्रः "सत्राच्या" अस्माकं सह अञ्चन्त्या "धिया" युक्तः सन् "शविष्ठः" अतिशयेन बलवान् "सोमपीतये" सोमस्य पानाय "आगमत्" आगच्छतु ॥ १ ॥

अथ द्वितीया ।

१उ ३ १ २ ३ १र २र ३ १ २ ३ १ २
तꣳहिस्वराजंवृषभन्तमोजसाधिषणेनिष्टतक्षतुः ।
३२ ३ १ २ ३ १र ३र ३ १ २ ३ २३ १ २
उतोपमानाम्प्रथमोनिषीदसिसोमकामꣳहितेमनः ।२ ‡॥१६

"तंहि" तं खल्विन्द्रं "स्वराजं" स्वयमेव राजमानो "धिषणे" द्यावापृथिव्यौ "वृषभं" जगदुपकारकं वृष्टेर्वर्षकम् "ओजसा" बलेन "निष्टतक्षतुः" सञ्चरतुः "उत" अपिच यस्मादेवं तस्मात् हे

* 'अच्छावाकं साम'—इति वि० ।

† छ० आ० ३, २, ४, ८ (१भा० ५९१पृ०)=ऋ० वे० ६, ४, ३५, १ ।

‡ ऋ० वे० ६, ४, ३५, २ ।

इन्द्र ! उपमानभूतानामन्येषां देवानां मध्ये "प्रथमः" मुख्यः सन् "निषीदसि" वेद्यां सोमकामं "हि" खलु ते मनः ॥

"ओजसा"-"ओजसः"—इति पाठौ ॥ २ ॥ १४

॥ वैयश्वम् ॥ उभय७ंशृणवच्चनाइए । आयिन्द्रो२ अर्वागिदंवचा२३ः । होवा३हायि । सत्राचियामघवा २न् । सो । मापा३हायि । ता२३४यायि । धियाप्र विष्ठआ२३होयि । गमात् । औ२३होवा ॥(१) धिया प्रविष्ठआगमा३दे । धाया २प्रविष्ठआगमा२३त् । हो वा३हायि । त७ंहिस्वराजा २वृषभाम् । तामो३हायि । जा२३४सा । धिषणेनिष्टता२३होयि । चतुः । औ२३ होवा ॥(२) धिषणेनिष्टतक्षतू३रे । धायिषा २णेनिष्टत क्षतू२३ः । होवा३हायि । उतोपामा२प्रथमो । नायि

षा३र्व्वायि। दा२३४सायि। सोमकामꣳह्वितार३यिद्दो

यि। मना। औ३होवा। ह्वो५ई। डा(३)॥ १६* ॥[१]

॥ वाम्रम् ॥ उभयꣳश्रा। णवाच्चा१ना२ः। इन्द्रो

अर्वागिदांवा१चा२ः। सत्राच्चामघवांत्सोमपायिता१या

२यि। धियाग्रा २ ३ वा ३यि। ष्ठा२आ२३४औहोवा।

गा २ ३ ४मात् ॥(१) धियाग्रवायि। ष्ठआगा१मा२त्।

धियाग्रविष्ठआगा१मा२त्। तꣳहिस्वराजंवृषभन्तामो१

जासा२। धिषणे२३ना३यिः। ता२ता २ ३ ४औहोवा।

ह्वा२३४तूः ॥(२) धिषणेनायिः। तताक्षा१तू२ः। धि

षणेनिष्टताक्षा१तू२ः। उतोपमानाम्प्रथमोनिषायिदा१

* ऊ० गा० ४प्र० २अ० १६सा०।

र १ २ १ ३ ५र र
सा॑रयि। सोमका२३मा३म्। हारयिता२३४औहोवा।
३ ५
मा२३४नाः(३)॥ ७* ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य
सप्तमः खण्डः† ॥ ७ ॥

---

अथाष्टम-खण्डे—

तृचात्मके प्रथमसूक्ते—

प्रथमा।

१ २ ३ १ २ ३ १र २र ३ १ २
पवस्वदेवआयुषगिन्द्रङ्गच्छतुतेमदः।
३ १र २र ३ १ २
वायुमारोहधर्म्मणा॥ ‡ १॥

हे सोम! "देवः" द्योतमानः त्वं "पवस्व" धारया क्षर। अपिच "ते" तव "मदः" मदकरः रसः "आयुषक्" तम् "इन्द्रं" प्रति "गच्छतु" अपिच त्वं "वायुं" "धर्मणा" धारकेण रसेन "आरोह" प्राप्नुहि॥

"देवः"-"देव"—इति पाठौ॥ १॥

---

* ऊ० गा० १८प्र० २ख० ७वा०।

† 'उक्तानि षष्ठानि'—इति वि०।

‡ छ० आ० ६, २, १, ५ (१भा० ३७पृ०)=ऋ० वे० ७, ५, २३, १।

अथ द्वितीया।

१२ ३ १२ ३१ २ ३१ २
पवमाननितोशसेरयिꣳसोमश्रवाय्यम्।
१२ ३१२ २२
इन्दोसमुद्रमाविश॥ २ *॥

हे "पवमान!" "इन्दो!" "सोम!" त्वं "श्रवाय्यं" श्रवणीयं "रयिं" शत्रूणां धनं "नि तोशसे" अतितरां पीडयसि† स त्वं "समुद्रं" द्रोणकलशम् "आ विश" प्रविश॥

"इन्दो"-"प्रियः"—इति पाठौ॥ २॥

अपघ्नन्पवसेमृध इति तृतीया‡।

३ १ २ ३१२
अपघ्नन्पवसेमृधः०॥ ३॥ १५

ऋचः प्रतीकमिदम्॥ सा च छन्दस्याम्नाता (६, १, १, ६= २भा० ४८ पृ०) व्याख्याता च॥ ३॥ १५

२ १ १ १ २
॥ सुरूपाद्यम्॥ पवस्वदा२यि। इया२इया। व
२ १ १ १ १ २२१
आयूषा२क्। इन्द्रञ्च्छा२। इया२इया। तुतेमा

---

* ऋ० वे० ७, ४, २१, ५।

† 'तोशसे—तंश दाने ददासि'—इति वि०।

‡ छ० आ० ६, १, १, ६ (२भा० ४९पृ०)=ऋ० वे० ७, १, ३४, ४।

दा२ः । वायुमारो२ । इया२इया । द्धर्मा२३णा३
४३ ॥(१) पवमाना२ । इया२इया । नितोशासा२यि ।
रयिꣳसोमा२इया । श्रवाआया२ । इन्दोसमू२ । इया
२इया । इमावा२३यिश्रा३४३ ॥(२) अपघ्नपा२ । इया
२इया । वसेमार्द्धा२ः । क्रतुवित्सो२ । इया२इया ।
ममत्सारा२ः । नुदस्वादा२यि । इया२इया । वयु
ञ्जा२३ना३४३म् । ओ२३४५ई । डा(३) ॥ १७ * ॥ [१]

॥ भासम् † ॥ पव । स्वा३दायि । वाः । ईया । आ
यू१षा२क् । आयिन्द्रङ्गच्छ । तु । तौ३च्चो । वाहा
यि । मदा२ः । वायू२३म् । आ२रो२३४औहोवा ।
द्धर्म्मणा१ ॥(१) पव । मा३ना । नायि । ईया । तो
शा१सा२यि । रायिꣳसोम । आवौ३च्चों । वाहायि ।

* ऊ० गा० ४प्र० २ख० १७सा० ।
† "गायत्रीभासम्"—इति ख० पु० ।

ईया२म्। इन्दो२३। सा२मू२३४औहोवा। द्रमा

विश्वा१॥(२) अप। ध्वा३न्पा। वा। ईया। सायि

मार्ष्वा२ः। क्रातुवित्सो। म। मौ३हो। वाहा। त्सरा२ः।

नुदा२३। स्वा२दा२३४औहोवा। वयुञ्जना१म्(३)

॥ १८ * ॥ [२]

॥ काचीवन्तम् † ॥ पवस्वा३देवआयुषाक्। इन्द्रा

ङ्गच्छ। तुतेमदा३ः। ओ३४। हाहोयि। वायूमा२

३रो। हधोहोयि। औहो२३४वा। मा५णो६हायि ॥(१)

पवमाननितोश्रमायि। रयायि७मोम। श्रवायिया३म्।

औ३४। हाहोयि। इन्दोसा२३म्। द्रमौहोयि। औ

हो२३४वा। वा५यिशो६हायि ॥(२) अपघ्ना३न्पवसेमृ

धाः। क्रतूवित्सो। ममत्सरा३ः। ओ३४। हाहोयि।

* ऊ० गा० ४प्र० १ख० १८सा० ।

† "काचीवतम्"—इति ख० पु० पाठः।

नुदाखार२३दाथि। वायौहोयि। औहो२३४वा। जा
पूनोई२हायि(३) ॥ १८ * ॥ [३]

॥ गायत्रासितम् † ॥ पवस्वदेवआ। इया३४३ई३४
या। युषागिन्द्रङ्गच्छनुतौ२। चौ२। ऊवा२यि। मा
दा२ः। वायू३ऽ२होयि। आरो३हो। इधर्म्मा२३णा
३४३ ॥(१) पवमाननितौ। इया३४३ई३४या। भसायि
रयिऽसोमश्रवौ२। चौ२। ऊवा२यि। आया२म्।
इन्दो३होयि। समू३हो। द्रमावा२३यिशा३४३ ॥(२)
अपघ्नन्पवसे। इया ३४ ३ई३४या। मृधाःक्रतुवित्सोम
मौ२। चौ२। ऊवा२यि। त्सारा२ः। नुदा३हो
यि। खादा३हो। वयुञ्जा२३ना३४३म्। ओ२३४५ई।
डा(३) ॥ २० ‡ ॥ [४]

* ऊ० गा० ४प्र० १ख० १९सा०।
† "वासिष्ठमासितम्"—इति ख० पु०।
‡ ऊ० गा० ४प्र० १ख० २०सा०।

॥ ऐडसैन्धुक्षितम् ॥ पवस्वदो। हायि। वश्रायर ३षाक्। इन्द्रङ्क्ष्क्तुता१यिमा३दाः। वायुमारो२३४ हायि। हाधा३हा। मणा। श्रौ३होवा ॥(१) पव मानो। हायि। नितोशा२३सायि। रयिॅसोमश्रवा१ श्रा३याम्। इन्दोसमो२३४हायि। द्रामा३हायि। वि शा। श्रौ३होवा ॥(२) श्रपघ्नन्यो। हायि। वसेमा २३र्द्धाः। क्रतुवित्सोममा१त्सा३राः। नुदस्वादो२३४हा यि। वायू३ॅहायि। जनाम्। श्रौ२३होवा। हो५ ई। डा(३) ॥ १* ॥ [५] १५

अथ तृतीयसूक्ते तृचात्मके—

अभीनोवाजसातममिति प्रतीकम्,

अभीनोवाजसातमं०॥ १† ॥

सा चाम्नाता (६, २, १, ५=२भा० १६१पृ०) व्याख्याता च ॥ १ ॥

---

* ऊ० गा० १७प्र० १ख० १सा० ।

† छ० आ० ६, ०, १, ५ (२भा० १६१पृ० )=ऋ० वे० ७, ४, १२, १ ।

अथ द्वितीया।

३ १ २ ३ १र २र ३ १ २ ३ १ २
वयन्ते अस्यराधसोवसोवसोपुरुस्पृहः।
१ २र ३ १र २र ३ १ २
निनेदिष्ठतमाइषःस्यामसुम्नेते अध्रिगो॥ २ *॥

हे "वसो" वासयितः! सोम! "अस्य" एतादृशस्य "ते" तव "राधसः" धनस्य "पुरुस्पृहः" बहुभिः स्पृहणीयस्य "वसोः" वासकस्य त्वदीय-दीयमानस्य वयं नितरां "नेदिष्ठतमाः" अत्यन्त-मन्तिकतमाः "स्याम" भवेम॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ २ ३ ३ १ २
परिस्यस्वानोअक्षरदिन्दुरव्यमदच्युतः।
२ ३ २ ३ १ २ ३ २ ३ १र २र ३ २
धारायऊर्द्ध्वोअध्वरेभ्राजानयातिगव्ययुः॥३†॥ १६

"गव्ययुः" गोकामः यद्वा चीरादि कामयमानः "ऊर्द्ध्वः" समुच्छ्रितः सर्वेषां मुख्यो "यः" सोमः "भ्राजा न" यथा भ्राजमा-नया दीप्त्या अन्तरिक्षे गच्छति तद्वत् दीप्त्या सह "अध्वरे" यज्ञे "धारा" स्वकीयया धारया "याति" गच्छति। "स्वानः" सुवानः अभिषूयमाणः सः "इन्दुः" सोमः "मदच्युतः" मदार्थं

* ऋ० वे० ७, ४, १३, ५।
† ऋ० वे० ७, ४, १३, १।

वेदैः प्रेरितः सन् "अव्ये" अवि भवे पवित्रे "पर्यचरत्" परितः चरति ।

"अचरत्"-"अचाः"—इति पाठौ ॥ ३ ॥ १६

॥ गौरीवितम्* ॥ अभी । नोवा३ । जसातमाम् । रयिमर्षशतस्पृहा२३म् । आयिन्दोसहा३१२३ । स्रभा पूर्णसाम् । तूविद्युम्ना३१२३म् । विभोवा । सा५होइ हायि ॥(१) वयम् । तेआ३ । स्यराधसाः । वसोर्वसो पुरुस्पृहा२३ः । नायिर्नेदिष्ठा३१२३ । तमा५इषाः । स्याम सुम्ना३१२३यि । तओवा । ध्रा५यिगोइहायि ॥(२) परि । स्यस्वा३ । नोअत्तरात् । इन्दुरव्येमदच्युता२३ः । धा रायऊ३१२३ । ध्वोआ५ध्वरायि । भ्राजानया३१२३ । ति गोवा । व्या५योइहायि(३) ॥ ३ † ॥ [१]

॥ ऐडकौत्सम् ॥ अभोहोना२३ । वाजसातममोया ।

---

* "महागौरीवितम्"—इति ख० पु० पाठः ।

† ऊ० गा० ५प्र० १ख० १सा० ।

रयिमर्षशतस्पृहम् । आयिन्दोसच । स्रभर्णा२३साम् ।
तूवा३हायि । द्यु म्ना३ हायि । विभासा२३हा३४३म् ॥(१)
वयꣳहीते२३ । अस्मराधसईया । वसोर्वसोपुरुस्पृहः ।
नायिनेदिष्ठ । तमा आ२३यिषाः । स्रामा३हायि । सुम्ना
३यिहायि । तेअभा२३यिगा३४३उ ॥(२) परीहिस्मा२३ः ।
स्वानोअत्तरदीय्या । इन्दुरव्येमदच्युतः । धारायज्ञ ।
ध्वोअध्वा२३रायि । भ्राजा३हा । नाया३हा । तिगव्या
२३यू३४३ः । ओ२३४५ई । डा(३) ॥ ४ * ॥ [२]

॥ भ्रुदाभ्रुडीयाद्यम्† ॥ अभीनोवाजसातमाम् । रयि
मर्षशतस्पृ२३हाम् । इन्दोसहस्रभर्णा२३साम् । तुवा
यिद्यु२३म्ना३म् । वा२यि । भामा३४औहोवा । हा२
३४५म् ॥(१) वयन्तेअस्मराधसाः । वसोर्वसोपुरुस्पृ२३हाः ।

* ऊ० गा० ५प्र० १अ० ४सा० ।
† "पदाभ्रुदाभ्रुडीयाद्यम्"—इति ख० पु० ।

१ र १ १र २ र १ १ १
निनेदिष्ठतमा आ२३यिषाः । स्वाममू२३म्ना३यि । ते२ ।
३ १ ५र र १ १ १ १ १ १ १ १ २र १र २
अध्रा३४औहोवा । गा२३४५उ ॥(२) परिस्यस्वानो अक्ष
१ र २ १ २ १र र र ५र १
रात् । इन्दुरव्येमदच्यू२३ताः । धारायऊर्ध्वो अध्वा२३
२ र १र १ १ ३ २ ५र र
रायि । आजाना२३या३ । ता२यि । गव्या३४औहो
३ १ १ १ १
वा । यू२३४५ः ३ ॥ ५ * ॥ [३]

२ र १र र १र १र १
॥ क्रौञ्चाद्यम् ॥ अमीनावौहो । जासातमाम् । र
१ २ ४ १ र १ र
यिमर्षा३ । आता ३ स्पृ५हा६ ५ ६म् । इन्दोसहौहो ।
२र १ २ १ १ ४
स्वाभर्णसाम् । तुयिद्युम्ना३म् । वायिभा३सा५हा६५६म्॥(१)
१ १ र २र १र १ र १ २ ४
वयन्तऔहो । स्वाराधसाः । वसोर्वसा३उ । पूरू३स्य
१ र १ र २र १र १र
५हा६५६ः । निनेदिष्ठौहो । तामा३षाः । स्वामसु
१ २ ४ २ १र
म्ना३यि । ते आ३ध्रा५यिगा६५६उ ॥(२) परिस्यसौहो ।
२र १ २ १ १
नो अक्षरात् । इन्दुरव्या३यि । मादा३च्यू५ता ६ ५ ६ः ।

* क्र० गा० ५प्र० १अ० ५मा० ।

धारायऔहो। ध्वोअध्वरायि। आजानयार। तायि

गाइच्यापयूइपइः(३) ॥ ६ * ॥ [४]

॥ रयिष्ठम् ॥ अभीनोवा। जसाताइमाम्। औ३

होइवा। रयिमर्षशतस्य,हा२३४५म्। रयिमर्षा। शता

स्य,३हाम। औ३होइवा। इन्दोमहस्रभर्णसा२३४५म्।

इन्दोमहा। स्रभार्णाइसाम्। औ३होइवा। तुविद्यु।

म्नंविभासहा२३४५म्। तुविद्युम्नाम्। विभासाइहाम्।

औ३होइवा ॥(१) वयन्तेआ। स्पराधाइसाः। औ३

होइवा। वसोर्वसोपुरुस्प,हा२३४५ः। वसोर्वसाउ

पुरुस्प,३हाः। औ ३ हो ३ वा। निनेदिष्ठतमाइषा१ः।

निनेदिष्ठा। तमाआइयिषाः। औ३होइवा। स्याम

सुम्नेतेअध्रिगा२३४५उ। स्यामसुम्नायि। तेआध्राइयि

* क०'गा० ५प्र० १अ० ६मा०।

गा। औ३होइवा ॥(२) परिस्यस्वा। नोआत्ता३रात्। औ३होइवा। इन्दुरव्येमदच्युता२३४५:। इन्दुरव्यायि। मदाच्यु३ताः। औ३होइवा। धारायऊर्ध्वाअध्वरा१यि। धारायऊ। ध्वाआध्वा३रायि। औ३होइवा। भ्राजा नयातिगव्ययू१:। भ्राजानया। तिगाव्या३यूः। औ३ होइवा। औ३होइवा। ई३या। ई३या३४। हा। हाउवा३। ऊ३२३४पा(३) ॥ ७ * ॥ [५]

॥ औदलम् ॥ अभीनोवा। जासा२तमाम्। रयि मर्षा३। प्रातस्प२३४हाम्। इन्दोसहा। स्राभा२र्णं साम्। तुवायिद्यू२३म्ना३म्। वा२३यिभा३। सा३४५ होइ६५६हायि ॥(१) वयन्तेआ। स्यारा२धसाः। वसो र्वसा३उ। पुरुस्प२३४हाः। निनेदिष्ठा। तामा२इषाः।

* ऊ० गा० ५प्र० १अ० ७सा० ।

२र १ २ १ ४ २ ५
स्याममू२३म्नाइयि । ते२३आ३ । घ्रा३४५यिगो६हायि ॥(२)

१२ १ १ २१ २ १ २
परिस्वस्वा । नोआ२भरात् । इन्दुरव्या ३यि । माद

३ ५ १र २र १ १ २र १र
च्यू२३४ताः । धारायज्ञ । ध्वोआ२ध्वरायि । भ्राजाना

२ १ ४ २ ५
२३या३ । ता२३यिगा३ । व्या३४५यो६हायि(३) ॥८*॥ [६]

३ १ २ ४र ५र २
॥ श्यावाश्वम् ॥ अभा३१यि । नोइवा । जसा । ता

४ ५ १ २ १
३मम् । एहिया । रा । यिमर्षशा । त । स्पृहा२म् ।

१र र १ २ ४ ५ २र
एहिया२ । इन्दोसहाखा३भा३ । णा२३४माम् । ऐहा

१र १ २ ४ २
२यि । एहिया२ । तुविद्युम्नावाइयिभा३ । सा३४५हो

५ ३ २ २ ४ ५र २ ४
६हायि ॥(१) वया३१म् । ते३अ । स्परा । धा३मः ।

५ १ र र २ १ १र
एहिया । वा । सोवंसोयू । रु । स्पृहा२ः । एहिया

र १ २ ४ ५ २र
२ । निर्निदिष्ठाता३माइः । आ२३४यिपाः । ऐहा२यि ।

१र र १ २ ४ २
एहिया२ । स्यामसुम्नायिते३आ३ । घ्रा३४५यिगो६

* ऊ० गा० ५प्र० १ख० ८सा०।

ह्वायि ॥(१) परा३१यि। स्वा३स्वा। नौत्र। ह्वा३रत्। एहिया। आयि। दुरव्येमा। द। च्युता२ः। एहिया २। धारायऊर्द्ध३आ३। धा२३४रायि। ऐहा२यि। एहिया२। भ्राजानयाता३यिगा३। व्या३ ४ ५ योईहा यि(३) ॥ १५ * ॥ [७]

॥ आन्धीगवम् ॥ अभीनोवाजसा१तामाम। रयिम। षशा२३ता। ऊम्मा२१ऽ२। स्पृहमिन्दोसहस्रभर्णसा२ ३४५म्। तुवा३उवा। द्यु२म्नाम्। वा२३यिभा। स हाम्। औ२३होवा ॥(१) वयन्ते अस्यरा१धामाः। वमो वं। मोपृ२३रू। ऊम्मा२१ऽ२। स्पृहानिनेदिष्ठतमा दूपा१ः। स्यसमा३उवा। मु२म्नायि। ते२३आ। भ्रि गा। औ३होवा ॥(२) परिस्यस्वानोआ१क्षारात्। इन्द

* ऋ० मा० १२१० १म० १५मा० ।

र। व्येमा२३दा। ऊम्मा२१२। च्युतोधारायऊर्द्वो

अध्वराश्यि। भ्राजा३उवा। ना२या। ता२३यिगा।

व्ययूः। औ२३होवा। हो५ई। डा(३)॥१६*॥ [८]

॥ निषेधम्†॥ अभीनोवाजा३सातमाम्। रयायिम

र्पा। शतस्पृहा२म्। इहा३। आयिन्दो३साहा। हा

हो२३४हा। स्वभर्णा२३साम्। इहा३। तुवा३यिद्य

म्नाम्। हाहो २ ३ ४ हा। विभा३सा५हाई५६म्॥(१)

वयन्ते अस्या३रा३धसाः। वसोर्वसाउ। पुरुस्पृहा२ः।

इहा३। नायिने३दायिष्ठा। हाहो२३४हा। नमाआ

२३यिषाः। इहा३। स्यामा३मूम्नायि। हाहो२३४हा।

तेआ३ध्रा५यिगाई५६उ॥(१) परिस्यस्वानो३अचरात्।

इन्दुरव्यायि। मदच्युता२ः। इहा३। धारा३याऊ।

---

* ऊ० गा० १२प्र० १ख० १६सा०। † "निषेधः" - इति ख० पु० पाठः।

हाहोर३४हा। छोअध्वार३रायि। इहा३। भ्राजा३नाया। हाहो२३४हा। तिगा३व्या५यूई५६ः। हे२३४५(३)॥१२*॥[९]

॥ साध्रम्॥ अभीनो३वाजसातमाम्। रयायिमर्षा२। शता३४५। स्पृ२३४हाम्। इन्दोसहस्रभर्णसा२३४५म्। तुवाओ२३४वा। द्यूम्नाओ२३४वा। विभा५सहाम्॥(१) वयन्ते३अस्यराधसाः। वसोर्वसा २ उ। पुरु३४५। स्पृ२३हाः। निनेदिष्ठतमाइषा१ः। स्यामा ओ२३४वा। सूम्नाओ२३४वा। तेआ५धिगाउ॥(२) परिस्या३स्वानोअक्षरात्। इन्दूरव्या२यि। मदा३४५। च्यू२३४ताः। धारायऊर्द्ध्वोअध्वरा१यि। भ्राजाओ२३४

* ऊ० गा० १७प्र० १ख० १२मा०।

वा। नायाओ२३४वा। तिगा५व्ययूः। होपूइ।
डा(३)॥१३*॥[१०]

॥यज्ञायज्ञीयम्॥ अभा५यिनः। वा३जा३साता माम्। रायिमर्षा। शा३तास्य२३हाम्। इन्दो२स। हस्रा२३भा। ऊम्मायि। णा३साम्। द्यविद्युम्नंविभा २सद्वाउ॥(१) हावा। यन्तेअस्यराधसोवसोर्वसाउ। पू३रूस्पृ२३हाः। निने२दि। ष्ठता२३माः। ऊम्मायि। आ३यिषाः। स्यामसुम्नेतेआ२धिगाउ॥(२) गोपा। रिश्यस्वानोअत्तरदिन्दुरव्यायि। मा३दाच्यू३ताः। धा रा२यः। ऊर्द्वी२३आ। ऊस्मायि। ध्वा३रायि। भ्राजा नयातिगा२व्ययाउ। वा३४५(३)॥१४†॥[११]

* ऊ० गा० १७प्र० १ख० १३सा०।

† ऊ० गा० १७प्र० १ख० १४सा०।

॥ स्वारकौत्सम्॥ अभीनोवाजा३सातमाम्। रयि मर्षंशता१स्पृ३हाम्। इन्दोसहा३। स्रा३भार्णा३माम्। आ<sup></sup>२रयि। तुविद्युम्नो२३४हायि। विभा३सा५हाई५ईम॥(१) वयन्ते अस्या३राधसाः। वमोर्वसोपुरू१स्पृ३हाः। निने दिष्ठा३। ता३मा आ३यिषाः। आ२रयि। स्यामसुम्नो २३४हायि। तेआ३धा५यिगा६५६उ॥(१) परिस्यस्वा नो३अक्षरात्। इन्दुरव्यमदा१च्यु३ताः। धारायऊ३। र्ध्वो३आध्वा३रायि। आ२रयि। भ्राजानयो२३४हायि। तिगा३व्या५यू६५६ः(३)॥१८*॥[१२]

॥ कार्त्तयशमम्॥ अभीहा हाउ। नो२३४वा। ज सा औ३हो३तामाम्। रयायिमौ३हो३यि। आर्पा६। हाउवा। शतस्पृहा२म्। उपा। इन्दोसहस्रभा१र्णा

* ऊ० गा० १७प्र० १ख० १९सा०।

३साम्। तुवऔ३हो३यि। द्यू म्नाईम्। हाउवा। विभासहम्। उपा२३४५॥(१) वयꣳहाहाउ। ते२३४आ। स्वराऔ३हो३। धासः। वसाऔ३हो ३यि। वासा६उ। हाउवा। पुरुस्पृहा२ः। उपा। निनेदिष्ठतमा१आ३यिषाः। स्यामाऔ३हो३यि। सूम्ना६हायि। हाउवा। तेअधिगो। उपा२३४५॥(२) परीहाहाउ। स्या२३४स्वा। नोआऔ३हो३। हारात्। इन्दूरौ३हो३यि। आव्या६यि। हाउवा। मदच्युता२ः। उपा। धारायऊर्ध्वीआ१ध्वा३रायि। भ्राजाऔ३हो३। नाया६। हाउवा। तिगव्ययूः। उपा२३४५(३)॥१०*॥[१३]

॥ त्रीतन्वाष्ट्रीसामं† ॥ अभीनोवा। जसा३तमाम्। रयायिमर्षा३मता३। ए३। स्पृहमा। इन्दोसहा३स्रभा

* ऊ० गा० १८प्र० १ख० १०सा०। † "त्र्यन्वाष्ट्री साम"—इति ख० पु० पाठः।

१ २ ३ २ १ १ २ १
३ । ए३ । णसमा । तुवायिद्यु म्नाऽविभाऽ । ए ३ ।
२ ३ २
सद्गमा(१) ॥ ८ * ॥ [१४] १६

अथ तृतीयसूक्ते —

प्रथमा ।

१ २ ३ १ २ ३ २ ३ २ ३ २ १ २ ३ १२ १२
पवस्वसोममहांत्समुद्रःपितादेवानांविश्वाभिधाम ॥१†॥

हे "सोम !" "महान्" "देवेभ्यो" दीप्यमानत्वेन महत्व-युक्तः, "समुद्रः" समुन्दनः यस्मात् समुद्रवन्ति तादृगः, "पिता" सर्वेषां पालयिता त्वं "देवानां" "विश्वा" विश्वानि सर्वाणि "धाम" धामानि शरीराणि "अभि" लक्ष्य "पवस्व" चर ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ १ २ ३ १ २ ३ १२ २१ ३ १ १
शुक्रःपवस्वदेवेभ्यःसोमदिवेपृथिव्यैशञ्चप्रजाभ्यः ॥ २ ‡ ॥

हे "सोम !" "शुक्रो" दीप्तः त्वं "देवेभ्यः" देवार्थं "पवस्व" चर। किञ्च "दिवे पृथिव्यै" च द्यावापृथिवीभ्याञ्च ततः "प्रजाभ्यः च" "शं" सुखं कुरु ॥

"प्रजाभ्यः"-"प्रजायै"—इति पाठौ ॥ २ ॥

---

* ऊ० गा० १९प्र० २ख० ९मा० ।

† छ० आ० ५, १, ४, ३ (१भा० ८०३पृ०)=ऋ० वे० ७, ४, २०, ४ ।

‡ ऋ० वे० ७, ४, २०, ५ ।

अथ तृतीया।

३ २ ३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
दिवोधर्त्तासिशुक्रःपीयूषःसत्येविधर्मन्वाजीपवस्व॥३*॥१७

हे सोम! "शुक्रः" दीप्तः "पीयूषः" पातव्यः त्वं "दिवः" द्युलोकस्य "धर्त्ता" धारकः "असि", "वाजी" बलवान् स त्वं "सत्ये" सत्यभूते "विधर्मन्" विधर्मणि [विविधानि कर्माणि ऋत्विजो कुर्वन्ति यस्मिन्; यद्वा, विविधं सोमादि-हविषां धारकेऽस्मिन्] यज्ञे "पवस्व" चर॥३॥१७

॥धर्मम्॥ औहोइवा। औहोइवा। औहोरवा २३४औहो६वा। पवस्वसोममहान्समुद्रा१ः। पितादे२ वाना२विश्र। उतिवामा२३४५॥(१) शुक्रःपवस्वदेवेभ्य सोमा२३४५। दिवेप्रथिव्यैशञ्चप्रजाभ्या२३४५ः। दिवो धर्त्तासिशुक्रःपीयूषा२३४५ः। सत्येविधर्म्मन्वाजीपवस्वा २३४५॥(१) पवस्वसोमा२३४५। मह्रान्समुद्रा१ः। पिता दे२वाना२३४५म्। विश्वाभिधामा२३४५॥(२) शुक्र

* ऋ० वे० ७, ५, १० ६।

२ ३ १११ १ २र १र १र ३ ११११ २ १र १ १
पवस्वा२३४४। देवेभ्यःसोमा२३४५। दिवेपृथिव्या१यि।

२ १र १ १ १ १ २ १र २ १र ३ १ १ १ १ २ १ २र १र
शञ्चप्रजाभ्या२३४५ः। दिवोधर्त्तासी२३४५। शुक्रःपीयू

१ १ १ १ २ १र ३ २ २र १र २ ३ १ १ १ १
षा२३४५ः। सत्येविधर्म्मा१न्। वाजीपवस्वा२ ३ ४ ५।

२र २ र १ ३ ५र ५ २ १
औहोइवा२। औहोरवा२३४औहो६वा। ए३। धर्म्मा

१ १ १
२३४५(३) ॥ ८ * ॥ [१]

२ २ १ २ १
॥ आभीगवम् ॥ पा१वास्वा। सो२३मा। ऊम्मा२

१र २ १ २ १र २र १र ३ १ १ १ १ १ २
१८२। महान्त्समुद्रःपितादेवाना२३४५म्। वायिश्वा३

२ १ २ १ २ ४ ५ ४
उवा। भा२३यिधा। मा। औ३होवा। हो५ई।

डा(३) ॥ ८ † ॥ [२] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य नवमस्याध्यायस्य

अष्टमः खण्डः‡ ॥ ८ ॥

---

* ऊ० गा० ५प्र० १अ० ९मा० ।

† ऊ० गा० २१प्र० ३अ० ८मा० ।

‡ 'यज्ञायज्ञीयमग्निष्टोमसाम,'—इति वि० ।

अथ नवम-खण्डे*—

प्रेष्ठंवइति तृचात्मकं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १
प्रेष्ठंवो अतिथिꣳस्तुषेमित्रमिवप्रियम् ।

२ ३ २ ३ १ २ ३ २
अग्नेरथन्नवेद्यम् ॥ १ † ॥

हे "अग्ने!" "वः" त्वां [ पूजार्थे बहुवचनम् ] "स्तुषे" स्तौमि अहमुशनेति शेषः। कीदृशम्? प्रेष्ठम्" अस्माकं स्तोतॄणां धन-दानेन प्रियतमम्। "अतिथिं" सर्वैरतिथिवत् पूज्यं [यद्वा, अत सातत्यगमने ( भ्वा० प० ) ऋतन्यञ्जि ( उ० ४,२ )"—इत्यादिना अतेरिथिन्। सततं देवानां हविः प्रदातुं गच्छन्तम् ] "मित्रमिव" सखायमिव "प्रियं" स्तोतुः प्रीणनकरं "रथं न" रथमिव "वेद्यं" वेदो धनं धन-हितं लाभ-हेतुं [ यथा स्वाभिमत-लाभाय भाश्रयन्ते धन-लाभ-हेतुं रथम्; यद्वा, यथा रथेन धनं लभते तद्वत् स्तोतारोऽनेन धनं लभन्ते, तादृश-धन-लाभ-कारणम् ]। हे अग्ने! तस्मै हितं वेद्यं त्वां कर्म-सिध्यर्थम् अहं स्तोता स्तौमीति सम्बन्धः॥

"अग्ने"–"अग्निम्"—इति पाठौ ॥ १ ॥

---

* इदानीमुक्थसामानि भवन्ति औशनं प्रथममुक्थम्—इति वि० ।

† छ० आ० १, १, १, ५ ( १भा० १००पृ० ) = ऋ० वे० ६, ६, ५, १ = वे० १३, ५१ ।

अथ द्वितीया ।

२ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
कविमिवप्रशꣳस्यंयन्देवासइतिद्विता ।
१२ २२ ३ २
निमर्त्त्येष्वादधुः ॥ २ * ॥

हे "देवासः" देवाः इन्द्रादयः ! "यम्" अग्निं "मर्त्त्येषु" मनुष्येषु "इति" वक्ष्यमाण-प्रकारेण "द्विता" द्विधा† "न्यादधुः" गार्हपत्याहवनीयात्मकत्वेन द्विधा निहितवन्तः। तत्र दृष्टान्तः—"कविमिव" "प्रशंस्यं" प्रशंसनार्हं क्रान्त-कर्माणं पुरुषं यथा द्विधा कार्यद्वये अन्यो नियोजयति तद्वत् [ यद्वा दिवि पृथिव्यां च निहितवन्तः, भूमौ तु हविराहरणार्थं दिवि तु हविः प्रदानार्थमिति द्वैधं निधानं कृतवन्तइत्यर्थः ]। तमग्निं स्तुषे इति पूर्वेण सम्बन्धः ॥

"प्रशंस्यं"-"प्रचेतसं"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १ २ १ ३ ३ १२ ३२
त्वंयविष्ठदाशुषोनॄꣳःपाहिशृणुधीगिरः ।
१ २ ३ १ ३ १२ ३२
रक्षातोकमुतत्मना ॥ ३ ‡ ॥ १८

---

* ऋ० वे० ६, ६, ५, २ ।

† 'द्विता नाम ऋषिः'—इति वि० ।

‡ ऋ० वे० ६, २, ५, ३ ।

हे "यविष्ठ" युवतम! [ यद्वा, यौतेस्तृजन्तस्य इष्ठनि* रूपं देवानां हविषां मिश्रयितृतम! ] इन्द्र! त्वं "दाशुषः" हविर्द्दत्तवतः "नॄन्" कर्म्मणां नेतॄन् यजमानान् "पाहि" धनानां दानेन रक्ष [ नॄःपाहीत्यत्र संहितायां "नॄन्पे ( ८, ३, १० )"— इति नकारस्य रुत्वम्, "अत्रानुनासिक ( ८, ३, २ )"—इति पूर्व्वस्यानुनासिकः। किञ्च, "गिरः" त्वद्विषयाः स्तुतीः "शृणुहि"† अवहितः सन् शृणु। "उत" अपिच "त्मना"‡ आत्मनैव "तोकम्" अस्मदीयं "तनयं" पुत्रं "रक्ष"¶ पालय [ त्मनेति सर्व्वत्र सम्बध्यते—आत्मना स्वयमेव रक्ष, त्वदन्यं पालयितारं न विन्दामः त्वमेवास्मदीयम् ॥

"शृणुही"-"शृणुधि"—इति पाठौ ॥ ३ ॥ १८

१र१ १ २
॥ गायत्रौशनम् ॥ प्रेष्ठंवाः। अता २ ३ यिथीम्।
१र र २ १ २ १ १ २ १
स्तौषेमित्रम्। इवप्रा२३याम्। अग्नि:वरा३था३म्। ना
२ १ ५ ५ १ २ १ २
वा२३हा३४३यिदा२३४यो६हायि ॥(१) कविमिवा। प्र
१ २ १ र २र १ २ १
श॰्सा२३याम्। यान्देवासः। इतिद्वा२३ यिता। नि

---

* "तुश्छन्दसि"—इति पा० ५, ३, ५९।

† "शृणुही"—इति दीर्घः संहितायाम्।

‡ "मन्त्रेष्वाङ्यादेरात्मनः"—इति पा० ६, ४, १४१।

¶ संहितायान्तु "रक्षा"—दीर्घान्तः, मच द्व्यच इति दीर्घः।

मोयउत्तमꣳहविर्द्धन्वाꣳयोनर्य्योअप्सु वा२न्तरा। ओ
हा३उवा। सुषावसोममा २ ३ हायि। ओहा३उवा।
द्रिभायिः। औ३होवा॥(१) सुषावसोमा३मद्रा२ ३ ४
यिभायिः। सुषावसोममद्रिभिर्नूनम्पुनानोअविभिःपरा२
यिस्रवा। ओहा३उवा। अदब्धःसुरभा२३यिहायि। ओ
हा३उवा। तरा। औ३होवा॥(२) अदब्धःसुरा३भि
न्तार२३४राः। आ। दब्धःसुरभिन्तरःसुतेचित्त्वाप्सुमदा
मोआ२न्धसा। ओहा३उवा। श्रीणन्तोगोभिरू२३हा
यि। ओहा३उवा। तराम्। औ२३होवा। होऽ५ई।
डा(३)॥ ११ *॥ [१३]

॥ आष्टादꣳष्ट्रोत्तरम्॥ परीतोषिञ्चतासुतमैयाहौ।
होइवा। सोमोयउत्तमम्। होवा२३यिः। ऐया२३त्।

* ऊ० गा० ६प्र० ३अ० ११सा०।

१ र २ १र र र १ १
औ२३होवा। दधन्वाꣳयोनर्यो अप्स्व। तारा२३।

१र १ र २ १र२ १र २ १
ऐया२३त्। औ२३होवा। सुषावसोमम। द्रायिभा

१र १ र २ २ १र २ १र
२३यिः। ऐया२३त्। औ२३होवा३४३॥(१) सुषावसो

२ १ २ १र २र १र २ २ १र २ १र २ १
ममद्रिभिरैयादौ। हो३वा। सुषावसोमम। द्रायिभा

१र १ र २ र १ २र १र २
२३यिः। ऐया२३त्। औ२३होवा। नूनम्पुनानोविभिः

१ १र १ र र १ २
परि। स्नावा२३। ऐया२३त्। औ२३होवा। अदब्धः

१ १र १ र २
सुरभि। ता२३त्। ऐया२३त्। औ२३होवा३४३॥(२)

१ २ १ २१र २र १र २ २ १ २
अदब्धःसुरभिन्तरऐयादौ। हो३वा। अदब्धःसुरभि।

१ १र १ र २ १र २र १
तारा२३ः। ऐया२३त्। औ२३होवा। सुतेचित्त्वाप्सु

२र र १ १र र १ २र १र
मदामोअ। धासा२३। ऐया२३होवा। श्रीणन्तोगो

२ १ १र १ र २
भिरु। तारा२३म्। ऐया२३त्। औ२३होवा३४३।

१
ओ२३४५। ई। डा(३)॥१८*॥[१४]

* ऋ० गा० १२प्र० १ख० १८गा०।

३ ४र ३र ४ ३र ४ ५ र ३
॥ उत्सेधम् ॥ • परीतोषिञ्चतासुतम् । सोमः । य
२ ३र ४र ५ २ १
ऊ३४औहोवा । तमुत्तवाऽ२यिः । हा३१उवा २ ३ ।
२ ५ ३ २ ४र ५र ४ ५ १
ऊ ३ ४ पा । दधा३न्वाऽ२या । औहोवाहायि । नारि
२र १ २ १ २र २ ५
योआ । प्सुवन्तारा । हा३१उवा२३ । अ३४पा ।
३ २ ४ र ५र ४ ५ ३ २ ४
सुषा३वसो । अहौवाहायि । ममा३द्रा५यिभा ६ ५ ६
४ ३र ४ ३र ४ ३ ४ ५ र ३ २ ३र ४र
यिः ॥(१) सुषावसोममद्रिभिः । सुषा । वसो३४औहो
५ २ १ २ ५
वा । ममद्रिभाऽ२यिः । हा३१उवार२३ । ऊ ३ ४ पा ।
३र २ ४ र ५र ४ ५ १ २ १ २
नूना३पुना । औहोवाहायि । नोअविभायिः । परि
१ २ २ ५ ३ २ ४ ५र
स्राव । हा३१उवार२३ । ऊ३४पा । अदा३ध्वःसु । औ
४ ५ ३ २ ४ ३ ४
होवाहायि । रभा३यित्ता५रा६५६ः ॥(२) अदध्वःसुर
३ ४ ५ ३ २ ३र ४र ५ २ १
भिन्तरः । अद । ध्वःमू३४औहोवा । रभिन्तराऽ२रः ।
२ ५ ३ २ ४ ५र ४
हा३१उवार२३ । ऊ३४पा । सुता३यिचित्त्वा । • औहो
५ १ २ १ २र १ २र
वाहायि । आप्सुमदा । मोअन्धासा । हा३१उवा२

३। ऊ३४पा। ओणा३न्तोगो। औहोवाहायि। भि

हृ३त्ता५रा६५६म् ३) ॥ २० * ॥ [१५]

॥ पृश्नि ॥ परायितो२३षिञ्चतासुत७ हाउ। सोमो

यउत्तम७ हविः। दधान्वा७१या२३ः। होवा३हायि।

नारियोअ। प्सवान्ता१रा२३। होवा३हायि। सुषा

वा१मो२३। होवा३हा। मामद्रिभिः। इडा२३ ॥(१)

सुषावा२३मोममद्रिभिर्हाउ। सुषावसोममद्रिभिः। नू

नाम्पू१ना२३। होवा३हायि। नोअविभिः। परायि

स्ता१वा२३। होवा३हायि। अदाब्धा१ःसू२३। होवा३

हा। राभिन्तरः। इडा२३ ॥(२) अदाब्धा२३ःसुरभि

न्तरोहाउ ॥(२) अदब्धःसुरभिन्तरः। सुतायिचा१यि

त्वा२३। होवा३हायि। अप्सुमदा। मोआन्धा१सा

* ऊ० गा० १२प्र० २ख० २०सा०।

१ २ २ १र २ १ २ २
२३। होवा३हायि। औणान्तो१गो२३। होवा३हायि।
१ २ १
भायिद्त्तरम्। इडा२३(३)॥ ६ *॥ [१५]

३ ४र१र ४ ५ र २ २ १
॥ वाम्रम्॥ परीतोषिञ्चता। हा३हा३यि। सू२३
५ १र १ १
४। तꣳमुतोवा। सोमोहो२यि। यऊहो२। ता
७ १ २र १ २ ३
मꣳहावा२यिः। दाधन्वाꣳय। नरायियोआ। पसु
२ २ ५ १ १ १ १
वाउवा३। ऊ३४पा। तरा२। सूषा२वासो२। मम।
३ ५र र ४ ३र ४ ३र ४ ५र १ २
द्रा२यिभा२३४औहोवा॥(१) सुषावसोममा। हा३हा
१ ५ १ १
यि। द्रा२३४यि। भिद्रिंभोवाःसुषाहो२ई। वसाहो
१ ७ १ २र र १ २
२। मामद्रायिभा२यिः। ननम्पुना। नोआवायिभा
३२ २ ५ १ १ १
यिः। पराउवा३। ऊ३४पा। स्रवा२। आदा२ब्धाः
१ ३ ५र ८ ३ ४ ५
सू२। रभि। ता२रा२३४औहोवा॥(२). अदब्धःसुर
२ २ १ ५ १
भि। हा३हा३यि। ता२३४। रस्तरोवा। अदाही

* ऊ० गा० १५प्र०१ख० ६सा०।

२यि । ब्धःह्वो२ । राभिन्तारा२ः । ह्वतेचित्वा । प्रा
मादा । मश्राउवा३ । ऊ३४पा । धमा२ । आयिणा
२न्तोगो२ । भित् । ता२रा२३४औहोवा । ऊ२३
४पा(३) ॥ १२ * ॥ [१६]

॥ मानवोत्तरम् ॥ होवायि । परीतोषिञ्चतासुतम् ।
होवायि । सोमोयउत्तमꣳहविः । दाधन्वाꣳयः । ना
रियोआ३१ । प्सूवा२न्ता२३४रा । सुषावा२ ३ सो ३ ।
मा२मा२३४औहोवा । द्रा२३४यिभोः ॥(१) होवायि ।
सुषावसोममद्रिभिः । होवायि । सुषावसोममद्रिभिः ।
नूनम्पुना । नोअविभा३१यिः । परा२यिस्रा२३४वा ।
अदाध्वा२३ःसु३ । रा२३४औहोवा । ता२३४राः ॥(२)
होवायि । अदब्धःसुरभिन्तरः । होवायि । आदब्धः

* ऊ० गा० १५प्र० १अ० १०मा० ।

सुरभिन्तरः। द्दोवायि। आदब्धःसुरभिन्तरः। द्दते चित्त्वा। आप्सुमदा३१। मोआ२न्धा२३४सा। श्रोणा न्ता२३गा३। भा२यिद्द२३४औद्दोवा। ता२३४ राम्(३)॥ १३ * ॥ [१७]

॥ आनूपं वाध्र्यश्वम् ॥ परायिपरायि। तोपिन्वा३ ता२ता२म्। सोमोयउ। तमा२न्धा१वा२यिः। दा धा२न्वा२या२ः। नर्य्योअप्सुवन्ता२३रा। सुषावा३मो ३। मा२३मा३। द्रा३४५यिभो६द्दायि॥(१) सूपासूपा। वसोमा३माद्रा१यिभा२यिः। द्दपावसो। ममाद्रा१यि भा२यिः। नूना२म्पूना२। नाअविभिःपरिस्रा२३वा। अदाब्धा३ःद्द३। रा२३भा३यि। ता३४५रो६द्दायि॥(२) अदाअदा। ब्धःसुरा३भायिन्ता१रा२ः। आदब्धःसु।

* ऊ० गा० १५प्र० २ख० १३सा०।

१ २ १ १ १ २ २र
रभायिन्ता१रा २:। इते २चायित्वा २.। अ५सूमदोमो

१ २ १र २ २ १ ४ २
अन्धा२३सा। श्रोणान्तो३गो३। भा२३यिष्ठ३। ता

५
३४५रो६हायि(३)॥ १४ *॥ [१८]

३२ २ ४ ५ २ ३
॥ यौधाजयम्॥ परा३१यि। तो३षि। च। तान्

५ १ २ १ १२ २
२३४ताम्। सोमो३। यजूर। तमा३४५म्। हा२

५ २१ २र १ २ १र ३ २
३४वोः। दधान्वा५याः। न। र्य्यीश्रा२। पसुवा३४५।

२ ५ २ १ ३२ ३
ता२३४रा। सुषा २। वासो२। ममा३४५। द्रा२३४

५ ३ २ २ ४ऽ ५ २ ३ ५
यिभीः॥(१) सुषा३१। वा३सो। मम्। श्राद्रा२३४यिभायिः।

१ २ १ २ २ ३ ५ १र १ २
हृषा३। वसोर। ममा३४५। द्रा२३४यिभीः। नूनापु

१ २ १ ३२ ३ ५
ना। नः। अविभा२यिः। परा३४५यि। सा२३४वा।

२ १ ३२ ३ ५
अदा २। व्या:स्वर। रभा३४५यि। ता२३४राः॥(२)

३ २ २ ५ ५ २ ३ ५ १ २
अदा३१। व्या३:सू। र। भिन्ता२३४राः। आदा३।

* ज० गा० १५प्र० २अ० १४सा०।

१ ३ २ ३ ५ २ १ २ १
ब्धःह्व२। रभा३४५यि। ता२३४राः। सुतायिपित्त्वा।
२ १ ३र २ ३ ५ २र
अ। प्सुमदा२। मोआ३४५। धा२३४सा। श्रीणा२।
१ ३ २ ३ ५
तोगो२। भिह्व३४५। ता२३४राम् (३)॥५ *॥ [१८]

५ र २ ४ ५ ४र ५ १ र २
॥ द्वैगतम्॥ परीतो३षिञ्चतासुताम्। सोमोयउ।
१ २ ३ २ १ २ २ १र
तमा२ इहा१वा२यिः। दधा३। हौ३हो३वा। न्वा२
र र ० १ १ ३ ५र र
योनर्य्योअप्स्वअन्तारा२। सुपा२३। वा२सो२३४औहो
२ १ ३ १ १ १ १ ५ र २ र ५
वा। ए३। ममा२द्रिभा२३४५यिः॥ (१) सुषावा३सोम
४ ५ १ र २ र १ १ ३र २
मद्रिभायिः। ह्वषावसो। ममाद्रा१यिभा२यिः। नूना
२ २ १ र र ० १
२म्। हौ३हो३वा। पुनानोअविभिःपारिस्रावा२। अ
१ ३ ५र र १ १ ३
दा२३। ब्धा२ःसू२३४औहोवा। ए३। रभा२यिन्तरा
१ १ १ १ ५ २ ४ ५ ४ ५ १ २
२३४५ः॥ (२) अदब्धा३ःसुरभिन्तराः। आदब्धःसू। र
१ २ ३ २ २ २ १ र
भायिन्ता१रा२ः। सुता३यि। हौ३हो३वा। चित्त्वा

* ऊ० गा० २६प्र० १अ० ५सा०।

ए मुमदामो अन्धासा २ । औणा२३ । तो२गो२३४औ होवा । ए३ । भिष्ट्र२त्तरा२३४५म्(३) ॥ ६ * ॥ [२०]

॥ कण्वरथन्तरम् ॥ पारीतोषिञ्चतासुताम् । सो मोयऊ । ता३मा२हा३वायिः । दधन्वा२योनर्यो अप्सु वन्तरा२३४ऐही । सुषावा२३४सो । ममा३१उवा२३ । ए३ । द्रिभिरा ॥(१) सुषावसोममद्रिभायिः । सुषावसो । मा३माद्रा३यिभायिः । नूनम्पुनानो अविभिःपरिस्रवा२३ ४ऐषो । अदब्धा२३४:सु । स् । रभा३१उवा२३ । ए३ । तरआ ॥(२) आदब्धःसुरभिन्तराः । अदब्धःसु । रा३ भायिन्ता३राः । सुतेचित्ताप्सुमदामो अन्धसा२३४ऐही । औणन्तो२३४गो । भिष्ट्र३आउवा२३ । ए३ । तरमा(३) ॥ १८ † ॥ [२१]

* ऊ० गा० १६प्र० १अ० ६मा० ।
† ऊ० गा० १५प्र० १अ० १८सा० ।

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

१ २ ३ १ २ २ ३ उ ३ २ ३
असाविसोमोअरुषोवृषाहरी
१ २ ३ २ ३ १ र २ र
राजेवदस्मोअभिगाअचिक्रदत् ।
२ २ उ ३ १ २ ३ १ २ ३ १ र
पुनानोवारमत्येष्यव्ययꣳश्येनो
२ र ३ १ २ ३ १ २
नयोनिङ्घृतवन्तमासदत् ॥ १ * ॥

"सोमः" "असावि" अभिषुतोऽभूत् । कीदृशः सोमः ? "अरुषः" आरोचमानः, "वृषा" वर्षकः, "हरिः" हरितवर्णः ; स च राजेव "दस्मः" दर्शनीयः सन् "गाः" उदकानि "अभि" लक्ष्य "अचिक्रदत्" शब्दं करोति स्व-रस-निर्मोक-समये, पश्चात् पुनानः "अव्ययम्" अविमयं "वारं" वालं दशापवित्रम् "अत्येषि" हे सोम! अतिक्रम्य गच्छसि । ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम् "आसदत्" प्रविशति ॥

"अत्येषि"-"पर्येति"—इति पाठौ, "आसदत्"-"आसदम्" —इति च ॥ १ ॥

* ऋ० आ०६, २, २, ५ (२भा० १९९ पृ०) = ऋ० ९, ७, ३, ७ ।

अथ द्वितीया।

२ १ २ ३ १ २ ३ १ २ ३ २ ३
पर्जन्यः पितामहिषस्यपर्णिनो

१ २ ३ २ ३ २ ३ १ २
नाभापृथिव्यागिरिषुक्षयन्दधे।

१ २ ३ १ २ ३ ९ ३ ३ १ २ ३
स्वसारआपोअभिगाउदासर

२र २र ३ १ २ ३ २
न्त्सङ्ग्रावभिर्वसतेवीतेअध्वरे॥ २ *॥

यस्य "महिषस्य" महतः "पर्णिनः" पर्णवतः पतनवतो वा सोमस्य "पर्जन्यः" "पिता" जनकः "सः" सोमः "पृथिव्याः" † "नाभा" नाभौ नाभिस्थानीये ‡ हविर्द्धाने "गिरिषु" गिरिसम्बन्धिषु ग्रावसु "क्षयं" निवासं "दधे" धारयति अभिषव-समये। तथा "स्वसारः" अङ्गुलयः "आपः" वसतीवर्यः ¶ "गाः" आशिरार्थाः स्तुतयो वा § "अभि" आभिमुख्येन "उदासरन्" उद्गच्छन्ति गच्छन्तु, "वसते", "सम्" गच्छते च, "ग्रावभिः" साकम्। कुत्र? "वीते" कान्ते "अध्वरे" यज्ञे॥

"उदासरन्"-"उतासरन्"—इति पाठौ, "वीते"-वीथे"—इति च॥ २॥

---

* ऋ० वे० ७, ३, ७, २।

† 'पृथिव्याः समुत्पन्नः'—इति वि०।

‡ 'नाभा—नाभि-स्थानीयः'—इति वि०।

¶ 'अप्सु आत्मरूपः'—इति वि०।

§ 'गाः—सोमस्य रश्मयः'—इति वि०।

अथ तृतीया।

३ १ २ ३ १र २र ३ १ २ ३
कविर्वेधस्यापर्य्येषिमाहिन

२ ३ १ २ ३ ३१ २र
मत्योनमृष्टोअभिवाजमर्षसि।

३ १ २ ३ १ २
अपसेधन्दुरितासोमनोमृड

२ १र २र३ १ २ ३ १ २
घृतावसानःपरियासिनिर्णिजम्॥ ३ * ॥ १३

हे "सोम!" "कविः" क्रान्तदर्शी सन् "वेधस्या" यागविधानेच्छया "माहिनं" मंहनीयं पवित्रं "पर्य्येषि" परिगच्छसि, पश्चात् "मृष्टः" प्रचालितः "अत्योन" † अश्व इव "वाजं" सङ्ग्रामम् ‡ "अभ्यर्षसि"। सोम! "दुरिता" अस्मदीयानि दुरितानि "अपसेधन्" परिहरन् ¶ "नः" अस्मान् "मृड" सुखय "घृतावसानः" घृतानि उदकानि वसानः आच्छादयन् "परियासि" अभिगच्छसि। किम्प्रति? "निर्णिजम्" पवित्रम्॥

"सोमनोमृडघृता"-"सोममृडयघृतम्"—इति पाठौ॥३॥ १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य नवमः खण्डः॥ ९॥

* ऋ०वे० ७, ९, ७, ९।

† 'अत्यः—अतीत्य गच्छति'—इति वि०।

‡ 'वाजम्—अन्नं चरुपुरोडाशादिलक्षणम्'—इति वि०।

¶ 'अपसेधन्—एष हवौ (भा० धा०) पञ्चभिः स्वतः संवर्तति'—इति वि०।

२र र २ र र
॥ महासामराजम् ॥ हाउहोवा३हायि । असावि

१ १ २ ४ २र २१११११ २र र
सोमे३आ । रुषो३वा३ । पाहरा२३४५यिः । राजेव

र १ १ २ ४ २ ३११११ २ र
दस्मो३आ । भिगा३ । आ३ । चिक्रदा२३४५त् । पुना

र र १ १ २ ४ २ २१११११ २र
नोवारा३मा । जिया३यिषो३ । अव्यया२३४५म् । श्ये

र र १ २ ४ २र २
नोनयोनी३घा । तवा३न्ता३म् । आमदा३दाउ ॥(१)

२ २र १ २ ४ २ ३ १ १ १ १
पर्ज्जन्यःपिता३मा । हिपा३स्या३ । पर्णिना २ ३ ४ ५ः ।

२र र र १ १ र ४ २ २११११
नाभापृथिव्या३गायि । रिषू३त्ता३ । यन्दधा२३४५यि ।

२ र र र १ र ४ २र ३११११
स्वसारआयो३आ । भिगा३ऊ३त् । आसरा२३४५न् ।

२ र १ २र ४ २
सङ्गावभिर्वा३मा । तेवा३यिते३ । अध्वरा३२उ ॥(२)

र र १ १ २ ४ २र २११११ २ र
कविर्वेधस्या३पा । रिया३यिषो३माहिना२३४५म् । अत्यो

र १ १ २ ४ २ ३११११ रर
नम्टष्टो३आ । भिवा३जा३म् । अर्षसा२३४५यि । अप

१ २र ४ २र ३११११ २र
सेधन्दू३रायि । तासो३मा३ । नोम्टडा२३४५ । हाउ

र २ २ र १ २ ४ २
द्योवा३द्याथि । घृतावसाना३ःपा । रिया३सी३ । नि

२ १ १ १ १
र्णिजा३माउवा२३४५(३) ॥ ८ * ॥ [१]

३ ४र ३र ४र ३र ४ ३र ४
॥ द्विरभ्यासालौशम् ॥ असाविमोमोअरुषोवृषोवृ

५र ३ २ ३ १ १ १ ३र र २ र
षा । द्वरायिः । द्वरा२३४यिः । राजे३१२३४ । वद्स्मो

र १ २ १ २ ३ ३ २र र
अभिगाअचि । क्रदात्क्रदात् । पुना३१२३४ । नोवार

र १ २ १ २ ३र २ २ र
मत्येष्य । व्ययांव्ययाम् । श्येनो३१२३४ । नयोनिङ्कृत

३ २ ४ ४ ३ ४ ३र ४ ४
व । नमा३मा५द्रा६५६त् ॥(१) पर्ज्जन्यःपितामहिषस्य

५ २ २ १ १ १ १ ३र २ २ र
प । र्णिना२३४५ः । नाभा३१२३४ । पृथिव्यागिरिषुत्तयस् ।

१ २ १ २ ३ २ २ र र र र १
दधायिदधायि । स्वसा३१२३४ । रआपोअगाउदा । स

२ १ २ २ २ र र ३र २ ४
रान्सरान् । सङ्गा३१२३४ । वभिर्वमतेवो । तेआ३ध्वा

४ ३ र ४ र ३र ४ ५र र ३ २
५रा६५६यि ॥(२) कविर्वेधस्यापरियेषिमा । . ह्विनाम् ।

३ १ १ १ १ ३ २ २ र र
ह्विना२३४५म् । अयो३१२३४ । नमृष्टोअभिवाजम ।

* ऊ० गा० ५प्र० २ख० ८सा० ।

षसायिषसायि । अपा३१२३४ । सेध्रन्दुरितासोमनः ।
मृडामृडा । घृता३१२३४ । वसानःपरिया । मिना३
यिणा५यिजा६५६म (३) ॥ २ * ॥ [२]

॥ ऐडमायास्यम् ॥ असावायिसो२३ । मोअक्रुषा२
३ः । ए३ । वृषाहरिरे३ । राजेवादा२३ । स्मोअभा
यिगा२३ः । ए३ । अचिक्रदद्दे३ । पुनानोवा२३ । रमता
यिये२३ । ए३ । षिअव्ययमे३ । श्येनोनायो२३ । नि
क्कृतावा२३ । ए३ । तमासदद्दे३४३ ॥ (१) पर्ज्जन्याःपा२
३यि । तामहायिषा२३ । ए३ । स्यपर्णिनए३ । नाभा
पार्थो२३यि । व्यागिरायिषू२३ । ए३ । त्वयन्दधए३ ।
स्वसाराआ२३ । पोअभायिगा२३ः । ए३ । उदासरन्ने
३ । सङ्गावाभा२३धिः । वसतायिवा२३यि । ए३ । पो

* ऊ० गा० २प्र० १ख० १मा० ।

अभायिगा२३ः। ए३। उदासरन्ने३। सङ्कावाभार३

यिः। वसतायिवार३यि। ए३। तेअध्वरए३४३॥(२)

कविर्वायिधा२३। स्यापरायिये२३। ए३। पिमाह्नि

मे३। अत्योनामा२३। ष्टोअभायिवार३। ए३। ज

मर्षसिए३। अपसायिधार३न्। दुरितासार३। ए३।

मनोमृडए३। घृतावासार३। नःपरायिया२३। ए३।

सिनिर्णिजमे३४३। ओ२३४५ई। डा(३)॥४*॥[३]

॥वासिष्ठम्॥ हायि। उद्भवायि। असा३४औहो

वा। विमो। मो३अरू। षोवृषाहरायिः। राजे३४

औहोवा। वदा। स्मो३अभि। गाअचिक्रदात्। पुना

३४औहोवा। नोवा। रा३मति। एषिअव्ययाम्। श्ये

ना३४औहोवा। नयो। निघृत। व। तमा३सा५दाई५

* ऊ० गा० १७प्र० २ख० ४सा०।

३ २ ३र ४र ५ १ २ १
ह्त् ॥(१) पज्र्जा३४औहोवा। न्यःपायि। ता ३ महि।
२ ३ ४ ५ ३र २ ३र ४र ५ १ १ १
षस्यपर्णिनाः। नाभा३४औहोवा। पृथायि। व्या३गि
२ ३ ४ ५ ३ २ ३र ४र ५ १ १
रि। षुक्षयन्दधायि। स्वसा३४औहोवा। रश्रा। पो
१ २ ३ ४र ५ ३ २ ३र ४र ५ १
३अभि। गाउदासरान्। सङ्क्रा३४औहोवा। वभायिः।
२ १ र २ ३र १ ४ ३ २ ३र ४र
वसते। वीं। तेआ३ध्वा५रा६५६यि ॥(२) कवा३४औहो
५ १र २ १ २र ३ ४र ५ ३ २
वा। वेधा। स्या३परि। पृषिमःह्निनाम्। अत्यो ३ ४
३र ४र ५ १ २ १ २र ३ ४ ५ ३ २
औहोवा। नमा। ष्टो३अभि। वाजमर्षसायि। अषा
३र ४र ५ १र २ १ र २र ३ ४र ५ २
३४औहोवा। सेधान्। दुरिता। सोमनोमृडा। ह्वा
३ २ ३ २ ३र ४र ५ १ ३ १
यि। उरुवायि। घृना३४औहोवा। वमा। नःपरि।
५ ३ २ ४
या। मिना३यिर्णा५यिजा६५६म(३) ॥ १७* ॥ [४]

२ १ २ १
॥ सोमानांनिषेधम् ॥ अमो। वाह्वायि। वायि
२ र २र १ १ र र
सोमोअर्षो। वृषाह्वारा २यिः। राजेवदस्मोअभिगाः।

* क्रो० गा० ७प्र० ४अ० १५सा०।

अचिक्रादा२३त्। पू२३ना। नो२३वा३४। रमतिये

षिञ्। व्या३याम्। श्या२३यिनो। ना२३यो३४। नि

क्तृतव। तमा३सा५दा६५६त्॥(१) पर्ज्जा। वाहायि।

न्याःपितामहिषा। स्यपर्णायिना२ः। नाभापृथिव्यागि

रिषू। चयन्दाधा२३यि। स्वा२३सा। रा२३आ३४

पोअभिगाउद्वा। सा३रान्। सा२३ग्रा। वा२३भा३४

यिः। वसतेवो। तेआ३ध्वा५रा६५६यि॥(२) कवो।

वाहायि। वायिधस्यापरियायि। षिमाचायिना२म्।

आत्योनमृष्टोअभिवा। जमर्षासा२३यि। आ२३पा।

मा२३यिधा३४न्। दुरितामोमनः। मा३र्डा। घा२३

र्मा। वा२३मा३४। नःपरिया। मिना३यिर्णा५यिजा

६५६(३)॥ २०*॥ [५] १३

* ऊ० गा० २३प्र० २अ० २२सा०।

अथ दशमे खण्डे—

प्रगाथात्मके प्रथम-सूक्ते,

प्रथमा ।

१ २ ३ २ ३ १र २र
आयन्तइवसूर्य्यं विश्वेदिन्द्रस्यभक्षत ।
१ २ २ १र २र ३ १ २ ३ १ २ ३ १र २र
वसूनिजातोजनिमान्योजसाप्रतिभागन्नदीधिमः ॥ १* ॥

हे अस्मदीया जनाः ! "आयन्त इव" सूर्य्यं यथा समाश्रिता रश्मयः सूर्य्यं भजन्ते, तथा "इन्द्रस्य" "विश्वेत्" विश्वान्येव धनानि "भक्षत" भजत । "वसुजातः" प्रादुर्भूत इन्द्रः यानि "वसूनि" धनानि "ओजसा" बलेन "जनिमा" जनिष्यमाणानि करोति अतो "भागं न" पितरं भागमिव तानि धनानि "प्रति दीधिमः" प्रतिधारयेम ॥

"जातोजनिमानि"-"जातेजनिमानि"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १र २र ३ १र २र ३ १ २
अलर्षि†रातिंवसुदामुपस्तुहिभद्राइन्द्रस्यरातयः ।
१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
योअस्यकामंविधतोनरोषतिमनोदानायचोदयन् ॥२‡॥ १४

हे स्तोतः ! "अलर्षिरातिम्" अपापकृ-दानम् अपापिष्ठस्य दातारइत्यर्थ [अलर्षि-पद-समानार्थमनर्श-पदं यास्केन व्याख्या-

* छ० आ० ३, २, ३, ५ (२भा० ५११ पृ०) = ऋ० वे० ६, ३, ३, ४ ।

† "अलर्ऋषि"—इति क० पु० पाठः ।

‡ ऋ० वे० ६, ६, ३, ४ ।

तम्—"अनर्शरातिमनश्लील-दानमश्लीलं पापकम्"-इति (निरु० नै० ६,२३ ) ] "वसुदां" धनस्य दातारमिन्द्रम् "उप स्तुहि"* यतः "इन्द्रस्य" "रातयः" दानानि "भद्रा" कल्याणानि महदैश्वर्यकारीणीत्यर्थः। "यः" इन्द्रः स्वकीयं "मनः" "दानाय" अभीष्ट-प्रदानाय "चोदयन्" प्रेरयन् "विधतः" परिचरतः "अस्य" स्तोतुः "कामम्" इच्छां "न रोषति" न हिनस्ति। तमिन्द्रमुपस्तुहीति सम्बन्धः॥

"अनर्विरातिम्"—इति छन्दोगाः पठन्ति, "अनर्शरातिम्"—इति बह्वृचाः; "योअस्य"-"सोअस्य"—इति च॥ २॥ १४

॥ आयन्तीयम्॥ आयन्तइवसू१रायाम्। विश्वा२ यिदिद्रा२। स्यभा२क्ताता। वामूनिजातीजनिमा। नियोजा१सा२। प्रतिभागन्दी२घिमः। प्रा२३ती। भागान्ना३दा। ऊम्। धिमा३ः। ओ२३४वा॥(१) प्रतिभागन्नदा१यिधायिमाः। प्रता२यि। भागा२म्। नदा२यिधायिमाः। आक्षर्विरातिम्बसदाम्। उपास्त१

* 'उपस्तुहि—समीपे स्थित्वा स्तुहि'—इति वि०।

हायि। भद्राइन्द्रस्यरातयः। भा२३द्राः। इन्द्रास्या३रा। ऊम्। तया३ः। ओ२३४वा॥(२) भद्राइन्द्रस्यरा१तायाः। भद्रा२इन्द्रा२। स्यरा२तायाः। यास्यकामम्बिधतः। नरोषा१ता२यिं। मनोदानायचोदयन्। मा२३नाः। दानाया३चो। ऊम्। दया३। ओ२३४वा। हे२३४५(३)॥ ८ *॥[१]

॥ निषेधम॥ आयन्तइवा३सूरियाम्। विश्वायिन्द्रा। स्यभक्तता२। इहा३। वासू३नायिजा। हाहौ२३४हा। तोजनिमा। नियोजा२३सा। इहा३। प्राता३यिभागाम्। हाहो२३४हा। नदा३यिधा५यिमाई५ईः। हे२३४५(३)॥ २ †॥[२] १४

* ऊ० गा० ५प्र० २अ० ८सा०।

† ऊ० गा० १प्र० २अ० २सा०।

अथ प्रगाथात्मके द्वितीय-सूक्ते—

प्रथमा।

१२ ३१२ ३१२ ३ १२
यतइन्द्रभयामहेततोनोअभयङ्कृधि।

१२ ३ १उ ३१२१ २३२उ ३१२ ३२
मघवञ्छग्धितवतन्नऊतयेविद्विषोविमृधोजहि ॥१*॥

हे "इन्द्र!" "यतः" हिंसकात् "भयामहे" वयं, ततः "नः" अस्मभ्यम् "अभयं" "कृधि" कुरु। हे "मघवन्" धनवन्निन्द्र! "नः" अस्मानुद्दिश्य "तत्" तस्यै "तव ऊतये" त्वत्कर्त्तृकायै रक्षायै "शग्धि" शक्तो भव। किञ्च "वि द्विषः" अस्मद्द्वेष्टॄन् विजहि; "वि मृधः" अस्मद्धिंसकान् विजहि॥

"ऊतये"-"ऊतिभिः"—इति पाठौ॥१॥

अथ द्वितीया।

१२ ३२ ३१२ ३२उ ३१२ ३२
त्वꣳहिराधसस्पतेराधसोमहःक्षयस्यासिविधर्त्ता।

१२ ३१२ ३१२
तन्त्वावयम्मघवन्निन्द्रगिर्वणःसुतावन्तोहवामहे ॥२†॥१५

हे "राधसस्पते" धनस्य स्वामिन्! "त्वं हि" त्वं खलु "महः" महतः "राधसः" धनस्य "क्षयस्य" गृहस्य च ‡

---

* छ० आ० ३, २, ४, २ (१भा० ५६४ पृ०) = ऋ० वे० ६, ४, ३७, ८।

† ऋ० वे० ६, ४, ३७, ४।

‡ 'क्षयो निवासः, तस्य'—इति वि०।

"विधर्त्ता असि हि" अस्मभ्यं दातुं धारको भवसि खलु। हे "गिर्वणः" गीर्भिर्वननीय! "मघवन्" धनवन्निन्द्र! "तं" तादृशं "त्वा" त्वाम् "वयं" "सुतावन्तः" अभिषुत-सोमाः "हवामहे" आह्वयामः।

"राधसस्पते"-"राधस्पते"—इति पाठौ, "विधर्त्ता"-"विधर्त्ते"—इति च॥२॥१५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य दशमः खण्डः *॥१०॥

॥समन्तम्॥ यतइन्द्रभयामहायि। ततोनोआभ यङ्कृधायि। मघवा२३का। ग्धायितवनत्। नऊतााया। औहो३४वाहायि। वि। द्रायिषो२३वी३। होवा३हा ३हायि। मृधोजा१३हा३४३यि॥(१) विद्विषोविमृधोज हायि। विद्विषोवायिमृधोजहायि। तुवं२हा२३यिरा। धसोमाहा।· औहो३४वाहायिन्त। यास्या२३सी३।

* 'उक्तो माध्यन्दिनः पवमानः नवममहः'। वामदेव्यं मैत्रावरुणं साम, श्रायन्तीयं ब्रह्मसाम, सामन्त सन्धानाकं साम च'—इति वि०।

१ २  २  १  २  १ २ १र  २  १
होवा३हायि। विधा२३र्त्ता३४३ ॥(१) त्वयस्यासीविधर्त्ता।
२  १  १ २  १  २  ३र २
तन्वावा२३याम्। माघवन्नि। द्रगायिर्वाणा। औहो
३र २  १  २  १ २  २
३४वाहायि। सु। तावा२३न्ता३। हावा३हायि। ह
१र  २  १
वामा२३हा३४३यि। ओ२३४५ई। डा(३) ॥ १०* ॥ [१] १५

अथैकादश-खण्डे—

त्वंसोमेति तृचात्मकं प्रथमं सूक्तम्†‡,

तत्र प्रथमा।

१ २  ३ २ २  १र २र  २ २
त्वꣳसोमासिधारयुर्मन्द्रओजिष्ठोअध्वरे।
१ २  ३ १ २
पवस्वमꣳहयद्रयिः ॥ १¶ ॥

हे "सोम!" अभिषूयमाण-पवमान! "मन्द्रः" मादयितृतमः "ओजिष्ठः" ओजस्वितमः त्वम् "अध्वरे" हिंसा-रहिते ऽस्मदीये यज्ञे "धारयुः" अभिषव-धारा-कामः "असि" भवसि।

---

* ऊ० गा० ४प्र० २अ० १०मा०।

† 'इदानीमार्भवः पवमानः'—इति वि०।

‡ 'त्वं सोमासि धारयुरिति षड्चसूक्त प्रभृतीनि सामानि ब्राह्मणोक्तार्षाणि'—इति वि०।

¶ ऋ० सं० ७. ४. १७. १।

ततः "त्वं" "मंहयद्रयिः" स्तोतृभ्यः प्रदीयमान-धनः सन्*
"पवस्व" द्रोणकलशे ग्रहादिषु दशापवित्रेण पूतो भव [ यद्वा,
"धारयुः" तद्वदर्थे भाष्यत इति मत्वर्थीयो युस् ]। हे सोम !
त्वं धारावानसि ततः पवस्वेति सम्बन्धः ॥ १ ॥

अथ द्वितीया ।

२ १ २ ३ १ २ ३ १ २ ३ १ २
त्वꣳसुतोमदिन्तमोदधन्वान्मत्सरिन्तमः ।
१ १ २ १र २र
इन्दुःसत्राजिदस्तृतः ॥ २† ॥

हे सोम ! "सुतः" अभिषुतः "त्वं" "मदिन्तमः" अतिशयेन
मदयुक्तोऽसि। कीदृशस्त्वम् ? "दधन्वान्" यज्ञस्य धारकः,
"मत्सरिन्तमः" अतिशयेन मदकारी,‡ "इन्दुः" सोमः, "सत्रा
जित्" बहूनां जेता,¶ "अस्तृतः" केनाप्यहिंसितः ॥

"मदिन्तमः"-"नृमादनः"—इति पाठौ, "इन्दुःसत्राजिद-
स्तृतः"—"इन्द्रायसूरिरन्धसा"—इति च ॥ २ ॥

अथ तृतीया ।

१ २ ३ १र २र ३क२र ३ १ २
त्वꣳसुष्वाणोअद्रिभिरभ्यर्षकनिक्रदत् ।
२ २ ३ २ ३ १ २
द्युमन्तꣳशुष्ममाभर ॥ ३ § ॥ १६

---

* 'यद्यपि मंहतिः पूजार्थः तथाप्यत्र लाभार्थो द्रष्टव्यः'—इति वि० ।

† ऋ० वे० ७, २, १३, २।

‡ 'मत्सरिन्तमः—मदनीयतमः'—इति वि० ।

¶ 'सत्राजित - सदा जेता अथवा महज्जेता'—इति वि० ।

§ ऋ० वे० ७, २, १३, ३ ।

हे "पवमान" सोम! "अद्रिभिः" ग्रावभिः "सुष्वाणः" सुन्वानः अभिषूयमाणस्त्वं "कनिक्रदत्" भृशं शब्दं कुर्वन् "अभ्यर्ष" कलशं पात्राणि चाभिगच्छ। किञ्च "द्युमन्तं" दीप्तियुक्तं "शुष्मं" शत्रूणां शोषकं बलं वा "आभर"* ॥

"आभर"-"उत्तमम्"—इति पाठौ ॥ ३ ॥ १६

॥ आश्वसूक्तम् ॥ आऔहोवाहायि। तुवꣳसोमा। सिधा। रयुः। ऐहीयैहो१। मान्द्रओजिष्ठोआध्वरे। ऐहीयैहो१। आ२यि। पावा२स्वामा२। हयत्। रा२या२३४औहोवा॥(१) आऔहोवाहायि। तुवꣳसु ताः। महायि। तमः। ऐहीयैहो१। दाधन्वान्मत्स रायिन्तमः। ऐहीयैहो१। आ२यि। आयिन्दू२ःसा त्रा२। जिद। स्ता२त्ता२३४औहोवा॥(२) आऔ होवाहायि। तुवꣳसुष्वा। णोआ। द्रिभिः। ऐहीयै हो१। आभियर्षकनायिक्रदत्। ऐहीयैहो१। आ२

* स्वर्विदमिति प्रतीक-ग्रहणं स्वर्गस्य वेत्तारमिति तद्व्याख्यानञ्चात्र विवरणे प्रामादिक इव उपलक्ष्यते।

यि। द्युमा२न्नाग्रूट२। अमा। भा२रा२३४औहोवा। ग्रुक्थाऊता२३४५:(३) ॥ ११* ॥ [१]

॥ शाम्मदम्॥ तुव ूँ सोमासिऐ। होऐहो२३४या। धारयुरै२हो३या। मन्द्रओजिष्ठोअध्वरऐ२होऐ२हो३या। प्रावाखामा३१२३। हुयो२३४वा। रा५योहा यि ॥(१) तुवँ सुतोमदऐ। होऐहो२३४या। दिन्तमो२होऐ२हो३या। दधन्वान्मत्सरिन्तमऐ२होऐ२हो३या। आयिन्दुःसात्रा३१२३। जिदो२३४वा। स्ता५त्रौहा यि ॥(२) तुवँ सुष्वाणऐ। होऐहो२३४या। अद्रिभिरै२होऐ२हो३या। अभियर्षकनिक्रददै२होऐ२हो३या। द्युमान्नाँ ग्रूट३१२३। अमो२३४वा। भा५रोहा वि(३) ॥ १२† ॥ [२]

* ऊ० गा० ५प्र० २अ० ११मा०।

† ऊ० गा० ५प्र० २अ० १२मा०।

२ १ ४र र ५
॥ दावसुनिधनम् ॥ तुवꣳसोर२३मामिधारयुर्हाउ ।
१ २र र १ २ १ २ २ १
मान्द्रओजि । ष्ठोआध्वा१रा२३यि । होवा३हायि । प
२ १ २ २ १ ३ ५र
वास्वा१मार२३ । होवा३हा । हयत् । रा२या२३४औ
र २ १ ४र र ५ १ २र
होवा ॥(१) तुवꣳनृ२३तोमदिन्तमोहाउ । दधन्वान्मत्स
१ २ १ २ १ १ २
रायिन्ता१मार२३ः । होवा३हायि । इन्दूःमा१त्वार२३ ।
१ १ २ १ ३ ५र र २
होवा३हा । जिद । स्तार२त्ता२३४औऔहोवा ॥(२) तु
१ ४र र ५ १ २ १ २
वꣳमू२३षाणोअद्रिभिर्हाउ । आभियर्ष । कनायिक्रा१
१ २ २ १ २ १ २
दा२३तु । होवा३हायि । द्यु मान्ता१ꣳस्र२३ । होवा
२ १र ३ ५र र २ २र १
३हा । यममा । भा२रा२३४औहोवा । ए३ । दाव
३१११११
सू२३४५ ३) ॥ १३* ॥ [३]

१ र २र १
॥ प्रतीचीनेडङ्काग्नीतम् ॥ त्वꣳसोमासि । धा२रयूः ।
२र र १ ० ३र २ १
मान्द्रओजि । ष्ठोआध्वरा२३४यि । हाहोयि । पवस्व

* ऊ० गा० ५प्र० २ख० १३सा० ।

माऽऽहा३यात् । रयायिः । औ२३होवा ॥(१) त्वऽऽसु

तोम । दा२यिन्तमाः । दाधन्वान्म । त्मरायिन्तमा२

३४ः । हाहोयि । इन्दुःसत्राजी३दा । स्तुता । औ३

होवा ॥(२) त्वऽऽसुष्वाणः । आ२द्रिभायिः । आभियर्षी

कनायिक्रदा२३४त् । हाहोयि । द्युमन्तऽऽशुष्मा३मा ।

भरा । औ३होवा । ई डा(३) ॥ १४* ॥ [४]

॥ हाविष्कृतम् ॥ त्वऽऽमोमामिधाहाउराय्ः । मन्द्र

ओजायि । ष्ठोआध्वा२३रायि । पवा२हो१ । स्वा२३

मा । ह्‌ ॰ ॰ । रा२या२३४औहोवा ॥(१) त्वऽऽसुतोम

दाहाउतामाः । दधन्वान्मा । त्मरिन्ता२३माः । इन्दू

२र्हो१यि । सा२३त्रा । जिद् । स्ता२त्ता२३४औहो

वा ॥(२) त्वऽऽसुष्वाणआहाउद्रायिभायिः । अभियर्षा ।

---

* ऊ० गा० ५प्र० २ख० १४मा० ।

२ १र
कनिक्रा२३दात्। द्युमा२हो१। ता२३४ग्। यमा।
३ ५र ५र २ १ ३ १ १ १ १
भा२रा३३४औहोवा। चविष्कृते२३४५(३) ॥१५*॥[५]१६

अथ तृचात्मके द्वितीय-सूक्ते

प्रथमा।

पवस्वदेववीतयइन्दोधाराभिरोजसा।

आकलशम्मधुमान्त्सोमनःसदः॥ १† ॥

हे "इन्दो" सोम! "देववीतये" देवानां भक्षणाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" चर। हे "सोम!" "मधुमान्" मदकर-रसवान् त्वं "नः" अस्मदीयं "कलशं" द्रोणाभिधानम् "आसद" आसीद [सदेर्लुङि रूपम्]॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
तवद्रप्साउदप्रुतइन्द्रम्मदायवावृधुः।
२ ३ १ २ ३१ २ ३ १ २
त्वान्देवासोअमृतायकम्पयुः॥ २‡ ॥

---

* ऊ० गा० ५प्र० २ख० १५सा०।

† ऋ० सं० ६, ३, ३, ६ (९म० ६२ ४०)। — ऋ० सं० ७, ५, १०, २।

‡ ऋ० सं० ७, ५ १०, ३।

"उद्प्रुतः" वसतीवर्य्याख्यमुदकं प्रति गच्छन्तः* [यद्वा, उदकस्य निर्गमयितारः] "तव" स्वभूताः "द्रप्साः" द्रुतगामिनो रसाः† "मदाय" मदार्थम् इन्द्रम् "वावृधुः" वर्द्धयन्ति। ततः "देवासः" देवा इन्द्रादयः "कं" सुखकरं‡ "त्वाम्" "अमृताय" अमरणार्थं "पपुः" पिबन्ति ॥ २ ॥

अथ तृतीया।

१ २ १ २ २ ३ १
आ नः सुता स इन्दवः पुनाना धावता रयिम्।
३ २ १ ३ १ २
वृष्टिद्यावो रीत्यापः स्वर्विदः ॥ ३¶ ॥ १७

हे "सुतासः" अभिषूयमाणाः ! हे "इन्दवः" दीप्ताः पात्रेषु चरन्तो वा "रीत्यापः" यैः पृथिवीं प्रति स्रवणशीला आपः, तादृशा हे सोमाः ! "पुनानाः" पूयमानाः यूयं "नः" अस्मभ्यं "रयिम्"§ "आ धावत" आगमयत। कीदृशाः ? "वृष्टिद्यावः"‖ वृष्टिमभि द्यौर्यैः क्रियते, वृष्ट्यभिमुख-द्युलोकवन्तः "स्वर्विदः" सर्वस्य लम्भकाः** ॥ ३ ॥ १७

---

* 'उद्प्रुतः—उदकेन प्लाविताः'—इति वि०।

† 'द्रप्साः—द्रव्यभूताः सोमाः'—इति वि०।

‡ 'कं—जातिभूतम् अथवा कम् उदकभूतम्—इति वि०।

¶ ऋ० वे० ७; ५, १०, ४।

§ 'रयिं—सौभाग्यं धनम्'—इति वि०।

‖ 'वृष्टिद्यावो रीत्यापः—यथा द्युलोके भवान् वृष्टिः रीतिभिः सङ्घातः'—इत्यादि वि०।

** 'स्वर्विदः—स्वर्गस्य नेतारः'—इति वि०।

॥ वैश्वमनसम् ॥ पवस्वदेववीता३यायि। आयिन्दो
धारा२। भिरो३४५। जमआकलशम्मधमान्त्सो२३४५।
मना२ः। सादा२आ२३४औहोवा ॥(१) तवद्रप्सोउदप्रु
३ताः। आयिन्द्रम्मदा२। यवा३४५। वृधुरात्वान्देवा
सोअमृता२३४५। यका२म्। पापू२रा२३४औहोवा ॥(२)
आनःसुतासइन्दा३वाः। पूनानाधा२। वता३४५। रयि
मावृष्टिद्यावारीत्यापा२३४५ः। सुवा२ः। वोयिदा२आर
आ२३४औहोवा। ऊ२३४५(३) ॥ १७* ॥ [१]

॥ सुज्ञानम् ॥ पवस्वदा। ववीतयायि। इन्दोधा
रा२। भिराजमा। आकलाशा२म्। मधु। मा२
न्त्सो२३४औहोवा। मनःसद्ए३ ॥(१) तवद्रप्साः। उद
प्रुताः। इन्द्रम्मादा२यिवावृधः। तुवान्दायिव्यं२। सा

* ऊ० ग्रा० ५प्र० २ख० १७सा०।

१ ॥ ५र २ १ २ २र
अ। मा२र्त्ता२३४औहोवा। तकम्पुरे३ ॥(२) आनः

१ २र १ र १
सुता। सइन्दवाः। पुनानाधा२। वतारयायियिम्।

२ १ २ १ ३ ५र र १ २
वृष्टिद्यावा२ः। रीति। औ२पा२३४औहोवा। सुवर्वि

१ ११११
दए३उपा२३४५(३) ॥ १८* ॥ [२] १७

अथ तृचात्मके तृतीय-सूक्ते —

प्रथमा।

२ ३ १ २ ३ १र २र ३ १ २ ३ १ २
परित्यꣳहर्यतꣳहरिम्बभ्रुम्पुनन्तिवारेण।

२ ३ २३ ३ २३ ३ १ २ ३ १र २र
योदेवान्विश्वाꣳइत्परिमदेनसहगच्छति ॥ १† ॥

"हर्यतं" सर्वैः स्पृहणीयं "हरिं" हरितवर्णं "बभ्रुं" बभ्रुवर्णं च "त्यं" तं सोमं "वारेण" वालेन पवित्रेण "परि पुनन्ति" परिशोधयन्ति "यः" सोमः "विश्वान्" एतत्सर्वानिन्द्रादीन् देवान् अनेन "मदेन" मादकेन रसेन "सह" "परि गच्छति" ॥ १ ॥

---

* ऊ० गा० ११प्र० २ख० १९सा०।

† ऋ० आ० ६, २, १, ८ (२भा० १६०पृ०) = पुनरिहैव ८, २, ८, ३ = ऋ० वे० ७, ४, २४, २।

अथ द्वितीया।

२उ ३ १ २ ३ १ २ ३ १ २
द्विर्यम्पञ्चस्वयशसꣳसखायोअद्रिसꣳहतम्।
३ १र २र ३ २ २ ३ १ २ ३ १ २
प्रियमिन्द्रस्यकाम्यम्प्रस्नापयन्तऊर्म्मयः॥ २* ॥

"द्विः पञ्च"† दश-सङ्ख्याकाः "सखायः" समान-ख्याना अङ्गुलयः‡ "स्वयशसं" स्वभूत-यशस्कम्¶ "अद्रिसंहतम्" ग्रावभिरभिषुतम् "इन्द्रस्य प्रियं" "काम्यं" सर्व्वैः काम्यमानम् "ऊर्म्मयः" § [द्वितीयैकवचने प्रथमा-बहुवचनम्] ऊर्म्मिं प्रभूततरं "यं" सोमं "प्र स्नापयन्ते" वसतीवरीभिः प्रकर्षेण सेवयन्ति [यद्वा, ऊर्म्मयइत्यङ्गुलि-विशेषणं प्रभूता इति]; तं सोमं पुनन्तीति पूर्व्वेण सम्बन्धः॥

"सखायः"-"स्वसारः"—इति पाठौ, "प्रस्नापयन्तऊर्म्मयः"-"प्रस्नापयन्त्यूर्म्मिणम्"—इति च॥ २॥

अथ तृतीया।

१ २ ३ १ २ ३ १र २र
इन्द्रायसोमपातवेवृत्रघ्नेपरिषिच्यसे।
१ २ ३ १ २ ३ १ २ ३ १ २
नरेचदक्षिणावतेवीरायसदनासदे॥ ३ ‖॥ १८

* ऋ० वे० ७, ४, १२, ६।

† 'द्विः—द्विःकृत्य। यं सोमं। पञ्च ऋत्विजः'—इति वि०।

‡ 'सखायः—ऋत्विजः'—इति वि०।

¶ 'स्वयशसं—स्वयशसा सम्पन्नम्'—इति वि०।

§ 'ऊर्म्मयः—उदक-सङ्घाताः'—इति वि०।

‖ ऋ० वे० ७, ४, २४, ४।

हे "सोम!" "वृत्रघ्ने" वृत्रस्य हन्त्रे "इन्द्राय" [षष्ठ्यर्थे चतुर्थी] इन्द्रस्य "पातवे" पानार्थं "परिषिच्यसे" परितः पात्रेषु सिच्यसे वसतीवरीभिर्वा। किञ्च "दक्षिणावते" ऋत्विग्भ्यो दक्षिणा-दानेन तद्वते, "वीराय" विक्रान्तायेन्द्राय हवींषि दातुं "सदनासदे" यज्ञ-यज्ञे सीदते,* "नरे"† मनुष्याय यजमानाय तस्मै फल-प्रदानार्थं परिषिच्यसे ॥

"वीराय"-"देवाय"—इति पाठौ ॥ २ ॥ १८

५ २ २ ४ ५
॥ गौरीवितम् ‡ ॥ परि। त्यꣳहा३। यँतꣳहरायिम्।
१ २ २ १ २ २ २ ४२
बभ्रुम्पुनन्तिवारेणार३। योदेवान्वा३१२३यि। श्वाꣳ
१२ २ ४ ५ ४
आ५यित्परायि। मादेनसा३१२३। हगोवा। क्वा५तो
५ ५ ३ २ ५ १ २
इहायि ॥(१) द्वियम्। पञ्चा३। स्वयशसाम्। सखा
२ १ २ ४
योअद्रिसꣳहता२३म्। प्रायमिन्द्रा३१२३। स्यका५मि
१ २ २ ४ ५ ४ ५
याम्। प्राश्लापया३१२३। तओवा। मा५योइहायि ॥(२)
५ २ ३२ ४२५ १ २
इन्द्रा। यसो३। मपातवायि। वृत्रघ्ने परिषिच्यसा२३

* 'सदनासदे—यानि यज्ञे सदनानि द्रोणकलश-प्रभृतीनि, तेषु आसीदति।' इति वि०।

† 'नरे—नराकारे'—इति वि०। ‡ "महागौरीवितम्"—इति ख० पु० पाठः

यि। नारेचहा३१२३। श्रिणा५ब्नायि। वायिरायसा ३१२३। इनोवा। मा५द्दोई्हायि(३)॥ १८* ॥ [१]

॥ निह्नवम्॥ आयिही३। आयिही। एहिया। ओ२३४वा। हायि। परित्य॒१हर्यता३१हारा३यिम्। हारायिम्। हरा। ओ२३४वा। हायि। बभ्रुम्पुनन्तिवा३रेणा३। रेणा। रेणा। ओ२३४वा। हायि। योदेवान्विश्वा१ई३त्पारा३यि। परायि। परा। ओ२३४वा। हायि। मदेनसहगा३च्छाना३यि। च्छानायि। च्छना। ओ२३४वा। हायि॥(१) दिव्यम्पञ्चस्वया३शासा३म्। शासाम्। शसा। ओ२३४वा। हायि। सखायोअद्रिमा३१हाता३म्। हताम्। हता। ओ२३४वा। हायि। प्रियमिन्द्रस्यका३माया३म्। मा

---

* ज० गा० ५प्र० २ख० १८सा०।

याम्। मिया। ओ२३४वा। हायि। प्रज्ञापयन्तऊ
र्म्मयाः। मया। ओ२३४वा। हायि॥(२) इन्द्रा
यसोमपा३तावा३यि। तावायि। तवा। ओ२३४वा।
हायि। वृष्णे परिषी३च्यासा३यि। च्यासायि। च्यसा।
ओ२३४वा। हायि। नरे चदक्षिणा३वाता३यि। वाता
यि। वता। ओ२३४वा। हायि। वीरायसदना३मा
दा३यि। सादायि। सदा। ओ२३४वा। हायि।
आयिहीः३। आयिहो। एहिया। ओ२३४वा। हा
३४। औहोवा। ई२३४५(३)॥१८*॥[२]

॥ यद्वाहिष्ठीयम्॥ परित्यꣳहर्य्यतꣳहरिम्। परि
त्यꣳहोवा। यतꣳहरायिम्। बभ्रुम्पू२३ना। तिवारे
णा। यौदेवा२३न्वायि। श्वाꣳइत्यरायि। मदेना२३

* अ० गा० ५प्र० २ख० १८गा०:

सा। इगच्छा२३ता३४३यि॥(१) दिव्यम्पञ्चस्वयशसम्। दिव्यम्पञ्चोवा। स्वयशसाम्। सखायो२३आ। द्रिसꣳहताम्। प्रियमा२३यिन्द्रा। स्यकामियाम्। प्रला पा२३या। तजर्म्मा२३या३४३ः॥(२) इन्द्रायसोमपातवे। इन्द्रायसोवा। मपातवायि। वृत्रघ्ना२३यिपा। रिषिच्यसायि। नरेचा२३द्रा। त्रिणावतायि। वीरा या २ ३ सा। दनासा२३दा३४३यि। ओ २ ३ ४ ५ई। डा(३)॥२०*॥[३]

॥आसिताद्यम्॥ परित्यꣳहर्य्यताम्। हरायिम्। बभ्रुम्पुनन्तिवारे२३णा। योदे२वान्वा२यि। श्वाꣳइत्परायि। मादे२नासा२। हगोवा३ओ२३४वा। च्छा ५तोई३हायि॥(१) दिव्यम्पञ्चस्वया। शसाम्। सखायो

* ऊ० गा० ५प्र० २ख० २०सा०।

अद्रिसꣳहार२३ताम्। प्राया२मायिन्द्रा२। स्यकामि याम्। प्रास्ना२पाया२। नश्रोवा३श्रो२३४वा। मा५ यो६हायि॥(२) इन्द्रायसोमपा। तवायि। वृत्रघ्नेप रिषिच्या२३सायि। न्रा२रचादा२। त्तिणावतायि। वायिरा२यासा२। दनोवा३श्रो२३४वा। सा५दो६ हायि(३)॥१*॥[४]

॥ साध्रम्॥ परित्या३ꣳहर्य्यतꣳहरायिम्। बभ्रु पुना२। निवा३४५। र२३४णा। योदेवान्विश्वाꣳ इत्परा२३४५यि। मादाश्रो२३४वा। नासाश्रो२३४वा। हगा५च्छतायि॥(१) दिव्यम्या३च्चस्वयशसाम्। सखा यो श्रा२। द्रिमा३४५। हा२३४ताम्। प्रियमिन्द्रस्यका मि[illegible]२३४५म्। प्रास्नाश्रो२३४वा। पायाश्रो२३४वा।

---

* ऊ० गा० १प्र० १श्र० १सा०

तऊ५र्मयाः ॥(२) इन्द्रायाइसोमपातवायि। वृत्राघ्नेपा
२। रिषा३४५यि। च्या२३४से। नरेचदक्षिणावतार३
४५यि। वायिराओ२३४वा। यासाओ२३४वा। दना
५सदायि। होऽ५ई। डा(३) ॥ २* ॥ [५]

॥ वसिष्ठस्याकूपारम् ॥ परित्या२३ऽहर्य्य। तऽ
हा२३४रायिम्। बभ्रू२स्पुना। तिवारिणा। योदेवान्वा२
यि। स्वाऽहूत्परायि। मदेवासार३। हा२३गा३।
च्छा३४५तोई३हायि ॥(१) दिर्य्यामा२३स्वस्व। यशा२३४
साम्। सखा२योग्या। द्रिसऽहनाम्। प्रियमायि
न्द्रा२। स्यकामियाम्। प्रस्तापायार३। तार३ऊ३३
मा३४५योई३हायि ॥(२) इन्द्रायार३सोम। पाता२३४
वायि। वृत्रा२घ्नेपा। रिषिच्चसायि। नरेचोदा२क्षि

* ऊ० गा० ६प्र० १ख० १सा०।

र १ २र र १ १ ४ २
णावतायि । वीरायासा२३ । दा२३ना३ । सा ३ ४ ५

५
दो६हायि(३) ॥ ३* ॥ [६]

३ २ २ ४ ५
॥ श्यावाश्वम् ॥ परा३१यि । त्या३१उ्च । र्य्यतम् ।

१ ४ ५ १ २र
हा ३ रिम् । एहिया । वा । भ्रुम्युनन्तायि । वा ।

१र १र र र १र २ ४
रेणा२ । एहिया२ । योदेवान्वायिश्वा३१उ्श्रा३यित् ।

५ २र १र र १
पा २ ३ ४ रायि । ऐहा२यि । एहिया२ । मदेनस

२ ४ २ ५ १ २
हा३गा३ । च्छा ३ ४ ५ तो ६ हायि ॥(१) दिर्व्या ३१ म ।

२ ४ ५ २ ४ ५ १ र र
पा३च्च । स्वय । शा३सम् । एहिया । सा । खायोश्वद्रा

२ १ १र १ २ ४
यि । स । हता२म् । एहिया२ । प्रियमिन्द्रास्या३क्ता

५ २र १र र १
३ । मा२३४याम् । ऐहा२यि । एहिया२ । प्रस्नाप

२ ४ २ ५ ३ २ २
यान्ता३ऊ । मा३४५योर्६हायि ॥(२) इन्द्रा ३ १ । या३

४र ५र २ ४र ५ १ र २
सो । मधा । ता३वे । एहिया । वा । नघ्नेपरायि । षि ।

---

* ऊ० गा० ६प्र० १ख० ३मा० ।

च्यसा२यि । एह्निया२ । नरेचदाचा३यिणा३ । वा२
३४तायि । ऐहा२यि । एहिया२ । वीरायमादा३ना
३ । सा३४५दौ६हायि(३) ॥ १* ॥ [७]

॥ आन्धीगवम् ॥ परित्य॑हर्य्यता१॥हारायिम् । ब
भ्रुम्पु । नन्ता२३यिवा । ऊम्मा२१ऽ२ । रेणयोदेवान्नि
श्वा॑इत्यरा२३४५यि । मादा३उवा । ना२सा । हा२
३गा । च्छता । औ३होवा ॥(१) दिव्यम्पञ्चस्वया१शा
साम् । सखायः । अद्रा२३यिसा । ऊम्मा२१ऽ२ । ह
तप्रियमिन्द्रस्यकामिया२३४५म् । प्राखा३उवा । पा२
या । ता२३ऊ । मया । औहोवा ॥(२) इन्द्रायसो
मपा१तावायि । वृत्रघ्ने । परा२३यिषा । ऊम्मा२१ऽ२ ।
च्यसेनरेचदक्षिणावता२३४५यि । वायिरा३उवा । या२

* ऊ० गा० १९प्र० २ख० १सा० ।

सा। दा२३ना। सदा। औ३होवा। चो५ई।
डा(३)॥२*॥[८]

॥आसिताद्यम॥ इन्द्रायसोमपा। तवायि। वृत्र
घ्नेपरिषिच्यार२३सायि। नारे२चादा२। चिणावता
यि। वायिरा२यामा२। इनोवा३औ२३४वा। सा५
दो६हायि॥(१) त(ंसखायःपुरु। रुचाम्। वयंयूय
ञ्चसूरा२३याः। आश्या२मावा२ जगन्धियाम्। सा
ने२मावा२। जपोवा३औ२३४वा। स्ता५यो६हायि॥(२)
परित्य(ंहर्यताम्। हरायिम्। बभ्रुम्पुनन्तिवारे२३
णा। योदे२वान्वा२यि। आ(ंइत्परायि। मादे२ना
सा२। हगोवा३औ२३४वा। च्छा५तो६हायि(३)॥१६†॥[९]

---

* ऊ० गा० १२प्र० २अ० २सा०।

† ऊ० गा० १४प्र० २अ० १६सा०।

॥ ऐडकौत्सम् ॥ इन्द्राद्दोयार२३। सोमपातवइया। वृत्रघ्ने परिषिच्यसि। नारेचद। क्षिणावार२३तायि। वायिरा३द्दा। यासा३द्दा। दनासार२३दा३४३यि ॥(१) तꣳसद्दोखार२३। यःपुरूरुचमीया। वयंयूयञ्चसूरयः। आश्यामवा। जगन्था२३याम्। साना३हायि। मावा३द्दा। जपस्ता२३या३४३म् ॥(२) परीहित्या २ ३म्। द्यर्यतꣳहरिमीया। बभ्रुम्पुनन्तिवारेण। योदेवाच्छि। स्वाꣳइत्या२३रायि। मादा३द्दायि। नासा३द्दा। हग च्छा२३ता३४३यि। ओ२३४५ई। डा(३) ॥ १०* ॥ [१०]

॥ प्रुङ्घाप्रुङ्घीयाद्यम् ॥ इन्द्रायसोमपातवायि। वृत्रघ्ने परिषिच्या२३सायि। नरेचदक्षिणावा२३तायि। वीराया२३सा३। दा२। नासा३४औहोवा। दा२३४५।

* ऋ० गा० १४प्र० २ अ० १०सा०।

यि ॥(१) तꣳसखायःपुरूरुचाम् । वयंयूयञ्चसूरा२३याः । अश्यामवाजगन्धा२३याम । सनेमा२३वा३ । जा२ । पस्ला३४औहोवा । या२३४५म् ॥(२) परित्यꣳहर्यतꣳ हरायिम् । बभ्रुम्पुनन्तिवारे२३णा । योदेवान्विश्वाꣳ इत्परि२३रायि । मदेना२३मा३ । हा२ । गच्छा३४औहोवा । ता२३४५यि(३) ॥ १८* ॥ [११]

॥ कौञ्चाद्यम् ॥ इन्द्रायसोहो । मापातवायि । वृत्रघ्ने पा३ । रायिषा३यिच्या५मा६५६यि । नरेचहौहो । दक्षणावतायि । वीरायमा३ । दाना३सा५दा६५६यि ॥(१) तꣳसखायौहो । पूरुरुचाम् । वयंयूया३म् । चासू३ रा५या६५६ः । अश्यामवौहो । जागन्धियाम् । सन मवा३ । जापा३स्ता५या६५६म् ॥(२) परित्यꣳहौहो ।

---

* ऊ० गा० १४प्र० १ख० १८सा० ।

यातꣳ हरायिम। बभ्रुग्पुना३। नायिवा३रे पुणा६५६।

योदेवान्वीर्हो। स्वाꣳ हूत्परायि। मदेनसा३। हागा

इच्छा५ता६५६यि(३) ॥ १८* ॥ [१२]

॥ रयिष्ठम्॥ इन्द्रायसो। मपाता३वायि। औ३

हो३वा। वृत्रघ्ने परिषिच्यसा२३४५यि। वृत्रघ्ने पा। रि

षायिच्या३मायि। औ३हो३वा। नरेचदक्षिणावता२३

४५यि। नरेचदा। क्षिणावा३तायि। औ३हो३वा।

वीरायसदनासदा२३४५यि। वीरायसा। दनासा३दा

यि। औ३हो३वा॥(१) तꣳसखायाः। पुरूरुचाम्।

औ३हो३वा। वयंयूयञ्चसूरया२३४५ः। वयंयूयाम्।

चसूरा३याः। औ३हो३वा। अश्यामवाजगन्धिया२३

३५म्। अश्यामवा। जगान्धा३याम्। औ३हो३वा।

* ऋ० गा० १४प्र० २ख० ... ।

सनेमवाजपस्त्तिया२३४५म् । सनेमवा । जपास्ता३याम् । औ३हो ३ वा ॥(२) परित्यꣳहा । यंताꣳहा३रायिम् । औ३हो३वा । बभ्रुम्पुनन्तिवारेणा२३४५ । बभ्रुम्पुना । तिवारे३णा । औ३हो३वा । योदेवान्विश्वाꣳइत्परा२३ ४५यि । यांदेवान्वायि । श्वाआयित्पा३रायि । औ३ हो३वा । मदेनसहगच्छता२३४५यि । मदेनसा । ह गाच्छा३तायि । औ३हो३वा । औ३हो३वा । ई३या । ई३या३४ । हा । हाउवा३ । ऊ३२३४पा(३) ॥२०॥[१३]

॥ यज्ञायज्ञीयम् ॥ इन्द्राऽ५य । सो३मा३पाता वायि । वार्त्रघ्नपा । रो३पायिच्चा३सायि । नरेरच । दक्षार३यिणा । ऊम्मायि । वा३तायि । वायिरायस दनारमदाउ ॥(१) दायिताम् । सखायःपुरूरुचंवयंयू

* ऋ० मा० १४प्र० ३अ० २०सा० ।

याम्। चा३सूरा३याः। अश्वा२म। वाजा२३गा।

ऊम्मायि। धा३याम्। मानेमवाजपा२स्तियाउ ॥(२)

यास्या। रित्य॰हर्यत॰हरिम्बभ्रुम्पुना। ती३वा२३णा।

योदे२वान्। विश्वा॰२३आ। ऊम्मायि। पा३रायि।

मादेनसहगा२च्छताउ(३) ॥ २१* ॥ [१४]

॥ ऊर्द्ध्वत्वाष्ट्रीमाम ॥ परित्य॰हर्यत॰हरायिम्। बा

भ्रुम्पुना२। तिवा३४५। रे२३४णा। योदेवान्विश्वा॰

इत्परा२३४५यि। मदेनसा। हगच्छा२३ता३४३यि ॥(१)

दिद्यम्पञ्चस्वयशसमाम्। साखा२यो आ२। द्रिसा३४५।

हा॰३४ताम। प्रियमिन्द्रस्यकामिया२३४५म्। प्रस्नाप

या। तऊर्म्मा२३या३४३ः ॥(२) इन्द्रायसोमपातवायि।

वार्चा२र्षपा२। रिपा२३४यि। च्या२३४मे। नरेचद

* क० ग्रं० २-प्र० ९,ऋ० ६,१३।

चिणावता२३४५यि। वीरायसा। दनामा२३दा३४३यि। ओ२३४५ई। डा(३) ॥ ८* ॥ [१५]

॥ यज्ञायज्ञीयम् ॥ परा५यित्यम्। हा३र्यो३त७ हारायिम्। बाभ्रुम्पुना। तो३वारे३णा। योदे२वान्। विश्व७२३आ। इम्मायि। पा३रायि। मादेनसद्दगा २च्छताउ ॥(१) तायिद्दायिः। यम्यश्वस्वयशस७सखा योआ। द्रो३सा७हा३ताम्। प्रिया२मि। द्रस्या२३ का। इम्मायि। मा३याम्। प्रास्नापयन्तऊ२र्म्म याउ॥(२) यात्रायि। द्रायसोमपातवेवृत्रघ्नेपा। री३ षायिच्या३मायि। नरे२च। दत्ता२३यिणा। इम्मा यि। रा३तायि। वायिरायमदनार२सदाउ। वा३४५ (३)

॥ ८† ॥ [१६]

* ऊ० गा० १०प्र० १अ० ८मा०।

† ऊ० गा० १०प्र० १अ० ८मा०।

॥ आमितोत्तरम् ॥ परायित्यार२३ऽहर्य्यतऽहरिऽ
हाउ। बभ्रुम्पुनन्तिवारि २ ३ णा। योदेवाऽवा ३ यि।
श्वाऽऽइत्पार२३४रायि। मदेना३मा३। हगोर२३४वा।
क्वा५तोई५हायि(३) ॥ २* ॥ [१७]

॥ वाङ्निधनक्रौञ्चम् ॥ परायित्याऽहा३१२३४। र्यं
तम्। हरा३यिम्। बभ्रुम्पुना३१२३४। तिदा। रे
णा३। यादेवान्वा३१२३४यि। श्वाऽऽइत्। परा३यि।
मदेनामा३१२३। हगा५च्छताउ ॥(१) द्वियम्पाञ्चा३
१२३४। स्वय। शसा३म्। सखायोआ३१२३४। द्रि
स। हता३म। प्रियामायिन्द्रा३१२३४। स्यका। मि
या३म्। प्रस्तापाया ३ १२ ३। तऊ५र्म्मयाउ ॥(२)
इन्द्रायामो३१२३४। मपा। तवा३यि। वृत्रघ्नेपा३१२

* ऊ० गा० १७प्र० २ख० १सा०।

५ ३ २ २ १ २ ५र
३४। रिषि। च्यमा३यि। मरेचादा३१२३४। क्षिणा

३ २ २र १र २ ४
वता ३ यि। वीरायासा ३ १ २ ३। दना ५ सदा३।

वा(३) ॥ ४* ॥ [१८] १८

अथ तृचात्मके चतुर्थ-सूक्ते—

प्रथमा।

१ २ ३ २३ १ २ ३ २ ३ १ ३ १र २र
पवस्वसोममहेदक्षायाश्वोननिक्तोवाजीधनाय ॥ १† ॥

हे "सोम!" "अश्वो न" अश्वइव "निक्तः" वसतीवरीभिरद्भिर्निर्णिक्तः,‡ "वाजी" वेगवान् त्वं "महे" महते "दक्षाय" बलाय¶ "धनाय" धनार्थं "पवस्व" क्षर ॥

"महे"—"क्रत्वे"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ १ ३ १ २ १ २ ३ १ २ ३ २ ३ १ १
प्रतेसोतारोरसम्मदायपुनन्तिसोमम्महेद्युम्नाय ॥ २§ ॥

---

* ऊ० गा० २० प्र० २ ख० ४ सा०।

† ऋ० आ० ५, १, ५, ४ (१ भा० ८७४ पृ०) ऋ० वे० ९, ५, २०, १०।

‡ 'अश्वो न निक्तः—न-शब्द उपमार्थीयः अश्वइव स्नापितः'—इति वि०।

¶ 'दक्षाय—महते वा अथवा दक्षिणं सोमकर्मणि यजमानाय'—इति वि०।

§ ऋ० वे० ९, ५, २१, १।

"सोतारः" अभिषोतारः ऋत्विजः, हे सोम ! "ते" तव स्वभूतं "रसं"* "मदाय" मदार्थं "पुनन्ति" । तदेवोच्यते— "महे" महते "द्युम्नाय" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु॰ नै॰ ५,५ ) यास्कः ] अन्नाय यशसे वा पुनन्ति सोमं शोधयन्ति यद्वा, सोममभिषूयमाणं रसं पुनन्तीति एकवाक्यतया योजनीयम् ॥

"प्रते"-"तन्वे"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २ ३ १र २र
शिशुञ्जज्ञानꣳहरिम्मृजन्ति

३ १ ३ १ २ ३ २ ३ १ २
पवित्रेसोमन्देवेभ्यइन्दुम् ॥ ३† ॥ १९

"शिशुम्" एषां पुत्रभूतं‡ "जज्ञानं" जायमानं "हरिं" हरितवर्णम् "इन्दुं" दीप्तं सोमं "देवेभ्यः" "पवित्रे"¶ "मृजन्ति" ऋत्विजा मार्जयन्ति ॥ ३ ॥ १९

२र २ र २ र १
॥ विधर्म्मम् ॥ ओहोइवा । ओहोइवा । ओहो

* 'रसं—वीर्यम्'—इति वि॰ ।

† ऋ॰ वे॰ ७, ५, २१, २ ।

‡ 'शिशुं'—शंसनीयम्'—इति वि॰ ।

¶ 'पवित्रे'—पात्रमये'—इति वि॰ ।

रवा२३४ओहोइवा। पवस्वसोममहेदक्षाया २ ३ ४ ५।
अश्वोननिक्तोवा२जीधना२या२३४५। प्रतेसोतारोरसम्म
दाया२३४५। पुनन्तिसोमम्महेद्युम्नाया२३४५। शिशु
ञ्जज्ञान ँ हरिम्मृजन्ती२३४५। पवित्रेसोमदेवेभ्यइन्दू२३
४५म्॥(१) पवस्वसोमा२३४५। महेदक्षाया२ ३ ४ ५।
अश्वोननिक्ता१:। वाजीधना२या२३४५। प्रतेसोतारा
२३४५:। रसम्मदाया२३४५। पुनन्तिसोमा२३४५म्।
महेद्युम्नाया२३४५॥(२) शिशुञ्जज्ञाना२म्। हरिम्मृज
न्ती२३४५। पवित्रेसोमा२३४५म्। देवेभ्यइन्दू२३४५म्।
ओहो३वा। २। औहो२वा२३४ओहोइवा। ए३। विध
र्म्मा२३४५(३)॥ ४* ॥ [१] १९

---

* ऊ० गा० ६ प्र० १ अ० ४ मा०।

अथ त्र्यृचात्मके पञ्चम-सूक्ते—

प्रथमा ।

२ ३ २ ३ २ ३ १ २ ३ १र २र
उपोषुजातमप्तुरं गोभिर्भङ्गम्परिष्कृतम् ।

१ २ ३ १ २
इन्दुन्देवा अयासिषुः ॥ १* ॥

"जातम्" प्रादुर्भूतम् "अप्तुरं" वसतीवरीभिः प्रेरितम् "भङ्गं" शत्रूणां भञ्जकम् "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् "इन्दुं" सोमं "देवाः" इन्द्रादयः "उपायासिषुः" उपगच्छन्ति ॥ १ ॥

अथ द्वितीया ।

१र २र ३ १ २ ३ १ २
तमिद्वर्द्धन्तु नो गिरो वत्सं संशिश्वरीरिव ।

२र ३१ २ १ २
य इन्द्रस्य हृदंसनिः ॥ २† ॥

"यः" सोमः "इन्द्रस्य" "हृदंसनिः"‡ हृदयस्य सम्भक्ता भवति "तमित्" तमेव सोमं "नः" अस्माकं "गिरः" स्तुतिरूपा वाचः "संवर्द्धन्तु" संवर्द्धयन्तु । तत्र दृष्टान्तः—"वत्सं"

* ऋ० सं० ६, १, ६, १ । २भा० ... पृ० ।=इहैव ?, २, १८, १ (३भा०१६३ पृ०)
।= ऋ० वे० ७, १, २०, १ ।

† ऋ० वे० ७, १, २०, ४ ।

‡ 'हृदंसनिः' हृदिलाभः, सम्भजनः – इति वि० ।

वात्सं "शिश्वरीरिव" यथा शिश्वर्यौ वडपयस्कामातरौ वत्सं सम्यक् वर्द्धयन्ति तद्वदित्यर्थः ॥ २ ॥

अथ तृतीया।

१ २ ३ १२ २२ ३ १ २ ३ २ ३ १ १

अर्षा नः सोम शं गवे धुक्षस्व पिप्युषीमिषम्।

१ २ ३ १ १

वर्द्धा समुद्रमुक्थ ॥ ३* ॥ २०

हे सोम!" त्वं "नः" अस्माकं† "गवे" "शं" सुखम्‡ "अर्ष" चरण¶। अपिच "पिप्युषीम्" प्रवृद्धाम्§ "इषम्" अन्नं‖ "धुक्षस्व" प्रपूरय**। किञ्च हे "उक्थ्य" प्रशस्य! †† "समुद्रम्"‡‡ "वर्द्ध"¶¶ वर्द्धय ॥

"अर्षा नः"-"अर्षाणः"—इति पाठौ, "उक्थ्य"-"उक्थ्यम्"—इति च ॥ ३ ॥ २०

---

* ऋ० वे० ७, १, २०, ५।

† 'नः अस्मभ्यम्'—इति वि०।

‡ 'शंगवे—गवां सुखार्थम्'—इति वि०।

¶ 'अर्ष—गच्छस्व द्रोणकलशम्'—इति वि०। मूले त्वर्षेति दीर्घान्तः पाठः "ऋचोऽतस्तिङः (६, ३, १३५)"—इति तत्र दीर्घः।

§ 'पिप्युषीं—पान-समर्थाम्'—इति वि०।

‖ 'सोमलक्षण'—इति वि०।

** 'धुक्षस्व—दुग्धस्व'—इति वि०।

†† 'उक्था—उक्थानि सामानि'—इति वि०। एवञ्च "उक्था"—इति विवरण-पाठो गम्यते परं तत् प्रामादिकम् एव संहिता-पद-पुस्तकेषु तथा पाठादर्शनात्।

‡‡ 'समुद्रं—द्रोणकलशम्'—इति वि०।

¶¶ "वर्द्धा"—इति संहितायां दीर्घः।

१ र १ २र १

॥ अध्यम् ॥ उपोषुजा२तम्। अप्तुरोवा। गोभि

२ १ २ ३ २ १ २र १र

र्भङ्गाम्। परिष्कृताम्। इन्दुर्देवाअ। या२३। सि

२ १र १ र १

षाउवा। अ्रूधिया२ ॥(१) तमिद्वर्धा२न्तु। नोगिरो

२ १ २ १ २ ३र २ १ २ १

वा। वत्स९सं९शायि। स्वरीरिवा। यइन्द्रस्यव। दा

२ १र १ र

२३म्। सनाउवा। अ्रूधिया२ ॥(२) अर्षानःसो२म।

१ २ १ २ १ २ ३र २ १ र २

शङ्गवोवा। धुक्षस्वपायि। प्युषीमिषाम्। वर्धासमु

१ २ १र २

द्रम्। ऊ२३। क्थियाउवा। अ्रूधिया२। ए२३हिया

१

३४३। ओ२३४५ई। डा(३) ॥ ५* ॥ [१]

१ र २ र

॥ प्रतीचीनेडङ्काशीतम् ॥ उपोष्जातम्। अ२

१ २ १ ० ३र २

प्तुराम्। गोभिर्भङ्गम्। परायिष्कृता२३४म्। होहो

१ र २ २ १ ४ ५

यि। इन्दुर्देवाआ२या। सिषूः। औ२३होवा ॥(१)

१ २ १ २ १

तमिद्वर्द्धन्तु। नो२गिराः। वात्स९स९शि। स्वरायि

७ ३र २ १ २ १ १
रिवा२३४। हाहोयि। यद्दन्द्रस्याहा३द्धाम्। सनायिः।
४ ५ १ र २ र १
औ२३होवा ॥(२) अर्षानःसोम। शा२ङ्गवायि। धूक्ष
२ १ ७ ३र२ १ र
स्वपि। प्यु षायिमिषा२३४म्। हाहोयि। वर्द्धामम्
२ २ १ २ ४ ५ ४ ५
द्रा३म्। क्षियया। औ३होवा। ई डा(३)॥ ११* ॥[२]२०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य-
एकादशः खण्डः† ॥ ११ ॥

अथ द्वादश-खण्डः‡—

आघायेअग्निमिति तृचात्मकं प्रथमं सूक्तम्,
तत्र प्रथमा।

२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
आघाये अग्निमिन्धतेस्तृणन्तिबर्हिरानुषक्।
२ र २ ३ २ ३ १ २
येषामिन्द्रोयुवासखा॥ १¶ ॥

---

* ऊ० गा० १९प्र० १ख० ११सा०।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति वि०।

‡ 'इदानीमुक्थानि'-इति वि०।

¶ छ० आ० २, १, ४, ९ (१भा० ७२० पृ०। =ऋ० वे० ६, ३, ४२, १= य० वे० ७, ३२।

"ये" ऋषयः "आ घा" आभिमुख्येन खलु "अग्निम्" "इन्धते" दीपयन्ति, येषाञ्च "युवा" नित्य-तरुणः "इन्द्रः" "सखा" भवति, ते "आनुषक्" आनुपूर्व्येण "बर्हिः स्तृणन्ति" ॥ १ ॥

अथ द्वितीया ।

बृहन्निदिध्म एषाम्भूरि शस्तं* पृथुः स्वरुः ।

येषामिन्द्रो युवा सखा ॥ २† ॥

"एषाम्" ऋषीणाम्‡ "इध्मः"¶ "बृहत् इत्"§ महान् खलु, "भूरि" बहु "शस्तं" स्तोत्र-स्वरूपञ्च "पृथुः" महान् । सिद्धमन्यत् ॥ २ ॥

अथ तृतीया ।

अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः ।

येषामिन्द्रो युवा सखा ॥ ३ ‖ ॥ २१

---

* "शस्त"—इति क०-पाठः ।

† ऋ० वे० ६, ३, ४२, २ ।

‡ 'येषां—यजमानानाम्'—इति वि० ।

¶ 'इध्मः—इन्धनार्थीयः'—इति वि०

§ 'इत्—इति पदपूरणः'—इति वि० ।

‖ ऋ० वे० ६, ३, ४२, ३ ।

"युवा इन्द्रः येषां सखा" तेष्वन्तर्भूतः कश्चित् "अयुद्ध इत्" प्रागयोद्धैव सन् "युधावृतं" योद्धृभिर्भटैरावृतं शत्रुं "सत्वभिः" आत्मीयैर्बलैः "शूरः" सन् "आजति"* नमयति ॥ ३ ॥ २१

॥ ऐध्मवाहाद्यम् ॥ आघाये अग्निमिन्धानायि। स्तृण न्तिबर्हिरानुषाक् ॥(१) बृहन्तिदिधाआयिषाम्। भूरिश्र स्तमपृथुःस्वरुः ॥(२) अयुद्धइद्युधावार्त्तम। शूरआज तिसत्वभायिः। येषामिन्द्रोयुवाइत्सा। ऊवायि। ऊ वो२३४। वा। सा५खोई हायि(३) ॥ ६† ॥ [१] २१

अथ यएकइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

यएकइद्विदयतेवसुमर्त्तायदाशुषे।

ईशानोअप्रतिष्कुतइन्द्रोअङ्ग ॥ १‡ ॥

---

* 'अजगतिक्षेपणे'—इति वि०।

† ऊ० गा० ६प्र० १ख० ६सा०।

‡ ऋ० सा० ४, २, ५, ९ ( १भा० ७९८ पृ० )=ऋ० वे० १, ६, ९, २।

"यः" इन्द्रः "एकइत्" एकएव "दाशुषे" हविर्दत्तवते "मर्त्ताय" मनुष्याय यजमानाय "वसु" धनं "विदयते" विशेषेण ददाति "अङ्ग" [—इति चिप्र-नाम (निरु० नै० ५, १७)] "अप्रतिष्कुतः" परैरप्रतिशब्दितः प्रतिकूल-शब्द-रहित इत्यर्थः। एवम्भूतः स "इन्द्रः" चिप्रम् "ईशानः" सर्वस्य जगतः स्वामी भवति॥ १॥

अथ द्वितीया।

१ २ १ १ ३ १ २ १ २ १ २ ३ १ १
यश्चिद्धित्वाबहुभ्यआसुतावाꣳआविवासति।

३ १२ ३२ ३ १ २ १ २ ३ १
उग्रन्तत्पत्यतेशवइन्द्रोअङ्ग॥ २*॥

"बहुभ्यः" मनुष्येभ्यः सकाशात् "यः चित् हि"† यएव खलु यजमानः "सुतावान्" अभिषुत-सोम-युक्तः सन्। हे इन्द्र! "त्वा" त्वाम् "आ विवासति" परिचरति [विवासतिः परिचरणकर्म्मा (निघ० ३ ५, १०)] "तत्" तस्मै यजमानाय "उग्रम्" उद्गूर्णं "शवः" बलम् "इन्द्रः" "अङ्ग" ‡ चिप्रं "आ पत्यते" आपतयति प्रापयति॥ २॥

---

* ऋ० वे० १. ६, ६, ४।

† 'चित्-हि—इति पदपूरणौ'—इति वि०

‡ 'अङ्गशब्दः पूरकावौ'—इति वि०।

अथ तृतीया ।

२ १र २र २ १ २ ३ १र २र
कदामर्त्तमराधसम्पदा तुम्पमिवस्फुरत् ।
२ १ २ ३ २ ३ १ २ ३ ५
कदानःसुश्रवद्गिरइन्द्रोअङ्ग ॥ ३* ॥ २२

"[illegible]" हविर्लक्षणेन राधसा धनेन रहितमयष्टार-मि[illegible] । एवंविधं "मर्त्तं" मनुष्यम् "इन्द्रः" "पदा" पादेन "तुम्पमिव" अहिच्छत्रमिव‡ "कदा" वा "स्फुरत्" स्फुरिष्यति बधिष्यति ? यथा अहिच्छत्रं मण्डलाकारेण शयानं कश्चिदना-यासेन हन्ति एवमिन्द्रोऽपि कदास्मच्छत्रून् हनिष्यतीत्यर्थः [ स्फुरति-स्फुलतीति बध-कर्म्मसु ( निघ० २,१८,१५-१६ पठि-तत्वात् ) ]। "नः" अस्माकं यष्टॄणां "गिरः" स्तुति-लक्षणा वाचः "इन्द्रः" "कदा" कस्मिन् काले "अङ्ग" चिप्रं "शुश्रावत्" श्रोष्य-तीति वितर्क्यते [ अत्र निरुक्तम्—"तुम्पमहिच्छत्रकम्भवति यत् तुम्पते * * * कदा मर्त्तमनाराधयन्तं पादेन तुम्पमिवावस्फुरि-ष्यति कदा नः श्रोष्यति गिर इन्द्रो अङ्ग ( निरु० नै० ५, १७ )" -इति चिप्र-नामैतत् ॥ ३ ॥ २२

१र २ २ १
॥ त्रैककुभम् ॥ यएकइद्विवायाऽ३तायि । वासुमर्त्ता
२ २ १ ३ ५ १ २र २ १ २
या३दा । ऊंम् । ष्टू२३४षाम् । आयिशानोअप्रति

* ऋ० वे० १, ६, ६, ३ ।

† 'यस्य यज्ञार्थं राधसन्धनं न भवति, सोऽराधः'—इति वि० ।

‡ 'तुम्पम् प्रर्णपत्रीयं दुर्बलं मत, यथा मर्दन्ति बलिनः'—इति वि० ।

१ २र २र १ १ ३ ५
च्कुतः। आयिया। नोअप्रतायि। च्कू२३४ताः ॥(१)

२ र २ १ र र २ २ १
यश्चिद्धित्वा। बहुभ्या३आ। सुतावा७आवी३वा। ऊम्।

३ ५ २ १ २ र १ २ १ २ ३ २ १
सा२३४तायि। उग्रन्तत्यत्यतेश्रवः। ऊग्रम्। तत्यत्यता

३ ५ २ र र २ १र
यि। श्रा२३४वाः ॥(२) कदामर्त्तमराधा३साम्। पदा

२ २ १ ३ ५ ११र २
तुम्पामी३वा। ऊम्। स्फू२३४रात्। कदानःशुश्रव

१ १ २र ३ २ १ ३ ५ १
द्गिरः। कादा। नःशुश्रवात्। गा२३४यिराः: आ

२र १ ३ ५र र ३
यिन्द्रोअ। गा२। या२३४औहोवा। ई२३४

५
न्द्राः(३) ॥ ७* ॥ [१] २२

अथ गायन्तीति-तृचात्मकं सूक्तं तृतीयम्†,

तत्र प्रथमा।

१ २ ३ १र २र ४ ३ २ १ २
गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः।

३ १ २ ३ १ २ १ २
ब्रह्माणस्त्वाशतक्रतउद्वंशमिवयेमिरे॥ १‡ ॥

* ऊ० गा० ६प्र० १ख० ७सा०।

† 'तृतीयमुक्थम्'—इति वि०।

‡ ऋ० आ० ४, २, १, १ (१भा० ६९४ पृ०) = ऋ० वे० १, १, १०, १।

हे "शतक्रतो" बहुकर्मन् बहुयज्ञ वा इन्द्र! "त्वा" त्वाम् "गायत्रिणः" उद्गातारः "गायन्ति" स्तुवन्ति; "अर्किणः" अर्चन-हेतु-मन्त्र-युक्ता होतारः "अर्कम्" अर्चनीयम् इन्द्रम् "अर्चन्ति" स्तोत्र-शस्त्र-गतैर्मन्त्रैः प्रशंसन्ति; "ब्रह्माणः" ब्रह्म-प्रभृतयः इतरे ब्राह्मणाः "त्वाम्" "उद्येमिरे" उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः—"वंशमिव" यथा वंशाग्रे नृत्यन्तः शिल्पिनः शीढं वंशमुन्नतिं कुर्वन्ति, यथा वा सन्मार्गवर्त्तिनः स्वकीयं कुल-मुन्नतं कुर्वन्ति, तद्वत्। एतामृचं यास्क एवं व्याचष्टे—"गायन्ति त्वा गायत्रिणः प्रार्चन्ति ते ऽर्कमर्किणो ब्रह्माणस्त्वा शतक्रत उद्ये-मिरे वंशमिव। वंशो वनशयो भवति वनच्छ्रयतइति वेति" (निरु० नै० ५,५)। अर्कः च्दश्च बहुधा व्याचष्टे—"अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदनेनार्चन्त्यर्कमन्नं भवत्य-र्चति भूतान्यर्को वृक्षो भवति संवृतः कटुकिम्ना (निरु० नै० ५,४"—इति ॥ १ ॥

अथ द्वितीया।

२उ ३ १र २र३ १र १र २ १ ०
यत्सानोः सान्वारुहोभूर्यस्पष्टकर्त्वम्।
२उ ३ १ १ ३ १ २ ३ १ २
तदिन्द्रोअर्थञ्चेततियूथेनवृष्णिरेजति ॥ २* ॥

"यद्" यदा "सानोः सानु" यजमानः सानोः सानु, सोम-वल्ली-समिदाद्याहरणाय पर्वतप्रदेशम् "आरुहः" आरुढ़वान्।

---

* ऋ० वे० १, १, १८, २।

तथा "भूरि" बहुकर्म यागरूपम् "असृष्ट" सृष्टवान् उपक्रान्तवानित्यर्थः। "तत्" तदानीम् "इन्द्रः" "अर्थं" यजमानस्य प्रयोजनं "चेतति" जानाति। ज्ञात्वा च "वृष्णिः" कामानां वर्षिता सन् "यूथेन" मरुद्गणेन सह* "एजति" कम्पते,† अस्य स्थानाद् यज्ञभूमिमागन्तुमित्यर्थः॥

"सानोःसान्वारुहः"-"सानोः सानुमारुहत्"—इति पाठौ॥२॥

अथ तृतीया।

१ २उ  १ २ ३ १ ३ १२  २ १
युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा।
१ २  ३ १र ०र
अथानइन्द्रसोमपागिरामुपश्रुतिंचर॥ ३‡ ॥ २७

हे "सोमपाः" सोम-पान-युक्तेन्द्र! "हरी" त्वदीयावश्वौ "युङ्क्ष्व¶ हि"§ सर्वथा संयोजय। "अथ" अनन्तरं "नः" अस्मदीयानां "गिरां" स्तुतीनाम् "उपश्रुतिं" समीपे श्रवणमुद्दिश्य "चर" तत्प्रदेशे गच्छ। कीदृशौ हरी? "केशिना" स्कन्ध-प्रदेशे लम्बमान-केश-युक्तौ, "वृषणा" सेचन-समर्थौ युवानौ,

---

* 'यूथेन—देवसङ्घातेन'—इति वि०।

† 'एजति—आगच्छति'—इति वि०।

‡ ऋ० वे० १, १, १९, ३=ऋ० वे० ८, ३४।

¶ संहितायां "युङ्क्ष्वा"—इति दीर्घान्तः तत्र "द्व्यचः (६,३,१३५)"—इति दीर्घः।

§ 'हीति पदपूरणः'—इति वि०

"कक्ष्यप्राः" अश्वस्योदर-बन्धन-रज्जुः कक्ष्याः,तस्य पूरकौ पुष्टाङ्गा-वित्यर्थः ॥

"युक्ष्वा"-"युक्ष्वा"—इति पाठौ ॥

युङ्क्ष्वा—सति शिष्टत्वेन प्रत्यय-स्वरः (३, १, ३) शिष्यते, "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घत्वम् । केशिना—प्रशस्ताः केशाः अनयोः सन्तीति मत्वर्थीय इनि-प्रत्ययः, "सुपांसुलुगित्यादिना (७, १, ३९) द्विवचनस्या-कारादेशः । वृषणा—वृषु मृषु सेचने (भ्वा० प०) "कनि-न्यु-वृषि-तक्षि-राजि-धन्वि-द्यु-प्रति-दिवः"—इति कनिन्,"ञ्नि-त्यादिर्नित्यम् (६, १, १९७)"—इत्याद्युदात्तः, "वाषपूर्वस्य निगमे (६, ४, ९)"—इति उपधायाः पक्षे दीर्घाभावः, पूर्व-वदाकारः (७, १, ३९)। कक्ष्यप्राः—कक्ष्ययोर्भवं कक्ष्यं सूत्रं तत् प्रातः पूरयतः पुष्टत्वादिति कक्ष्यप्रौ, प्रा पूरणे (अदा० प०), "आतोऽनुपसर्गे (३, २, ३)"—क-प्रत्ययः, कृदुत्तरपद-प्रकृति स्वरेणान्तोदात्तत्वम् (६,२,१३९)"—आकारः पूर्ववत् (७, १, ३९)। अथा—"निपातस्य च (६, ३, १३६)"—इति संहि-तायां दीर्घः। नः—"अनुदात्तं सर्वमपादादौ (८, १, १८)" —इत्यनुवृत्तौ "बहुवचनस्य वस्नसौ (८, १, २१)"—इति नसादेशोऽनुदात्तः। इन्द्र!—सोमपा!—इत्युभौ "आमन्त्रि-तस्य च (८, १, १९)"—इति सर्वानुदात्तौ। गिरां—"सा-

वेकाचस्तृतीयादिर्विभक्तिः ( ६, १, १६८ )"—इति विभक्तिक-
दात्ता। उप—शब्दो निपातत्वादाद्युदात्तः ( फि० ४, १२ ),
श्रुति-शब्देन प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तादौ-
चनितिकृत्यचौ इति तु वर्जिततादि-परत्वात् गतेः प्रकृतिस्वरः
पर-निपातः॥ ३ ॥ २३

१र २ र र १ १ १
॥ उद्वꣳशीयम्॥ गायन्तित्वागायत्रिणाः। अर्च्च
२ १र
न्त्यर्क्कमर्क्का२३यिणाः। ब्रह्माणस्त्वा२हो१यि। शतक्का२
२ १ १ २ २ ३ ४
३ताउ। उद्वꣳशमिवया१यिमी३रे। उद्वꣳशा२३४मी।
१ ऽ २ २ १ १ १ र
वाया३उवा३। उप्। माऽयिरो३५हायि॥(१) यत्सा
१र र र २ १ र २ १
नोत्सान्वारुहआ। भूर्य्यस्पष्टकर्त्तू२३वाम्। तदिन्द्रा
र १ र १र २ २
२हो१यि। अर्थंचेता२३तायि। यथेनवृष्णिस१यिजा३
१ र र ३ ५ १ ऽ २ २ १
तायि। यूथेना२३४वृ। ष्णायिरा३उवा३। उप्। जा
२ २ १र २र १ २र १ २र १ र
ऽरतो३५हायिः॥(२) युक्ष्वाहिकेशिनाहरीआ। वृषणा
२ १ र र २
कक्षिया२३प्रा। अथानो२हो१यि। इन्द्रोसोमा२३पाः।

१र २ २ १ १ १ ५ १ २
गिरामुपश्रुता१यिच्चा३रा। गिरामू२३४पा। सूना३उ
१ १ १ २
वा३। उप्। चा२रो३५हायि(३)॥ ८* ॥ [१]

५र ३ १ १
॥ हिरण्यस्तत्त्वाष्ट्रीसाम ॥ गाय। तित्वा३। हा३
१ ३र २ १ ५ ३ २ १ २
हा। गायत्रायिणा२३४ः। अर्च। तिया३। हा३हा।
३ २ १ ५र ३ १ १ २
कमर्क्कायिणा२ ३ ४ः। ब्रह्मा। णस्त्वा३। हा३हायि।
३ १ १ ५ ३ १ १ २ १
शतक्राता२३४उ। उद्व। शमा३यि। हा३हायि। व
२ १ ५ ५ ५ ५र ३र
या३हो२३४। वा। मा५यिरो६हायि ॥(१) यत्सा। नो
२ २ २ ३ २र १ ५र ३ १
स्सा३। हा३हा। नुवारुहा२३४ः। भूरि। अस्या३।
२ २ ३ २ १ ५ ३र १ १
हा३हा। इकर्त्तवा२३४म्। तदि। द्रोश्रा३। हा
२ ३ २र १ ५र ३ १ १ २
३हा। यञ्चेतात२३४यि। यूथे। नवा३। हा३हा।
३ २ १ ५ ४ ५ ५र
षिणा३हो२३४। वा। जा५तो६हायि॥(२) युक्ष्वा।

* ऊ० गा० ६प्र० १अ० ८सा०।

३ १ २ २ ३ १२ १ ५ १२
हिकाइ। हाइहायि। ग्निनाहारा२३४यि। वृष। णा
२ २ २ १ ५२ ३ २
काइ। हाइहा। त्नियाप्रा२ ३ ४। अथा। नआइ।
२ २ ३ २२ १ ५२ ३ २ २
हाइहायि। द्रसोमापा२३४ः। गिराम्। उपाइ। हा
२ ३ २ १ ५ ४ ५
इहायि। श्रुताइयिंचोर ३ ४। वा। चा५रो६हा
यि(३) ॥ १* ॥ [२]

॥ गौरीवितम् ॥ ५२ ३ २ ४२ ५ १
गाय। तित्वाइ। गायत्रिणा। अ
१ २ २ ४
र्चन्त्यर्कमर्किणा२३ः। ब्रह्माणस्त्वा३१२३। शता५क्रता
१ २ ४ ५ ४ ५
उ। ऊद्वंशमा३१२३यि। वयोवा। मा५यिरो६हा
४ ५ २२ २ ४ २ ५ १२
यि ॥(१) यत्सा। नोःसाइ। नुवारुहाः। भूर्य्यस्पष्ट
१ २ २ ४
कर्त्तुवा२३म्। तादिन्द्रोआ३ १ २ ३। यश्चे५ततायि।
१२२ २ ४ ५ ४ ५ ५ २
यूथेनवा३१२३। ष्णिरोवा। जा५तो६हायि॥(२) युक्ष्वा।
३ १ ४ २ ५ १ २ १
हिकाइयि। ग्निनाहरायि। वृषणाकत्नियप्रा२३। आ

* ऊ० गी० २३प्र० १ख० १सा०।

२ २ ४ १ २ २
थानया३१२३यि । इसो५मपाः । गायिरामुपा३१२३ ।
४ ५ ४ ५
श्रुतोवा । वा५रोई३यि(३) ॥ ५* ॥ [३] २३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य
द्वादशः खण्डः† ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ५ ॥

॥ इति पञ्चमः प्रपाठकः ॥ ५ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे दशमोऽध्यायः‡ ॥ १० ॥

---

* ऊ० गा० १३प्र० १ख० ५सा० ।

† 'द्वादशखण्डस्य नवममन्त्र षट्चत्वारिंशत् स्तोमिकम्—इति वि० ।

‡ 'पञ्चमः प्रपाठकः समाप्तः' इति वि०, मूल-पदपन्थादिसम्मतश्चैतत् ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ११ ॥

## ॥ अथैकादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथम-खण्डे—

सुषमिद्धइति चतुर्ऋचं प्रथमं सूक्तम्,†

तत्र प्रथमा ।

१ २     ३ १ २ ३ १   २ ३ १ २
सुषमिद्धो‡नआवहदेवाँ अग्नेहविष्मते ।

१ २     ३ १ २
होतःपावकयक्षिच ॥ १¶ ॥

हे "अग्ने !" "सुसमिद्धः" § एतन्नामकस्त्वं "नः" अस्म-

---

* इदानीं इध्ममनवरत्याग्निष्टोमः । * * * । तस्य वक्ष्यमाणं द्वितीय-प्रभृतीनां पञ्चानामक्राणामनुरूपं * * * मवचं सर्वं मधस्तादधीतमात्,—इति वि० ।

† इदानीं सुषमिद्धो नआवह इति इत्यभ्याख्यानि भवन्ति—इति वि० ।

‡ "सुसमिद्धो"—इति ऋ०-पाठः ।

¶ ऋ० वे० १, १, २४, १ ।

§ 'सुष्ठु समिद्धः सुसमिद्धः'—इति वि० । ऋग्वेदीय-पाठ मवलम्ब्यैवाच प्रतीक-ग्रहणं कृतं सायणेन सुषमिद्ध इति, मूलपाठस्तु मूर्द्धन्य-मध्यः; सुषमिद्ध इति "पूर्वपदात् (८, ३, १०६ )"—इति च तत्र सूत्रम् ।

दीयाय"* "हविष्मते" यजमानाय तदनुग्रहार्थं "देवान्" "आवह"। हे "पावक" शोधक! "होतः" होमनिष्पादकाग्ने! "यक्षि च" यज च†॥ [सुसमिद्धः—समः क्रियाविशेषणत्वेन गति-सञ्ज्ञकत्वात् प्रादिसमासः, शोभन-वाचिनः सु-शब्दस्य तु "वि-शेषणं विशेष्येण बहुलम् (२, १, ५७)"—इति समिद्ध-पदेन कर्मधारयः समासः, सु-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः, "कर्मधारयेऽनिष्ठा (६,२,४६)"—इति पूर्वपदप्रकृतिस्वरत्वं, क्रि-या-विशेषणत्वे हि सु-शब्दस्य गतित्वात् प्रादिसमासे "गतिरनन्तरः (६, २, ४९)" इति "समो यदुत्तर इति समो यदुत्तरत्वं तदेव कृदुत्तर-प्रकृति-स्वरत्वेन (६, २, १३९) स्यास्यतीति सु-शब्दो-ऽनुदात्तः स्यात्। देवाँ अग्ने—"दीर्घादटि समानपादे (८, ३, ९)"—इति नकारस्य रुत्वम्, "अत्रानुनासिकः पूर्वस्य तु वा (८, ३, २)"—"आतोऽटि नित्यम् (८, ३, ३)"—इत्यनु-नासिकः। हविष्मते—हविरस्यास्तीति मतुप्, "तसौ मत्वर्थे (१,४,१९)"—इति भत्वेन पदत्व-बाधितत्वात् रुत्वम्। होतः—पावक—एतच्छब्दयोरामन्त्रितयोः पृथक् पृथगेव क्रियान्वये परस्पर-सामर्थ्यात् पराङ्गवद्भावाभावान्न तन्निबन्धनमैकस्वर्यम् नच द्वितीयस्यामन्त्रितस्याष्टमिक-(८, १, १९)—निघातेनैकस्वर्यम् "आमन्त्रितं पूर्वमविद्यमानवत् (८, १, ७२)"—इति पूर्वस्या-विद्यमानत्वेन पदादपरत्वात् पादादित्वाच्च परस्य सामानाधि-करण्येऽपि होतरित्यस्य विशेषत्वे समानमेवाविद्यमानवत्त्वम्,

* 'नः—अस्मभ्यम्'—इति वि०।

† 'यक्षि च—यज भक्षणे, देवानावह भक्षय च'—इति वि०।

अतएवाविद्यमानवत्त्वात् सामर्थ्येऽपि न पराङ्गवद्भाव,—इति नैक-स्वर्य-सिद्धिः, अतो होतरिति विशेष्यम्; अतः पुनातीति पावकः—इत्यवयव-प्रसिद्ध-स्वीकारेण विशेषणत्वाद्धोतरिति विशेष्यम्, तच्च सामान्यवचनम् इति "नामन्त्रिते समानाधिकरणे (८, १, ७३)"—इत्यविद्यमानवत्त्व-प्रतिषेधात् पदात्परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिक-निघातेन वा पराङ्गवद्भावे सति शेष-निघातेन वा सर्वानुदात्तत्व-सिद्धिः। यक्षि—यजेर्लोपः सिपि बहुलञ्छन्दसि (२, ४,७३)"—इति शपो लुक्, व्रश्चादिना (८, २, ३६) षत्वम्. "षढोः कःसि (८, २, ४१)"—इति कत्वम्, सेर्हिरादेशश्छान्दसत्वान्न भवति, सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वरएव (६, १, १६२) शिष्यते, न च "तिङतिङः (८, १,२८)"—इति निघातः पूर्वस्य पावकेत्यामन्त्रितस्य विद्यमानवत्त्वेन पदादपरत्वात्, अतएव तस्याव्यवधायकत्वे होतरित्यपेक्ष्य निघातः स्यादितिचेत् न, यक्षि-पदापेक्षया होतरित्यस्यापि पूर्वत्वेनाविद्यमानत्वात्; ननु "नामन्त्रिते समानाधिकरणे (८,१, ७३)"—इति तस्य नित्यमविद्यमानत्त्वम्, न च पावक-पदस्याविद्यमानवत्त्वेन समानाधिकरण-परत्वाभावः; यक्षि-पदस्यैव हि कार्यं प्रति पावक-पदं पूर्वत्वादविद्यमानवत् स्यात्, होतः-पदस्य विद्यमानवत्त्व-प्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमान वत्त्व-प्रतिषेधः, अतस्तस्याविद्यमा... त्वात्तदपेक्षया यक्षीति निघातः प्राप्नोत्येव? सत्यम्;——अत्र यक्षीत्यस्य च-शब्द-परत्वात् "चादिषु च (८, १, ५८)"—इति निघात-प्रतिषेधो भविष्यतीत्यदोषः ]॥ १॥

अथ द्वितीया।

१ २　　　　　२ १ २ १ २

मधुमन्तन्तनूनपाद्यज्ञन्देवेषुनःकवे।

२ १ २　३ १ २

अद्याकृणुह्यूतये॥ २* ॥

हे "कवे" मेधाविन्नग्ने! "तनूनपात्"†—एतन्नामकस्त्वम् "अद्य" अस्मिन् "नः" अस्मदीयं "मधुमन्तं" रसवन्तं "यज्ञं" यजनीयं हविः "देवेषु" "कृणुहि" कुरु प्रापयेत्यर्थः। किमर्थम्? "ऊतये" अस्मद्रक्षणाय॥

"ऊतये"-"वीतये"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ १　२　२ १ २ १ २ १　२ १र　२र

नराशꣳसमिहप्रियमस्मिन्यज्ञउपह्वये।

१ २　　　२ १ २

मधुजिह्वꣳहविष्कृतम्॥ ३‡ ॥

"इह" देवयजन-देशे "अस्मिन्" वर्त्तमाने यज्ञे "नराशं-

---

* ऋ०वे० १, १, २४, १।

† "तनूनपादाज्यं भवति नपादित्यनन्तरायाः प्रजाया नामधेयं निर्णततमा भवति गौरत्र तनूरुच्यते तता अस्यां भोगास्तस्याः पयो जायते पयस आज्यं जायते। अग्निरिति शाकपूणिरापोऽत्र तन्व उच्यन्ते तता अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्त ओषधिवनस्पतिभ्य एष जायते। * * *।"—इति निरु० दै० २, ५-६।

‡ ऋ० वे० १, १, २४, ३।

सम्"*—एतन्नामकमग्निम् "उपह्वये" आह्वयामि। कीदृशम्? "प्रियं" देवानां प्रीति-हेतुं, "मधुजिह्वं" मधुर-भाषि-जिह्वोपेतं माधुर्य्य-रसास्वादक-जिह्वोपेतं वा, "हविष्कृतं" हविषो निष्पादकम् ॥ ३ ॥

अथ चतुर्थी।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र
अग्नेसुखतमेरथेदेवाꣳईडितआवह।

२ ३ २ ३ १ २
असिहोतामनुर्हितः ॥ ४† ॥ १

इदं-शब्दाभिधेय हे "अग्ने!" "ईडितः" अस्माभिः स्तुतः सन्‡ "सुखतमे" अतिशयेन सुख-हेतौ कस्मिंश्चित् "रथे" "देवान्" स्थापयित्वा कर्म-भूमौ "आ वह" [ इद्-शब्दाभिधेयत्वमत्र सूचयितुमीडित इति विशेषणम् ]। "मनुर्हितः" 'मनुना' मन्त्रेन मनुष्येण वा यजमानादि-रूपेण 'हितः' अत्र स्थापितः त्वं "होता" देवानामाह्वातासि ॥ ४ ॥ १

---

* "नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्ति। अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति"—इत्यादि निरु० दै० २, ६-७।

† ऋ० वे० १, १, २४, ४।

‡ 'ईडितः—प्रेषितः'—इति वि०।

अथ यदद्येति तृचात्मकं द्वितीयं सूक्तम्,*

तत्र प्रथमा।

२ ३ २ ३ ३ २ १ १ २ ३ १ २ ३ २
यदद्यसूरउदितेनागामित्रोअर्यमा।
३ १ २ ३ १ २ २ २
सुवातिसविताभगः॥ १†॥

"यत्" धनं "नः" अस्माकम् अपेक्षितं "तत्" "अद्य" अस्मिन् काले "सूरे" "उदिते" सति प्रातःसमये "अनागाः" पाप-हन्ता, "मित्रः", "अर्यमा", "सविता", "भगः" च—एतत् प्रत्येकं "सुवाति" प्रेरयत् [अथवा अनागा मित्री अर्यमा भवतु, तदीप्सितं भगो भजनीयः सविता सुवाति प्रेरयतु]॥ १॥

अथ द्वितीया।

३ १ २ ३ २ ३ ३ १ २ २ २
सुप्रावीरस्तुसक्षयःप्रनुयामन्त्सुदानवः।
२ ३ १ २ ३ १ २
येनोअंहोतिपिप्रति॥ २‡॥

"सक्षयः" स-निवासः "सुप्रावीरस्तु" सुष्ठु प्रकर्षेण रक्षितास्तु [प्र-शब्द आदरार्थः]। "प्र" प्रकर्षेण "नु" क्षिप्रं भवत्विति शेषः। कदा? इत्युच्यते— हे "सुदानवः" सुदानाः! युष्माकं

---

* 'मैत्रावरुणमाज्यम्'—इति वि०।

† ऋ० वे० ५, ५. ८, ४।

‡ ऋ० वे० ५, ५. ८. ५।

"यामन्" यामनि गमने सति, कीदृशानां गमने ? ये यूयमा-त्मस्य "नः" अस्माकम् "अंहः" पापम् "अति पिप्रति" अतिपारयथ, तेषां गमनइति ॥ २ ॥

अथ तृतीया ।

३१२ ३ १ २ ३ १ २   ३ २ ३ १
उतस्वराजोअदितिरदब्धस्यव्रतस्यये ।

३ १र   २र
महोराजानईशते ॥ ३ * ॥ २

"उत" अपिच "ये" मित्रादयस्त्रयः "स्वराजः" सर्वस्य स्वामिनः "अदितिः"† येषाञ्च माता, सन्ति ; ते "अदब्धस्य" अहिंसितस्य रक्षकस्य "महः" महतः‡ "व्रतस्य" अस्य कर्मणः¶ "राजानः" स्वामिनः, ते "ईशते" समर्था भवन्ति अभिमतं दातुमिति शेषः । [ अथवैवं योज्यम्—'ये' मित्रादयोऽदितिश्च 'अदब्धस्य' व्रतस्य 'स्वराजः' ईश्वरास्ते "महः" महतः अस्मदभिमतधनस्य "राजानः" स्वामिनः सन्तः "ईशते" अस्मभ्यं दातुम् ॥ ३ ॥ २

* ऋ० वे० ४, ५, ८, ३ ।

† 'अदितिः'—अदीनत्व-सम्पन्नाः' इति वि० ।

‡ 'महः'—अभिमान-सम्पन्नाः'—इति वि० ।

¶ 'व्रतस्य'—कर्मणः अन्नस्य वा'—इति वि० ।

उत्त्वेति तृचात्मकं प्रथमं सूक्तम्,*

तत्र प्रथमा ।

१ २ १ ? २ १ २र २र
उत्त्वामन्दन्तु सोमाः कृणुष्वराधो अद्रिवः ।
? २ ३ ? २
अवब्रह्मद्विषोजहि ॥ १ † ॥

हे इन्द्र ! "त्वा" त्वां "सोमाः" "उत्" उत्कृष्टं "मन्दन्तु" मादयन्तु । हे "अद्रिवः !" वज्रवन्निन्द्र ! त्वं "राधः" अन्नं "कृणुष्व" अस्मभ्यं कुरु । किञ्च "ब्रह्मद्विषः" ब्राह्मण-द्वेष्टॄन् "अव जहि" ॥

"सोमाः"–"सोम।"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ २ ३ २ ३ २ ३ १ २ ३ १ २
पदापणीनराधसोनिबाधस्वमहाᳪअसि ।
१ ३ ३ २ २ १ २
नहित्वाकश्चनप्रति ॥ २ ‡ ॥

"पणीन्" लुब्धान्¶ "अराधसः" यष्टव्य-धन-रहितान् केवल-धनान् "पदा" पादेनातिक्रम्य "निबाधस्व" नितरां

---

* 'ऐन्द्रसाम्यम्'—इति वि० ।

† ऋ० आ० ३, १, १, १ ( १ भा० ४२१४० ) = ऋ० वे० ६, ४, ४३, १ ।

‡ ऋ० वे० ६, ४, ४३, २ ।

¶ 'पणीन्—पणास्वभावान्'—इति वि० ।

बाधस्व । हे इन्द्र ! त्वं "महान् असि" "त्वा" त्वया "प्रति" प्रतिनिधि-सदृशः "अश्वन" कश्चिदपि देवोऽसुरो मनुष्यो वा "न हि" नास्ति खलु ॥

"पणीनराधमः"-"पणीरराधमः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् ।
त्वꣳ राजा जनानाम् ॥ ३ * ॥ ३

हे "इन्द्र !" "त्वं" "सुतानाम्" अभिषुतानां सोमानाम् "ईशिषे" ईश्वरो भवसि, तथा "त्वम्" "असुतानाम्" वर्त्तमानानाञ्च ईशिषे, किञ्च "त्वं" सर्वेषां "जनानां" "राजा" भवसि ॥ ३ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य प्रथमः खण्डः† ॥ १ ॥

---

* ऋ० सं० ६, ४, ४३, ३ ।

† 'इन्द्राग्न्यागतमित्यच्छावाकसाम'—इति वि० अतः परं व्यवहार्थमिति शेषः । 'उक्तं प्रातःसवनम्'—इति च वि० ।

अथ द्वितीय-खण्डे*—

आजागृविरिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१र २र३ १ २ ३ १ २ ३ १र
आजागृर्विर्विप्रऋतम्मतीना२ं
२र ३ १ २ ३ १ २
सोमःपुनानोअसदच्चमूषु।
१ २ ३ १ २ ३ २ ३ १ २
सपन्तियम्मिथुनासोनिकामा
३ १ २ ३ १ २ ३ १ २
अध्वर्यवोरथिरासःसुहस्ताः॥ १ †॥

"जागृविः" जागरणशीलः "ऋतम्" ऋतनां सत्य-भूतानां "मतीनां" स्तुतीनां "विप्रः" ज्ञाता स "सोमः" "पुनानः" पूयमानः सन् "चमूषु" चमसेषु "आ सदत्" आसीदति, "मिथुनासः" परस्परं सङ्गताः, "निकामाः" नितरां कामयमानाः "रथिरासः" यज्ञ-नेतारः "सुहस्ताः" कल्याण-पाणयः "अध्वर्यवः" पवित्रेण "यं" सोमं "सपन्ति" स्पृशन्ति [सप समवाये (भ्वा० प०)। 'सपतिः स्पृशति-कर्म्मा'—इति नैरुक्ताः‡]॥

"ऋतम्"-"ऋता"—इति पाठौ॥ १॥

* 'इदानीं माध्यन्दिनं सवनमभिधीयते'—इति वि०।

† ऋ० वे० ७, ४, १८, २।

‡ 'सपति'—इति परिचरण कर्मसु (३, ५) आर्च्चति-कर्मसु च (३, १४) इत्यत्र निघण्टौ।

अथ द्वितीया।

१ १ २ २उ ३ २ ३ १ २ ३
सपुनानउपसूरेदधान
१२ ३१२ ३ १ २ ३ १२ ३१
ओभेअप्रारोदसीवीषआवः।
३ २ ३ १ २ ३ १ २ ३ १
प्रियाचिद्यस्यप्रियसासऊती
३ १२ ३१२ ३ २ ३१२ ३१
सतोधनङ्कारिणेनप्रयꣳसत्॥ २ *॥

"पुनानः" पूयमानः "दधानः" यज्ञादि-कर्म-धारकः "सः" सोमः "सूरे" प्रेरके इन्द्रे "उप" गच्छति। किञ्च "उभे रोदसी" द्यावा-पृथिव्यौ "आ अप्राः" स्व-महिम्ना आ पूरयति। तथा "सोमः" "आवः" स्व-तेजसा मां विवृणोति [वृणोतेः "मन्त्रे घसेति (२, ४, ८१) चेर्लुक्, "छन्दस्यपि दृश्यते (६, ४, ७३)" —इत्यड़ागमः। "पूर्वपदात् (८, ३, १०६)"—इति स-इत्यस्य सांहितिकं षत्वम्] "प्रिया" [षष्ठ्या आकारः (७, १, ३९)] प्रियस्य "यस्य" "सतः" विद्यमानस्य सोमस्य [यद्वा, 'प्रिया' प्रियाणि प्रयच्छतः सोमस्य] "प्रियमासः" अत्यन्तं प्रियतमा धाराः "ऊती" ऊत्यै रक्षणाय भवन्ति "सः" सोमः "नः" अस्मभ्यम् "धनं" "प्रयंसत्" प्रयच्छतु [यच्छतेर्लेटि सिप्यड़ागमः]। तत्र दृष्टान्तः—"कारिणे न" यथा कारिणे भृतकाय भृतिं प्रयच्छति तद्वत्।

* ऋ० सं० ७, ४, १८, २।

"दधानओभे"-"दधानोभे"—इति पाठौ, "सतोधनं"-"सतू-धनम्"—इति च ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २ ३
सवर्द्धितावर्द्धनःपूयमानः

१ २ ३ २ ३ २ ३ १ २
सोमोमीढ्वाᳮअभिनोज्योतिषावीत्।

१ २ ३ १ २ ३ १ २ ३ १
यत्रनःपूर्वपितरःपदज्ञाः

३ १ २ ३ १र २र ३ १
स्वर्विदोअभिगाअद्रिमिष्णन् ॥ ३ * ॥ ४

"वर्द्धिता" देवानां स्व-कला-प्रदानेन वर्द्धयिता "वर्द्धनः" स्वयं वर्द्धमानः "पूयमानः" पवित्रेण पूयमानः "मीढ्वान्" कामानां सेक्ता "सः" सोमः "नः" अस्मान् "ज्योतिषा" स्व-तेजसा "अभ्यावीत्" अभिरक्षतु "यत्र" यस्मिन् सोमे प्रसन्ने सति "पदज्ञाः" पणिभिरपहृतानां गवां पदानि जानन्तः "स्वर्विदः" सर्वज्ञाः सूर्यं जानन्तो वा "नः" अस्माकं "पूर्वे" चिरन्तनाः "पितरः" अङ्गिरसः "गाः" पशून्† लब्धुम् "अद्रिम्" गिरौ-श्रयम् "अभि" लक्ष्य गन्तुम् "इष्णन्" ऐच्छन् ॥

"यत्रनः"-"येनानः"—इति पाठौ, "इष्णन्"-"ष्णन्"—इति च ॥ ३ ॥ ४

* ऋ० वे० ७, ४, १८, ४।

† 'गाः-उदकानि रश्मयो वा'—इति वि०।

५र र ३ २ ४ ५
॥ गौरीवितम् ॥ आजा। गृवा३यिः। विप्रजूताम्।
१ र र र र र र १ २
मतीनाꣳसोमःपुनानोअसदच्चमूषू२३। सापन्तिया ३ १
४ र र २ १ १
२३म्। मिथुनामोनिकामापु५ध्वर्य्यो। वोरथिरा३१२३।
४ ५ ४ ५ ३र २ ४
सःसोवा। हा५स्तोई३हायि॥(१) मपु। नाना३ः। उ
र ५ १ र र र र र र र १
पसूरायि। दधानःओभेअप्रारोदसीवीषआवार३ः। प्रा
र र ४ र र र र १ र
याचिद्या३१२३। स्यप्रियसासऊतीसा५तोधा। नाङ्का
२ ४ ५ ४ ५ ५
रिणा३१२३यि। नप्रोवा। या५ꣳसोई३हायि॥(२) सव
३ २ ४ ५ १र र र र र र र
ह्विता३। वर्द्धनःपू। यमानःसोमोमीढाꣳअभिनोज्यो
र १ १ ४र र
तिषावा२३यित्। याचनःपू३१२३। वैपितरःपदत्वाःस्व५
१ २ ४ ५ ४
र्वायि। दोअभिगा३१२३ः। अद्रोवा। आ५यिष्मो
५
ई३हायि(३) ॥ १४ * ॥ [१]

१ २ १ २
॥ अयनम् ॥ आजा। गृविर्विप्रजूताम्। मती३

---

* ऊ० गी० ६प्र० १ख० १५सा०।

नाम् । सोमःपुना । नो३अस । दक्षमूषू । सपन्ति
यम्मिथुनासो । निकाा२३माः । अध्वर्य्यवो । रथिरा ।
सा३४३ः । सूक्रा५स्ता६५६ः ॥(१) सापू । नानउपसू
रे । दधाइनाः । ओभिअप्राः । रो३दसी । वीषआ
वाः । प्रियाचिद्यस्यप्रियसा । सजा२३तो । सतोधनाम् ।
कारिणे । ना३४३ । प्रा३या५ए्सा६५६न् ॥(२) सावा ।
धितावर्द्धनःपू । यमाइनाः । सोमोमीढ्वा । अभि
नः । ज्योतिषावीत् । यत्रनःपूर्वपितराः । पदा२३ज्ञाः ।
सुवर्विदो । अभिगाः । आ३४३ । द्रा३यिमा५यिष्णा
६५६न्३) ॥ ५ * ॥ [२]

॥ यज्ञायज्ञीयम् ॥ आजा५ग्ने । वा३र्वा३यिप्रम
नाम् । मतीनाए्सोमःपुनानोअसा । दा३क्षामू३षू ।

* ज॰ गा० १०प्र० १ख० १गा० ।

१ १ २ २ २ १ १
सपार२न्तियन्मिथुनासोनि । कामार२३आ । इआयि ।
१ १ १ २ ११ १ १ १ १
ध्वा३र्या । वोर२थिदासःसू२३क्ताउ ॥(१) तासाः । पुना
२२ २ २२ २२ १ १ १ १
नउपद्ध२रेदधानओभेअप्रारोदसी । वी३ षाआ ३ वाः ।
१ १ २ २ १ १
प्रिया२चिद्यस्यप्रियसासः । उती२३सा । इआयि ।
१ १ १ २ २ १ १ १ १
तो३धा । नाह्वारि२णेनप्रा२यफुउ ॥(२) सात्साः । वह्नि
२ २ २ २ २ २ २ १ १ २ २
तावह्न२नःपूयमानःसोमेमीढ्वा२अभिनो । ज्यो३ते१षा३वी
१ १२२ १ १
म् । यत्रा२नःपूर्वपितरःप । इआ२३ःम् । इआयि ।
१ १ १ २ १ २ ११
वा३र्वायि । दोअभिगाआद्रा२यि । मिष्णाउ । वा२३
११
४५(३) ॥ ११* ॥ [३]

१२ ४२ १ ४ ४ १ १ १
॥ गोष्ठ्यम् ॥ आजागृविर्विप्रः । ऋता३म् । मा
२ ५२ २ ४ ५ १२ २
२३४ । तीना२सोमः । पूना । नोअसद्त्वमूषुसपन्ति
२ २ १ १ २
यन्मिथुनासोनिकामा२ध्वर्या२ । वा२जजवमयि । वोरा

* ऋ० मा० १२म० २ख० १२मा० ।

थि। रामःसोवा३ओ२३४वा। हा५स्तो ६ वायि॥(१)

सपुनानउप। स्रा३यि। दा२३४। धानओभे ऽ।

प्रारो। दसोवीषआवःप्रियाचिद्यस्यप्रियसासऊतीसा २तो

धा २। हा २ऊऊवायि। नङ्कारिणनप्रोवा३ओ२३४वा।

या५ऽसो६हायि॥(२) सवर्द्धितावद्ध। नःपू३। या२३

४। मानःसोमोमी। द्वाऽआ। भिनोज्योतिषावीद्य

नःपूर्वेपितरःपदज्ञाःस्व २ववा २यि। हा २ऊऊवायि।

दोअभिगाअद्रोवा३ओ २ ३ ४ वा। आ ५ यिष्णो ६ हा

यि(३)॥ १०*॥ [४] ४

अथ माचिदन्यदिति प्रगाथात्मके द्वितीयसूक्ते—

प्रथमा।

माचिदन्यद्विश ऽसतसखायोमारिषण्यत।

इन्द्रमित्स्तोतावृषण ऽसचासुतेमुहुरुक्थाचश ऽसत ॥१†॥

* ऊ० गा० २६प्र० २ख० १०मा०।

† छ० आ० ३, १, ५, १० (१भा० ५०० पृ०) = ऋ० वं० ५, ७, १०, १।

हे "सखायः" समान-ख्यानाः स्तोतारः! इन्द्र-स्तोत्रात् "अन्यत्" स्तोत्रं "मः चित् विशंसत" मैवोच्चारयत, "मा रिषण्यत" मा हिंसिता भवत अन्यदीय-स्तोत्रोच्चारणेन वृथोपक्षीणा मा भवत, "सुते" अभिषुते सोमे "वृषणं" कामानां वर्षितारम् "इन्द्रम् इत्" इन्द्रमेव हे प्रस्तोत्रादयः! "सचा" सह "स्तोत" स्तुत। हे प्रगास्त्रादयः! "उक्था च" उक्थानि शस्त्राणि च इन्द्रविषयाणि यूयं "मुहुः" पुनः पुनः "शंसत" ॥१॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ २ ३ १ २र ३ १ २
अवक्रक्षिणंवृषभंयथाजुवङ्गान्नचर्षणीसहम्।
३ १ २ ३ १ २ ३ १ २र ३ १ २
विद्वेषणꣳसंवननमुभयङ्करंमꣳहिष्ठमुभयाविनम्॥२*॥५

"वृषभं यथा" वृषभमिव "अवक्रक्षिणम्" अवचर्षणशीलं शत्रूणां हिंसितारं "जुवं" शीघ्रकारिणं "गां न" गामिव वृषमिव† "चर्षणीसहम्" मनुष्याणां शत्रुभूतानामभिभवितारं, "विद्वेषणं" विद्वेष्टारं शत्रूणां, "संवननं" सम्यक् सम्भजनीयं स्तोतृभिः "उभयङ्करं" निग्रहानुग्रहयोरुभयोः कर्त्तारं "मंहिष्ठं" दातृतमम् "उभयाविनं" दिव्य-पार्थिव-लक्षणेन उभय-विधानेनोपेतम् [ यद्वा, स्थावर-जङ्गम-रूपेण द्विप्रकारेण रक्षितव्येनोपेतम्। अथवा उभयविधैः स्तोतृभिर्देवैश्चोपेतम् ]—एवंविध मिन्द्रमितस्तोतेति पूर्वेणान्वयः॥

---

* ऋ० वे० ५, ७, १०, २।

† 'गां न—न-शब्द उपमार्थीयः। गामिव पृथिवीमिव'—इति वि०।

"शुवं"-"शुरं"—इति पाठो, "संवननं"-"संवनना"—इति च ॥ २ ॥ ५

॥ मैधातिथम् ॥ माचिदन्यदोवायि । विशाऽ२३सा ता । सखाया२वो१यि । माऔ३वो । रायिषाउवा । ण्याताउवा । इन्द्रमित्स्तोतावृषणाऔ३वो । साचाउ वा । सुताउवा । मुहुरुक्थाऔ३वो । चशा । औहो । वाहो२३४वा । सा५तो६वायि ॥(१) मुहुरुक्थोवायि । चशा३२साता । मुहुरु३वो१ । क्थाऔ३वो । चाशा उवा । साताउवा । अवक्रक्षिणंवृषभाऔ३हो । याथा उवा । जूवाउवा । गान्नचाऔ३वो । षणा । औवो । वाहो२३४वा । सा५वो६वायि ॥(२) गान्नचोवायि । षणा३यिसावाम् । गान्ना२वो१यि । चाऔ३हो । षा णाउवा । साद्दाउवा । विद्वेषणा२संवननमाऔ३वो ।

१ २   १ २   १ २   १   २
भायाउवा। काराउवा। काराउवा। मꣳहिष्टमाओ

२   १   १र १   १र   ५   ४
इहो। भया। ओहो। वाहो२३४वा। वा५यिनो।

५
इहायि(३) ॥ १५* ॥ [१] ५

अथ उदुत्यइति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१२ १र १र   २ १२ १   २
उदुत्येमधुमत्तमागिरःस्तोमासईरते।

२   १२   ३१र   १र   ३१ ३१२
सत्राजितोधनसाअक्षितोतयोवाजयन्तोरथाइव ॥ १† ॥

"त्ये" ते प्रसिद्धाः "मधुमत्तमाः" अतिशयेन मधुराः "गिरा" स्तुति-रूपया वाचा "स्तोमासः" त्रिवृदादि-स्तोमाश्च "उदीरते" हे इन्द्र! त्वामुद्दिश्य उद्गच्छन्ति ऊर्द्धं प्रसरन्ति [ईर गतौ आदादिकः (आ०)]। तत्र दृष्टान्तः—"सत्राजितः" सदैव शत्रून् जयन्तः "धनसा" धनानि सम्भजन्तः [वन षण सम्भक्तौ (भ्वा० प०), "जन-सन-खन-क्रम-गमो विट् (३, २, ६७), "विड्वनोरनुनासिकस्यात् (६, ४, ४१)"—इत्यात्वम्, "अक्षितोतयः" अक्षिताः क्षय-रहिताः ऊतयो रक्षा येषां ते तथोक्ताः [क्षियो भावे निष्ठा, "निष्ठायामण्यदर्थे (६, ४, ६०)"—इति

* ऊ० गा० ६प्र० १ख० १५गा०।

† ऋ० आ० ३, २, १, ८ (१मा० ५१८ पृ०) = ऋ० वे० ५, ७, २७, ५।

पर्युदासाद्दीर्घाभावः अतएव "च्छियो दीर्घात् (८, २, ४६)" —इति निष्ठा-नत्वाभावश्च "वाजयन्तः" वाजमन्नमिच्छन्तः, वाचि "न छन्दस्यपुत्रस्य (७, ४, ३५)"—इतीत्व-दीर्घयोः प्रतिषेधः ], एवङ्गुणविशिष्टाः "रथाइव" ते यथा विविधमितस्तत उत्तिष्ठन्ति तद्वदुदीरतइत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ ३१२३ १२ ३ २३२३ १२
कण्वाइवभृगवःसूर्य्याइवविश्वमिद्धीतमाशत।
२३ १२ ३२ ३ १२ ३१२
इन्द्रꣳस्तोमेभिर्महयन्तआयवःप्रियमेधासोअस्वरन्॥२*॥६

"कण्वाः" कण्व-गोत्रोत्पन्ना ऋषयः "इव" स्तुवन्तः "भृगवः" भृगु-गोत्रोत्पन्ना ऋषयः† "धीतम्" आध्यातम् "विश्वमित्"‡ व्याप्तं तमेव "इन्द्रम्" "आशत" आनशिरे "सूर्य्याइव" यथा सूर्य्य-रश्मयः सर्वं जगद् व्याप्नुवन्ति, तद्वत्। अपिच "प्रियमेधासः" प्रिययज्ञाः एतत्सञ्ज्ञका वा¶ "आयवः" मनुष्याः तमेवेन्द्रं "महयन्तः" पूजयन्तः "स्तोमेभिः" स्तोत्रैः "अस्वरन्" अस्तुवन् [ स्वृ शब्दोपतापयोः भौवादिकः ( प० ) ॥

"आशत"-"आनशुः"—इति पाठौ ॥ २ ॥ ६

---

* ऋ० सं० ५, ७, २८, १।

† अत्राह यास्कः—"अर्चिषि भृगुः सम्बभूव भृगुर्भृज्यमानो न देहे"—इति निरु० नै० ३, १७। 'भृगवः—भर्जनकराः सूर्य्याइव यथा आदित्य-रश्मयः'—इति वि०।

‡ 'इत—इति पाद पूरणः'—इति वि०।

¶ अत्राह यास्कः—"प्रियमेधः प्रिया अस्य मेधाः"—इति निरु० नै० ३, १७।

॥ अभीवर्त्तम् ॥ उदू३त्ये३माधुमत्तमोवा। गायिर स्तोमा। सत्र्आयिरा१ता२यि। सात्राजितो३१२३४। धनमात्र। चितोता१या२ः। वाजाया१न्ता२ः। रथा३ः। आर२३४५यि। वार ३ ४ ५ ॥(१) वाजा३रा३न्तोरथाइवो वा। वाजयन्तः। रथात्र्आ१यिवा२। काण्वाइवा३१२३ ४। भृगवःद्ध। रियात्र्आ१यिवा२। विश्वामा१यिडो२। नमा३। शा१२३४५। ता२३४५ ॥(२) विश्वा३मा३यिड्डो नमाशतोवा। वायिश्वमिड्डो। नमाशाता२। आयिन्द्र९ स्तोमा३१२३४यि। भिर्मह्य। तत्र्आया१वा२ः। प्रिया मा१यिधा२। सोत्र्आ३। स्वा२३४५। रा२३ ४ ५न्(३) ॥ १६* ॥ [१] ६

* ऊ० गा० ६प्र० १अ० १६सा०।

अथ पर्य्यूष्विति त्र्यचात्मकं चतुर्थं सूक्तम्—

तत्र प्रथमा।

१ २ १ २र २ १ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

पर्य्यूषुप्रधन्ववाजसातयेपरिवृत्राणिसक्षणिः।

३ २ ३ १ २ ३ १ २

द्विषस्तरध्याऋणयानईरसे ॥ १* ॥

हे सोम! "सु" सुष्ठु "वाजसातये" अस्मभ्यमन्नदानायैव "परि प्रधन्व" परितः प्रगच्छ [ यद्वा, "वाजसातये" अन्नस्य लाभाय सङ्ग्रामं प्रगच्छ ]। किञ्च "सक्षणिः" सहनशीलस्त्वं "वृत्राणि" शत्रून् परिगच्छ। तदेवोच्यते—"नः" अस्माकम् "ऋणया" ऋणानां यापयिता विनाशयिता त्वं "द्विषः" शत्रून् "तरध्यै" तरीतुं हन्तुम् "ईरसे" परिगच्छसि॥

"ईरसे"-"ईयसे"—इति पाठौ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २

अजीजनोह्यिपवमानसूर्य्यंविधारेशक्मनापयः।

१ २ ३ १ २ ३ १ २

गोजीरयारꣳहमाणःपुरन्ध्या ॥ २† ॥

हे "पवमान" सोम! त्वं "पयः" पयस उदकस्य "विधारे" विधारके अन्तरिक्षे "शक्मना" सामर्थ्येन बलेन "सूर्य्यम्"

---

* छ० आ० ५, १, ५, २ (१ भा० ८७१ पृ०)=ऋ० वे० ७, ५, २२, १।

† ऋ० वे० ७, ५, २२, २।

"अजीजनः हि"* उत्पादितवान् भवसि खलु। कीदृशः? "गोजीरया" स्तोतृभ्यो गवां प्रेरकेण स्तोतृणां प्रेरित-पशुकेनेत्यर्थः, तादृशेन†; "पुरन्ध्या" बहुविध-प्रज्ञानेन युक्तः‡ "रंहमाणः" वेगं कुर्वाणस्त्वं सूर्यमजीजनः॥ २॥

अथ तृतीया।

१ १ १ २ ३ १ १ ३ १ २
अनुहित्वासुतꣳसोममदामसि॥ ३ ¶॥ ७

—इति तृतीयाया ऋचः प्रतीकमिदम्। सा चान्यत्र (५,१, ५, ६=१भा० ८७१पृ०) व्याख्याता॥ ३॥ ७

॥ श्यावाश्वम्॥ परा३१यि। ऊ३ष्। प्रध। न्वा ह्वा। एहियाजा। सातयेपा। रि। वृत्रा२। एहि या२। णिसत्तणायिर्दा३यिषा३ः। ता२३४रा। ऐद्दा २यि। एह्रिया२। धियाक्रणगाना३ई३। रा३४५सो ६हायि॥(१) अजा३१यि। जा३नो। द्दिप। वा३मा।

* 'हि-इति पद-पूरणः'—इति वि०।

† गोजीरया रंहमाण—'गोजीरेण संयुक्तया दध्ना वा मिश्रया, रंहमाणः वेगेन गच्छमानः'—इति वि०।

‡ 'पुरन्ध्या'—उदकेन'—इति वि०।

¶ ऋ० सा० ५, १, ५, ६ (१ भा० ८७१पृ०)=ऋ० वे० ७, ५, २२, १।

एह्िया। ना। ह्वरियंवायि। धा। ऐग्रा२। एह्यिया २। क्मनापृषोगो३जो३जो३। रा२३४या। ऐहा२यि। एह्यिया२। र(ं)ह्माणाःप् ३ रा ३ म्। धा ३ ४ ५ यो ६ हायि॥(२) अनु३१। हा३यित्वा। सुतम। सो३म। एह्यिया। पा। दार्ममिमा। हे। समा२। एह्यिया २। यराजियेवा३जा(ं)३। आ२३४भो। ऐहा२यि। एह्यिया२। पवमानाप्रा ३ गा ३। हा ३ ४ ५ मो ६हा यि(३)॥ १८ *॥ [१]

॥ आन्धीगवम॥ पर्य्युषुप्रधा१न्वावा। जसात। येपा२३री। ऊम्मा२१५३। वृत्राणिसत्नाणिद्विषस्तरा२३ ४५। धारयाउवार्णा२या। ना२३ई। रसा। औ ३होवा॥(१) अजीजनोह्िपा१वामानह्रि। षंवा २ ३

* ऊ० गा० ६प्र० १ख० १८सा०

यिधाऊम्मा२१ऽ२। रेभ्रक्मनापयोगोजीरयार ३ ४ ५।
राऽहाउवा। मा२पगम्। पूरइराम्। धिया। औ
ऽहोवा॥(२) अनुह्नित्वासुता१ऽसोमा। मदाम। रु
मा२३चे। ऊम्मा२१ऽ३। समर्याराज्येवाजाऽअभीर३
४५। पावा३उवा। मा२ना। प्रा२३गा। ह्वसा। औ
ऽहोवा। होऽ५ई। डा(३)॥ १८*॥ [२]

॥ विराट्सुवामदेव्यम्॥ पाऽ५रि। ऊषू३ प्रा३ध
न्वावा। जा। सातयेपरिवृत्राणिसचंणिर्द्विषस्त। रा।
औ३होहायि। जा। सातयेपरिवृत्राणिसक्षणिर्द्विषस्त।
रा। औ३होहायि। धियार३ऋणयाः। नऔहो३।
ऊम्मा२। राऽरसो३५हायि॥(१) आऽ५जी। जनो३
यिपवमा। ना। हरियंविधारेभ्रक्मनापयोगोजीर।

* ऊ० गा० ६प्र० १भा० १८सा०।

या। औ३ह्वोवाहायि । ना । हरियंविधारेभक्ष्मनापयोगोजीर । या । औ३होवाहायि । र७हा२३माणः । पुरीहा३ । ऊम्मा२ । धा२२ये।३५हायि ॥(२) आ२५नु । हित्वा३ह३त७सोमा । मा । दामसिमह्वेसमर्य्यराज्येवाजा७अ । भा । औ३हावाहायि । मा । दामसिमह्वेसमर्य्यराज्येवाजा७अ । भा । औ३होवाहायि । पवा२३मामाना । प्रगीहो३ । ऊम्मा२ । हा२ २सो३ ५हायि(३) ॥ ८* ॥ [३]

॥ गौरीवितम् ॥ परि । ऊषू३ । प्रधन्वाबा । जसातयेपरिवृत्रा२३ । णायिसक्षणा३१२३यिः । द्विषा५स्तरा । ध्याऋणया३१२३ः । नओवा । रा५सो६हायि(१) ॥ ५† ॥[४]

* ऋ० मा० ६म० १अ० ८मा० ।

† ऋ० मा० १०म० १अ० ५मा० ।

॥ ओकोनिधनम् ॥ अजा३यिजनोह्विपवमा। नसू। रियंविधारे भक्मना २ पाया २ः। गोजा २यिराया २। र ३हमा२३४णाः। पुरम्। धा२या२३४औहोवा। औ होवा। ओ२३४का:(२) ॥ ६ * ॥ [५] ७

अथ परिप्रधन्वेति त्र्यृचात्मकं पञ्चमं सूक्तम्—

तत्र प्रथमायाऋचः

परिप्रधन्व ॥ १ † ॥

—इति प्रतीकमिदम्। सा चान्यत्र ( ५, १, ५, १ = २भा० ८६८पृ० ) व्याख्याता ॥ १ ॥

अथ द्वितीया।

एवामृताय महे क्षयाय

सशुक्रो अर्षदिव्यःपीयूषः ॥ २ ‡ ॥

---

* ऊ० गा० २०प्र० २ख० ६सा०।

† छ० आ० ५, १ ५, १ ( २भा० ८६८पृ० ) = ऋ० वे० ७, ५, २०, १।

‡ ऋ० वे० ७, ५, २०, २।

हे सोम! "शुक्रः" दीप्तः "दिव्यः" दिवि भवः "पीयूषः" देवैः पातव्यः "सः" त्वम् "अमृताय" अमरणाय "महे" महते "क्षयाय" निवासाय च "एव अर्ष" एवं पवस्व चर ॥ २ ॥

अथ तृतीया।

२ २ ३ १ २ २
इन्द्रस्तेसोमसुतस्यपेयात्
२ ३ १ २ ३ १ २ १ २
क्रत्वेदक्षायविश्वेचदेवाः ॥ ३ * ॥ ८

हे "सोम!" "सुतस्य" अभिषुतस्य "ते" तव स्वभूतं (रसमिति शेषः) "इन्द्रः" "पेयात्" पिबतु [पिबतेराशीर्लिङि रूपम्]। किमर्थम्? "क्रत्वे" क्रतवे प्रज्ञानाय "दक्षाय" बलाय "च" किञ्च, अमी "विश्वे" सर्वे "देवाः" च त्वदीयं रसं पिबन्तु ॥

"पेयात्"-"पेयाः"—इति पाठौ ॥ ३ ॥ ८

१ १ १
॥ वाङ्निधनंसौक्षविषम् ॥ प। यँपारी। प्रधन्वा।
२ १ २ २ २ १ २र १
होवाइहोयि। इन्द्रायसोमा। होवाइहोयि। स्वादु
र २ १ २ र ३ ५ ४
र्मित्राया।' होवाइहो२३यि। पूष्णीवाओ२३४वा। भ

* ऋ० वे० ७, ५, २०, २।

गा५याउ ॥(१) एव। एआयिवा। एव। एआयिवा।
अमृताया। होवा३ होयि। मर्च्चत्याया। होवा३
होयि। सम्रुक्रोअर्षा। होवा३हो२३यि। दिव्यौवा
ओ२३४वा। पीयू५षाउ ॥(१) इन्द्रः। एआयिन्द्राः।
इन्द्रः। एआयिन्द्राः। तेसोमा। होवा३होयि। सु
तस्यपेयात। होवा३होयि। क्रत्वेदक्षाया। होवा३
हो२३यि। विश्वौवाओ२३४वा। वहा५यिवाउ।
वा(३) ॥ २०* ॥ [१]

॥ वारवन्तीयम् ॥ परिप्रधाऔहोहायि। न्वाई२३४
न्द्रा। यसोमा२३४हायि। स्वादुर्मित्रा३३। औहोवा।
इहा२३४हायि। उक्षवा२३४या। पू। ष्णायिभगा३४।
औहोवा। इहा२३४हायि। औहो३१२३४। या। ए

* ऊ० गा० ९प्र० १ख० २०गा०।

हियाइहा ॥(१) एवामृतान्नौहोहायि । यामा२३४हे । क्षयाया२३४हायि । मघुक्रोआ३४ । औहोवा । इहा २३४हायि । उरुवा२३४र्षा । दित्याःपीयू३४ । औहो वा । इहा२३४हायि । औहो३१२३४ । पाः । एहिया इहा ॥(२) इन्द्रस्तेनाऔहोहायि । माद्व२३४ता । स्य पेया२३४ह्वायि । क्रत्वेदचा३४ । औहोवा । इहा २३ हायि । उरुवा२३४या । वि । श्वायिचदा३४ । औहो वा । इहा२३४हायि । औहो३१२३४ । वा । एहियाइ हा । होपूइ । डा(३) ॥ १०* ॥ [२]

॥ सफम् ॥ परिप्रा३धान्वाई२३४न्द्रा । यसोमा२३ । स्वा३२३४दूः । मित्रा । यपूष्णभा३ । गा३४५योइहा यि(३) ॥ ८ † ॥ [३]

---

* ऋ० म० ८, ५प० २अ० १०सा० ।

† ऋ० मा० १०प्र० १ख० ६सा० ।

२ १ ३ ५ १
॥ वाजदावर्यम् ॥ परिप्रधा। न्वार२इ२३४न्द्रा। या
३ ५ १ २
२सो२३४मा। स्वा२दूः। मा२३यित्रा। या
१ २र १ ५ ४ ५ २र र
२पू। षोभो२३४वा। गा५योइ्हायि॥(१) एवाम्हता।
१ ३ ५ १ ३ ५ १
या२मा२३४वे। चा२या२३४या। सा२ख्यु। क्रो२३
२ १ १ २ १ ५ ४ ५
श्रा। षा२दायि। व्यःपो२३४वा। यू५षोइ्हायि॥(२)
२ र १ ३ ५ १ ३ ५
इन्द्रस्तेसो। मा२सू२३४ता। स्या२पे२३४यात्। क्रा२
१ २ १ २र १ ५ ४
त्वे। दा२३चा। या२वायि। श्व चो२३४वा। दा५
५
यिवोइ्हायि(३)॥ ७* ॥ [४]

३१ १ ३ ५ १२
॥ स्वर्निधनम् ॥ परी३होयि। प्रभा२३४न्वा। इन्द्रा
१ ३ ५ १र २ १ २
३हो। यसो२३४आ। स्वादू३होयि। मित्रा
५ १र २ १ ३ ५ ४र ५र
२३४या। पूष्णे३होयि। भगा२३४या। पूष्णे
४र ५ १र २ २ ४
भगाय। पूष्णा३४३। हो३४३यि। भा३गा५या६

* ऊ० गा० १२प्र० १ख० ७सा०।

३र २ १ ३ ५ ३२ १
५६ ॥(१) एवा३ह्वोयि । अमृता२३४या । मह्वे३होयि ।
३ ५ ३ २ १ र ३ ५ ३ २ १
ह्वया२३४या । सम्रू३ह्वो । क्रोआ२३र्षा । दिव्या३ह्वो
२ १ ५ ४ ३ र५ ३ २
यि । पीयू२३४षाः । दिव्यःपीयूषः । दिव्या३४३ः ।
२ २ ४ ३ २ १ र ३
ह्वो३४३यि । पी३यू५षा६५६ः ॥(२) इन्द्रा३ह्वो । तेसो
५ ३ २ १ १ ५ ३ २ १
२३४मा । सुता३ह्वो । स्यपे२३४यात् । क्रत्वे३ह्वोयि ।
३ ५ ३ २ १ ३ ५ ४ ३र
दत्ता२३४या । विश्वे३ह्वोयि । चदा२३४यिवाः । विश्वे
४र५र ३ २ २ २ ४
चदेवाः । विश्वे३४३ । ह्वो३४३यि । चा३दा५यिवा६५
३ १ ३ १ १ १ १
६ः । ए३ । सुवर्वति२३४५(३) ॥ ४* ॥ [५]

१ १ १ र
॥ वाजजित् ॥ परिप्रधन्वा । ह्वोवा३ह्वोयि । इन्द्रा
र २ १ र र २
यसोमा । ह्वोवा३ह्वोयि । स्वादुर्मित्राया । ह्वोवा ३
१ र र र २ १ २ ५र
ह्वोयि । पूष्णेभगाया । ह्वोवा३ह्वोर । वा २ ३ ४औ
र १र र र २ १ र र
ह्वोवा ॥(१). एवामृताया । ह्वोवा३ह्वोयि । महेह्वया

---

* ऊं० गा० १४प्र० १अ० ४सा० ।

या। होवा३होयि। सधुक्रोअर्षा। होवा३होयि। दिव्यःपीयूषाः। होवा३होरे। वा२३४औहोवा॥ इन्द्रस्तेसोमा। होवा३होयि। सुतस्यपेयात्। होवा३होयि। क्रत्वेदक्षाया। होवा३होयि। विश्वेचदेवाः। होवा३होर२। वा२३४औहोवा। वाजीजिगीवाविश्वाध नारनो२३४५(२)॥ ६*॥ [६]

॥ पौष्कलम्॥ परिप्रा३ध। न्वाई२३४न्द्रा। यसो। मास्वा२३४दूः। मित्रा। या२३४५। पू६५६। ण्णा गाया२३४५(१)॥ १८†॥ [७] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य द्वितीयः खण्डः॥ २॥

* ऊ० गा० १७प्र० २अ० ६सा०।

† ऊ० गा० ११प्र० १अ० १८सा०।

अथ तृतीय-खण्डे—

सूर्य्यस्येवेति त्यृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २
सूर्य्यस्येवरश्मयोद्रावयित्नवो

३ १ २ ३ १ २ ३ १ २
मत्सरासः*प्रसुतःसाकमीरते ।

१ २ ३ २उ ३ १ २ ३ १ २
तन्तुन्ततम्परिसर्गासआशवो

१ २ ३ २ २ ३ १ ३ १ ३ २
नेन्द्राहतेपवतेधामकिञ्चन ॥ १† ॥

"सूर्य्यस्य" सर्वस्य प्रेरकस्य सुवीर्य्यस्यादित्यस्य "रश्मय इव" सर्वतो व्यापकाः किरणा इव "द्रावयित्नवः" सर्वत्र द्रवणशीलाः "मत्सरासः" मदकराः "प्रसुतः" प्रकर्षेण सुताः अभिषुताः [एकवचनं छान्दसम् (३, १, ८५)] "आशवः" ग्रहेषु चमसेषु च व्याप्ताः "सर्गासः" सृज्यमानाः सोमाः "ततं" विस्तृतं "तन्तु" तन्तुभिः कृतं वस्त्रं दशापवित्रं "साकं" सह युगपत् "परि-ईरते" परितो गच्छन्ति । ते सोमाः "इन्द्रादृते" इन्द्रं वर्ज-यित्वा अन्यत् "किञ्चन धाम"‡देव-शरीरं प्राप्य "न पवते"

---

* "प्रसुवः"—इति ऋ०-पाठः ।

† ऋ० वे० ७, २, २२, १ ।

‡ 'इन्द्र' मुक्त्वा नान्यत् सोमस्य स्थापनमस्ति'—इति वि० ।

न गच्छन्ति ॥ [इन्द्रस्य धाम्नो यष्टव्यत्वञ्च "अयामीन्द्रस्य प्रिय-धामानि"—इति मन्त्र वर्णादवगम्यते ॥ १ ॥

अथ द्वितीया ।

१ २ ३ २ ३ १ २ ३ २ ३ १ १
उपोमतिःपृच्यतेसिच्यतेमधु

३ १ २ ३ २ ३ १ १
मन्द्राजनीचोदतेअन्तरासनि ।

१ २ ३ १ २ ३ १ २ ३
पवमानःसन्तनिःसुन्वतामिव

१ २ ३ १उ ३ १ २
मधुमान्द्रप्सःपरिवारमर्षति ॥ २* ॥

अस्मिन् परिवाद-रूपे स्तोत्रे इन्द्रे "मतिः" स्तुतिरूपा "पृच्यते" स्तोतृभिः संयोज्यते [ पृची सम्पर्के ( दि० आ० ) ]। तथा "मधु" मदकरः सोमः इन्द्रार्थं "सिच्यते" अद्भिर्यव-सक्तु-भिश्च सिक्तो भवति, ततः "मन्द्राजनी" [अज गति-क्षेपणयोः ( अदा० भ्वा० )—इत्यस्य ल्युटि ङीपि रूपम्] मदकरस्य रसस्य प्रेरयित्री सोमधारा तस्येन्द्रस्य "आसनि" आस्ये "अन्तर्" मध्ये "चोदते" प्रेर्य्यते [ आस्य-शब्दस्य "पद्दन्नोमासित्यादिना ( ६, १, ६३ ) आसन्नित्यादेशः ]। किञ्च "सन्तनिः" यज्ञादिषु सम्यक् विस्तृतः "सुन्वताम्" अभिषुतवतां यजमानानां सम्बन्धिनी,

---

* ऋ० वे० ७, २, २१, २ ।

† 'सन्तनिः—सन्ततिः, सुन्वतामिव—यथा सुन्वतां सन्तनिः कर्म-सन्ततिः एवं सोमश्च धारयेति'—इति वि० ।

"पवमानः" पूयमानः सोमः "द्रप्सः" द्रुत-गमन-शीलः "वारम्" अवि-वालमयं पवित्रं "परि"परितः "अर्षति" गच्छति। "इव" —इति पाद-पूरणः॥

"सुम्वतामिव"—"प्रघ्नतामिव"—इति पाठौ॥ २॥

अथ तृतीया।

३ १ २ ३ १ २ ३ १ २
उक्षामिमेतिप्रतियन्तिधेनवो

३१ २ ३१र २र ३ २
देवस्यदेवीरुपयन्तिनिष्कृतम्।

१ २ ३ १ १ ३ १ १ ३ २ २
अत्यक्रमीदर्ज्जुनंवारमव्यय

२ १ १ ३ २उ ३ १ २
मत्कन्ननिक्तम्परिसोमोअव्यत॥ ३*॥ ९

"उक्षा" रेतसः सेक्ता वृषभः पुरतो "मिमेति" शब्दायते [माङ् माने शब्दे च (ह्वा० आ०) तं वृषभं "धेनवः" गावः† "प्रति यन्ति" अनुगच्छन्ति। तथा "देवस्य" द्योतमानस्य संस्कृतं स्थानं "देवीः" देव्यः स्तुतयः "उप यन्ति" उपगच्छन्ति [अनेनाहित-सोमः स्तुतिभिश्चाभिधीयते। सोमो हि द्रोणकलशाभिगमन-काले शब्दं करोति, तमनु धेनवः प्रीणयित्र्यः स्तुतयः परियन्ति देवस्य स्थानं स्तुतयोऽभि गच्छन्ति। तथा सोऽयं

* ऋ० वे० ७, २, २१, ४।

† 'धेनवः'—धेट् पाने (भ्वा०प०), पिबन्त्युदकानि आदित्य-रश्मयः। अथवा '* * *'— इति वि०।

सोमः "अर्जुनं" श्वेतवर्णम् "अव्ययम्" अविमयम् अवेः स्वभूतं "वारं" वालं पवित्रम् "अत्यक्रमीत्" "अतिक्रामति [अतिक्रम्य पात्राणि गच्छतीत्यर्थः]। किञ्च सोमः "अत्कं न" आत्मीय-कवचमिव "निक्तम्" उज्ज्वलं अयण-द्रव्यम् "परि अव्यत" परितः संवृणोति॥

"मिमेति"-"मिमाति"—इति पाठौ॥ ३॥ ९

॥ वाजजित्॥ हर्य्यस्येवा। रश्मयोद्रा। वायिस्त्र वाः। ह्वोवा३ह्वोयि। मत्सरासाः। प्रसुतःसा। का मोरतायि। ह्वोवा३ह्वायि। तन्तुन्तताम्। परिसर्गा। साआश्रवाः। ह्वोवा३ह्वोयि। नन्दोहृतायि। परतेधा। माकिश्चना। ह्वोवा३ह्वोरे। वा २ ३ ३ ओहोवा॥(१)
उग्रोमतायिः। पृच्यतेसायि। च्यातेमधू। ह्वोवा३ह्वो यि। मन्द्राजनायि। चोदतेआ। तारासनायि। ह्वो वाहोयि। पवमानाः। सन्तनिःमू। न्वाताभिवा। ह्वो वा३होयि। मधुमान्द्रा। सःपरिवा। रामर्षतायि।

२ १ ३ ५र र २र १
द्दोवा३द्दोर । वा२३४ओद्दोवा ॥ २) उत्तामिमायि ।
२ १ २र१र १ १ १र १
तिप्रतिया । तीधेनवाः । द्दोवा३द्दोयि । देवस्यदायि ।
२र१ २र १ २ १ १
वीरूपया । तीनिष्कृताम् । द्दोवा३द्दोयि । अत्यक्र
२ १ २र१ २ १
मायिन् । अर्ज्जुनम्वा । रामव्ययाम् । द्दोवा३द्दोयि ।
२ १ १ २र १ २ १
अत्कन्ननायि । क्रम्परिसो । मोअव्यता । द्दोवा३द्दो
३ ५र र २र१र २र १र १र ३ १ १
२ । वा२३४औद्दोवा । वाजीजिगीवाविश्वाधना२नो२ ३
१ १
४५ ॥ २१* ॥ [१]

२र १ र र २ १
॥ कावम् ॥ द्दय्योवा । स्वेवरश्मयोद्रा । वयिन्ना
१ र २ र १
वा२ः । मत्सरासः । त्रसुतःसा । कमीराता२यि ।
१ २ र १ १ १ ४ ५
तन्तुन्ततम्परिसर्गा । सश्राशावा२३ः । नेन्द्रा३दार्त्ता
२ १ १ २ ४
यि । पवतायिधा२३ । माक्ता३यिस्वा५ना ६ ५ ६ ॥ (१)
२ १ र २ र १ १ र
उरोवा । मतिःपृच्यतेसायि । च्यतेमाधू२ । मद्राज

---

* ऊ० गा० ६प्र० १अ० २१षा० ।

२ र र २ र १ १ र
नीचोदतेश्रा। तरामाना २यि। पवमानःसन्तनिःघ्न।
२ र १ १ २ ३ ४ ५ २ १
न्वतामायिवा२३। माधू३मान्द्रा। ष्पःपरायिवा २ ३।
२ २ ४ २ १ र
रामा३र्षापूता६५६यि॥(२) उच्चोवा। मिमेतिप्रतिया।
२ र १ १र र र २ १
तिधेनवा २ः। देवस्यदेवीरूपया। तिनिष्क्रार्त्ता २म्।
१ र २ १ १ २ ४ ५
अत्यक्रभीद्ज्जनम्वा। रमव्याया२३म्। आत्का३न्नानो।
२ १ १ २ ४
क्रम्परायिसो२३। मोआ३व्यापूता६५६(३) ॥११*॥ [२]९

अग्निर्नर इति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

२ २उ ३ १ २ ३ २ २
अग्निर्नरो दीधितिभिररण्यो
१ २ ३ २
र्हस्तच्युतञ्जनयत प्रशस्तम्।
३ १ २ ३ १ २ ३ २
दूरेदृशङ्गृहपतिमथव्युम्॥ १‡॥

* ऊ० गा० ८प्र० १ख० ११सा०।

† 'अग्निर्नः—एतदग्निष्टोमसाम। वामदेव्यम्'—इति वि०।

‡ छ० आ०,१, २, २, १० (१भा० २१५ पृ०) = ऋ० वे० ५, १, ३३, १।

हे "नरः" नेतार ऋत्विजः ! यूयं "प्रशस्तं" प्रकर्षेण स्तुतं "दूरेदृशं" दूरे दृश्यमानं दूरे पश्यन्तं वा "गृहपतिम्" गृहाणां पालकम "अथर्युम्" अगम्यम् अतनवन्तं वा "अग्निम्" "अरण्योः" सकाशात् "हस्तच्युतं" हस्तगतं "दीधितिभिः" अङ्गुलिभिः "जनयन्त" उत्पादयन्त ॥

"हस्तच्युतञ्जनयन्त"-"हस्तच्युतोजनयन्त"—इति पाठौ, "अथव्युम्"-"अथर्व्युम्"—इति च ॥ १ ॥

अथ द्वितीया।

१ ३ २३ ३ १ २३ ३ २र
तमग्निमस्तेवसवोन्यृण्वन्

३ २ ३ १ २ ३ १ २
सुप्रतिचक्षमवसेकुतश्चित्।

३ २ ३ १३ ३ २ ३ १ २
दक्षाय्योयोदमआसनित्यः ॥ २* ॥

"यः" अग्निः "दमे" गृहे गृहे "दक्षाय्यः" पूजनीयो हविर्भिः समर्द्धनीयो वा "नित्यः" अजस्रः "आस" बभूव "तं" "सुप्रतिचक्षं" सुप्रतिदर्शनम् "अग्निं" "कुतश्चित्" सर्व्वस्मादपि भयहेतोः "अवसे" रक्षणाय "वसवः" वासकाः वसिष्ठाः स्तोतारः "अस्ते" गृहे "न्यृण्वन्" न्यदधुः ॥ २ ॥

---

* ऋ० वे० ५, १, २३, २।

† विवरण-मते आसनित्य इत्येकं पदम्, तथाहि—'आसनित्यः—आसमासनं नित्यं यजमान-गृहे यस्य'—इति तद्व्याख्यानम्। विरुद्धञ्चैतत् पदकारादीनाम्
१ २र १ २र
'आस। नित्यः'—इति दर्शनात् बहुव्रीहि-स्वराभावाच्चेति विचार्यम्।

अथ तृतीया।

१ २ ३ १२ २र ३ १र

प्रेद्धोअग्नेदीदिहिपुरोनोजस्रयासूर्म्यायविष्ठ।

१र २र ३ १ २ ३ १ २

त्वाꣳशश्वन्तउपयन्तिवाजाः॥ ३* ॥ १०

हे "यविष्ठ" युवतमाग्ने! "प्रेद्धः" प्रकर्षेण समिद्धः त्वम् "अजस्रया" अमरणशीलया "सूर्म्या" ज्वालया "नः" अस्मदर्थं "पुरः" पुरस्तात् आहवनीयायने "दीदिहि" दीप्यस्व। "त्वां" "शश्वन्तः" बहवः "वाजाः" अन्नानि हवींषि "उपयन्ति" उपगच्छन्ति†॥ ३॥ १०

* ऋ० वे० ५, १, २३, ३ = य० वे १७, ७६।

† अत्रेयं महीधर-व्याख्या—"हे 'यविष्ठ!' [अतिशयेन युवा यविष्ठः। अतिशायने तमबिष्ठनौ, स्थूलदूरयुवेत्यादिना व-लोपे पूर्वगुणः] हे युवतम! हे 'अग्ने!' त्वं 'नो'ऽस्माकं 'पुरो' अग्रे 'दीदिहि' दीप्यस्व [दीव्यतेर्विकरण-व्यत्ययेन जुहोत्यादित्वात् शपः श्लौ द्वित्वम्, तुजादीनामिति पूर्व-दीर्घः]। किम्भूतस्त्वम्? 'अजस्रया' अनुपक्षीणया 'सूर्म्या' समित्काष्ठेन 'प्रेद्धः' प्रकर्षेण दीप्तः [सूर्मी शब्दः काष्ठ-वाचकः; यद्वा, लोहमयी ज्वलन्ती स्थूणा सूर्मी। अजस्रया सूर्म्या सूर्मी-समानया ज्वालया दीदिहि। सूर्मी-शब्दो ज्वालोपलक्षकः]। हे अग्ने! यतः शश्वन्तो निरन्तर-भाविनो वाजाः अन्नानि हवींषि त्वामुपयन्ति प्राप्नुवन्ति अतो दीप्यस्वेत्यर्थः"—इति।

आयङ्गौरिति तृचात्मकं तृतीयं सूक्तम्,*

तत्र प्रथमा।

१र २र ३ १ २ ३ १ २ ३ २
आयङ्गौःपृश्निरक्रमीदसदन्मातरम्पुरः।

३ १ २ ३ १ २
पितरञ्चप्रयन्त्स्वः॥ १† ॥

"गौः" गमनशीलः "पृश्निः" प्राष्टवर्णः व्याप्ततेजाः "अयं" सूर्य्यः "आक्रमीत्" आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च "पुरः" पुरस्तात् पूर्वस्यां दिशि "मातरं" सर्वस्य भूतजातस्य निर्मात्रीं भूमिम् "असदन्" आसीदति प्राप्नोति [सदेश्छान्दसो लुङ्, लृदित्त्वात् च्लेरङादेशः। ततः "पितरं" पालकं द्युलोकं "च"-शब्दादन्तरिक्षञ्च "प्रयन्" प्रकर्षेण शीघ्रं गच्छन् "स्वः" सु अरणः शोभन-गमनो भवति [यद्वा, पितरं स्वर्गलोकं प्रयन् वर्त्तते] ॥ १ ॥

---

* 'उत्तममग्निष्टोमसाम। इदानीं मानसं स्तोत्रं भवति। * * *। मनसाभिकरोति। मनसोद्गायति। मनसा प्रतिहरति। मनसा निधनमुपयन्ति। एतत्सामसं येनात्यग्निष्टोमाधङ्गौः पृश्निरक्रमीदिति'—इति वि०।

† ऋ० ब्रा० पू० ३, ५, ४ (१भा० ३४३ पृ०) = ऋ० वे० ८, ८, ४०, १ = य० वे० ३, ६।

अथ द्वितीया।

३ १ २ ३ २३ ३ १ २ ३ २
अन्तश्चरति रोचनास्य प्राणादपानती।
१२ ३२ ३ १२ ३२
व्यख्यन्महिषो दिवम् ॥ २* ॥

"अस्य" सूर्य्यस्य "रोचना" रोचमाना दीप्तिः "अन्तः" शरीर-मध्ये मुख्य प्राणात्मना "चरति" वर्त्तते। किङ्कुर्वती? "प्राणादपानती" मुख्य-प्राणस्य प्राणाद्या वृत्तयः, तत्र प्राणनं नाड़ीभिरूर्द्ध्वं वायोर्निर्गमनम्, तथाविधात् प्राणात् प्राणनात् अनन्तरम् अपानती, अपानं तन्नाड़ीभिरवाङ्मुखं वायोर्नमनं तत् कुर्वती, [अप-पूर्वादनितेः लटः शतृ, अदादित्वाच्छपोलुक्, "उगितश्च (४, १, ६)"—इति ङीप्, "शतुरनुमः (६, १, १७३)"—इति नद्यनुदात्तत्वम्। यद्वा, 'अन्तर्' द्यावापृथिव्योर्मध्ये 'अस्य' सूर्य्यस्य 'रोचना' रोचमाना दीप्तिः 'चरति' गच्छति। रुच दीप्तौ (भ्वा० आ०), "अनुदात्तेतश्च हलादेः (३, २, १४८)"—इति युच्। किङ्कुर्वती? 'प्राणात्' प्राणनात् उदयादनन्तरम् 'अपानती' सायं समये अस्तं गच्छतीति। ईदृश्या दीप्त्या युक्तः] अतएव "महिषः" महान् सूर्य्यः "दिवम्" अन्तरिक्षम् उदयास्तमययोर्मध्ये "व्यख्यत्" विचष्टे प्रकाशयति॥ महिषः—महेः "अविमह्योष्टिषच् (उ० १, ४५)"—इति

* ऋ० आ० प० १, १, ५ (२भा० ३, ४६) = ऋ० वे० ८, ८, ४७, २ = य० वे० ३, ७।

औणादिकः श्विपच् प्रत्ययः। व्यत्यन्—"चच्चिङः ख्याञ् (२, ४, ५४)", छान्दसे लुङि "अस्यतिवक्ति (३, १, ५२)"—इत्यादिना च्लेरङादेशः ॥ २ ॥

अथ तृतीया।

२ १उ ३ १ २ ३ १ २ ३ १ २
त्रिंशद्धामविराजतिवाक्पतङ्गायधीयते।
२ ३ २ ३ २ ३ १ २
प्रतिवस्तोरहद्युभिः ॥ ३* ॥ ११

"त्रिंशत्" "धाम" धामानि स्थानानि [ वचन-व्यत्ययः (३, १, ८५) ]। "वस्तोः" वासरस्याहोरात्रस्यावयवभूतानि "अह" [ शब्दोऽवधारणे ] "द्युभिः" सूर्य्यस्य दीप्तिभिरेव "वि राजति" विशेषेण दीप्यन्ते [ व्यत्ययेनैकवचनम् (३, १, ८५)। मुहूर्त्तान्यत्र धामान्युच्यन्ते ; पञ्चदश रात्रेः, पञ्चदशाह्नः]। "पतङ्गाय" [ पतन् गच्छतीति पतङ्गः सूर्य्यस्तस्मै ] सूर्य्याय, स्तुतिरूपा "वाक्" "प्रति धीयते" प्रतिमुखं धीयते प्रतिमुखं स्तोतृभि विधीयते क्रियते [ यद्वा, 'वस्तोः' अहनि 'त्रिंशद्धामानि' घटिकाभिप्रायमेतत्, त्रिंशत् घटिकाः ; "अत्यन्त-संयोगे द्वितीया (२, ३, ५)"। एतावन्तं कालं 'द्युभिः' दीप्तिभिः असौ सूर्य्यो 'वि राजति' विशेषेण दीप्यते, तस्मिंश्च समये 'वाक्' त्रयीरूपा 'पतङ्गाय' 'प्रतिधीयते' प्रतिमुखं धीयते तं सूर्य्यं सेवत

---

* छ० आ०, प्र० ३, ५, ६ (२भा० ३४६ पृ०) = ऋ० वे० ८, ८, ४७, ३ = य० वे० ३, ८।

इत्यर्थः । श्रूयते हि—"ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः"—इत्यादि ॥ ३ ॥ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य

तृतीयः खण्डः* ॥ ३ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ११ ॥

॥ इति षष्ठस्य प्रथमोऽर्द्धप्रपाठकः ॥ ६ * ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-

श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-

चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे

उत्तराग्रन्थे एकादशोऽध्यायः ॥ ११ ॥

———000———

* 'समाप्तश्चायं द्वादशाहः सत्रात्मकोऽहीनात्मकश्च'—इति वि० '

† 'षष्ठस्य प्रपाठकस्य प्रथमोऽध्यायः समाप्तः'—इति वि०।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १२ ॥

## ॥ अथ द्वादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथमखण्डे 'उपप्रयन्त' इति चतुर्ऋचं प्रथमं सूक्तम्†—

तत्र प्रथमा ।

३ १२ ३१र २र ३ १२
उपप्रयन्तोअध्वरम्मन्त्रंवोचेमाग्नये ।

३ २ ३ १ १ ३ २
आरेअस्मेचशृण्वते ॥ १‡ ॥

---

* 'इदानीं गवामयनं संवत्सरं सत्रमुच्यते । तत्रादौ ज्योतिष्टोमोऽतिरात्रः पुनः प्रायणीयमहरं तदुक्थ्यम् । पुनश्चत्वारोऽभिप्लवाः । पृष्ठः षडहः समाप्तः । स द्वितीयः तृतीयः स चतुर्थः स पञ्चमः त्रयोऽभिप्लवाः षडहाः पृष्ठः षडहश्चत्र्यंसि मासं चत्वारोऽभिप्लवाः समाप्ताः । स द्वितीयः स तृतीयः स चतुर्थः त्रयोऽभिप्लवाः षडहः आयुश्च गौश्च द्वे अहनी द्वादशाहानि महाव्रतमतिरात्रश्च संवत्सरस्यैतद् ब्राह्मणम् । अथान्यां परिशामं सषष्ठ्यानि त्रीणि शतानि । एकादशाः षष्ठाः पञ्चचत्वारिंशदभिप्लवाः अभिजित् तथाहं आयज्ञौ आयुषौ द्वादशाहस्य दशाहानि अतिरात्रः । चतुर्विंशत्या सह षष्ठो-मासः पूर्वस्मिन् पक्षसि व्रतान्तराभ्यां प्रथम उत्तरास्मिन् गवामयने अतिरात्रमीदि-तम् अध्याय-परिसमाप्तिः ब्राह्मणेनोक्तानि आर्षच्छन्दोदैवतानि । इदानीं तेषां साम्नां स्तोत्रीयाः त ऋचश्च इत्येवमारभ्यते—इति वि० ।

† 'आग्नेयमाज्यम्'—इति वि० ।

‡ ऋ० वे० १, ५, ९, १ = य० वे० ३, ११ ।

"अध्वरं" हिंसा-प्रत्यवाय-रहितम् अग्निष्टोमादि-यज्ञम् "उप प्रयन्तः" उपेत्य प्रकर्षेण यन्तो गच्छन्तः प्रात्यविच्छेदेन सम्यगनुष्ठितवन्तइत्यर्थः। तादृशा वयम् "अग्नये" अङ्गनादि-गुण-युक्ताय देवाय "मन्त्रं" मनन-साधनमेतत् सूक्तरूपं स्तोत्रं "वोचेम" वक्तारो भूयास्म इत्याशास्महे। कीदृशायाग्नये? "अस्मे अस्मे च शृणुते" च-शब्दोऽप्यर्थे आरे-शब्दात् परो द्रष्टव्यः आरे च दूरेऽपि स्थित्वास्माकं स्तुतीः शृणुते अस्मासु प्रीत्यतिशयेन सर्वत्र विद्यमानोऽग्निः अस्मदीयमेव स्तोत्रं शृणोतीति भावः। [वोचेम—ब्रुवोवचिः (२, ४, ५३), लिङ्याशिष्यङ्, "वच उम् (७, ४, २०)"—इत्युमागमः। शृणुते —"शतुरनुमः (६, १, १७३)"—इति विभक्तेरुदात्तत्वम्॥ १॥

अथ द्वितीया।

१र २र ३१ १ ३१ २३ १२
यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु।
१२ ३ १ २ १ २
अरक्षद्दाशुषे गयम्॥ २*॥

"पूर्व्यः" चिरन्तनः "यः" अग्निः "स्नीहितीषु" वधकारिणीषु "कृष्टिषु" शत्रुरूपासु प्रजासु "जग्मानासु" सुसङ्गतासु सतीषु "दाशुषे" हवींषि दत्तवते यजमानाय "गयं" धनम् "अरक्षत्" रक्षति†। तस्मै मन्त्रं वोचेमेति पूर्वेण सम्बन्धः। [स्नीहितीषु—

* ऋ० वे० १, ५, २१, २।

† 'गयं प्राणम् यद्यपि सर्वासु मनुष्यजातिषु अन्तर्हृदयान्तः स्थितं ज्योतिः तथापि च यजमानाः तेषां गयान् प्राणान् रक्षति'—इति वि०।

ष्णिह स्नेहने चुरादिः ; "स्नेहयति"—इति बध-कर्मसु (निघ० २, १९, १३ ) पठितम् ; स्निह्यन्ते हिंस्यन्ते प्रजा आभिरिति स्नीहितवः करणे "सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्", "तितुत्रेष्वग्रहादीनाम् ( ७, २, ९ वा० )"—इति वचनात् निग्रहेऽपीति निपातितिवदिडागमः व्यत्ययेनैकारस्य ईकारः, कितोदीर्घश्च ; नित्त्वादाद्युदात्तत्वम् । सञ्जग्मानासु —"समोगमि ( १, ३, २९ )"—इत्यात्मनेपदम्, लिटः कानच्, गमहनेत्यादिनोपधालोपः। अरचत्—"छन्दसि लङ्लुङ्लिटः (३, ४ ६ )"—वर्त्तमाने लङ् ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ १ ३ १ १
सनोवेदो अमात्यमग्नीरक्षतु शन्तमः।
२ १उ २ १ १
उतास्मान्पात्वꣳहसः ॥ ३* ॥

"सः" अग्निः "नः" अस्माकं "वेदः" धनम् "अमात्यम्"† अन्तिके भवं सहभूतं वा "रक्षतु" शत्रोः सकाशात् पालयतु। कीदृशः ? "शन्तमः" सुखतमः "उत" अपिच "अस्मान्" वसिष्ठान् "अंहसः" पापात् "पातु" रक्षतु ॥

"शन्तमः"—"विश्वतः"—इति पाठौ ॥ ३ ॥

---

* ऋ० वे० ५, २, १८, ३।

† 'अमत् प्राणः, प्राणनं सहवासिप्रिनं ज्योतिः'—इति वि०।

अथ चतुर्थी।

१ १ २    १ २ ३ २ २ १ १ ३ १    १
उतब्रुवन्तुजन्तवउदग्निर्वृत्रहाजनि।
२    १र    २र
धनञ्जयोरणेरणे ॥ ४* ॥ १

"अग्निः" "उदजनि" अरण्योः सकाशात् उत्पन्नः "उत" अनन्तरं "जन्तवः" जाताः सर्वे ऋत्विजः ब्रुवन्तु तमग्निं स्तुवन्तु। कीदृशोऽग्निः? "वृत्रहा" वृत्राणामावरकाणां शत्रूणां हन्ता "रणे रणे" सर्वेषु सङ्ग्रामेषु "धनञ्जयः" शत्रु-धनानां जेता† ["सञ्ज्ञायां (३, २, ४६)"—इति खच्, "अरुर्द्विषदजन्तस्य (६, ३, ६७)"—इति मुम्, चित्स्वरेणान्तोदात्तः। रणेरणे—रणन्ति दुन्दुभयोऽस्मिन्निति रणः सङ्ग्रामः ["बशिरण्योरुपसङ्ख्यानम् (३, ३, ५८ वा०)"—इत्यप्, "नित्यवीप्सयोः (८,१,४)"—इति द्विर्वचनम्, आम्रेडितानुदात्तत्वम् ॥ ४ ॥ १

अथाग्नेयुङ्क्ष्वाहीति त्र्यचात्मकं द्वितीयं सूक्तम्‡,

तत्र प्रथमा।

१ २ ३ १र    २र    ३ १ २
अग्नेयुङ्क्ष्वाहियेतवाश्वासोदेवसाधवः।
२ १   १ २   ३ १ २
अरंवहन्त्याशवः ॥ १¶ ॥

---

* ऋ० वे० १, ७, ११, १।

† 'धनञ्जयः—धनानां जेता'—इति वि०।

‡ 'अग्निष्टोम साम'—इति वि०।

¶ छ० आ०, १, १, ३, ५ (१ भा० १२३पृ०,=ऋ० वे० ६, ५, २९, १।

हे "देव" द्योतमानाग्ने ! तान् अश्वान् "युङ्क्ष्व" आत्मीये रथे योजय। "ये" "तव" त्वदीयाः "साधवः" साधकाः सुशीला वा "अश्वासः" अश्वाः "आशवः" शीघ्रगामिनः सन्तः "अरम्" अलम् पर्य्याप्तं त्वदीयं रथं वहन्ति "हि" खलु। तानश्वान् रथे युङ्क्ष्वेत्यर्थः ॥

"युङ्क्ष्व"-"युङ्क्ष्वा"—इति पाठौ, "आशवः"-"मन्यवः"—इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १र २र ३ १ २
अच्छा नो याह्या वहाभि प्रयांसि वीतये।
२ ३ १र २र
आ देवान्त्सोमपीतये ॥ २* ॥

हे अग्ने ! "नः" अस्मान् "अच्छ" आभिमुख्येन "याहि" आगच्छ, तथा "प्रयांसि" हविर्लक्षणान्यन्नानि "अभि" लक्ष्य "देवान्" "आवह"। किमर्थम् ? "वीतये" तेषां हविर्भक्षणार्थं, तथा "सोमपीतये" सोमपानार्थञ्च ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २
उदग्ने भारत द्युमदजस्रेण दविद्युतत्।
२ ३ १ २
शोचा वि भाह्यजर ॥ ३† ॥ २

---

* ऋ० वे० ८, ५, २९, ४।

† ऋ० वे० ८, ५, २९, ५।

हे "भारत" हविषां भर्त्तरग्ने ! * "उत् शोच" उन्नततरं दीप्यस्व। तदेव विवृणोति— हे "अजर" जरा-रहिताग्ने ! "दविद्युतत्" भृशं द्योतमानस्त्वं "द्युमत्" द्युमता दीप्तिमता सुपांसुलुगिति ( ७, १, ३९ ) तृतीया-लुक् "अजस्रेण" अविच्छेदेन "तेजसा" "वि भाहि" विशेषेण प्रकाशयस्व [ यद्वा, भाति रन्तर्णीत-ण्यर्थः। त्वं प्रथममुद्दीप्यस्व पश्चादात्मीयेन तेजसा सर्वं जगत् प्रकाशयेति योजनीयम् ] ॥ ३ ॥ २

अथ प्रसुन्वानायेति तृचात्मकं तृतीयं सूक्तम्।†

तत्र प्रथमा।

१ २ ३ १र २र ३ २ ३ १ २ ३ १र २र
प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।

२ ३ १ २ ३ १ २ ३ २ ३ १र २र
अपश्वानमराधसꣳहतामखन्नभृगवः ॥ १‡ ॥

"सुन्वानाय" सुन्वानस्याभिषूयमाणस्य "अन्धसः" अदनीयस्य सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तः" मारकः कर्म-विघ्नकारी श्वा "न वष्ट" [वश कान्तौ (अदा० प०) —इति धातुः ] न कामयतां न शृणोत्विति यावत्। तथा, हे स्तोतारः ! "राधसं" साधक-धर्म-रहितं "श्वानम्" "अपहत"।

* 'भारत—भरतामनुष्यास्तैर्निर्मथिताग्ने'—इति वि०।

† इमामीमाभिशुविक्रमस्यत'—इति वि०।

‡ छ० आ० ६, २, १, ९ (२ भा० १६८ पृ०) = पुनरत्रैव पुरस्तात् १, २, २१, २ (३ भा० २९० पृ०) = ऋ० वे० ७, ५, २, ३।

तत्र दृष्टान्तः—"मखं न" यथा पुरा अपराद्धं मखं एतन्नामानं "भृगवः" अपहृतवन्तः तथा अपहृतेत्यर्थः ॥

"सुन्वानाय"-"सुन्वानस्य"—इति पाठौ, "वष्ट"-"हृत"—इति च ॥ १ ॥

अथ द्वितीया।

२ ३ १र २र ३२उ ३ १ २ २र
आजामिरत्केअव्यतभुजेनपुत्रश्रोण्योः।
१ २ ३ १र २र ३ १र २र ३ १ २
सरज्जारोनयोषणांवरोनयोनिमासदम् ॥ २* ॥

"जामिः" बन्धुभूतो देवानां † सोमः "अत्के" आच्छादके पवित्रे "आ अव्यत" आवृणोति सम्बन्धो भवति। तत्र दृष्टान्तः—"भुजे न" यथा "ओण्योः" रक्षकयोः मातापित्रोः भुजे "पुत्रः" आवृणोति, तद्वत्। ततः सोऽयं सोमो "योनिं" स्व-स्थानभूतं कलशम् "आसदत्" आसत्तुं "सरत्" सरति। तत दृष्टान्तद्वयम्—"जारो न" यथा जारो "योषणा" असतीं स्त्रियं प्राप्तुं सरति, यथा वा "वरः" कन्यां प्राप्तुं गच्छति, तद्वत् ॥ २ ॥

अथ तृतीया।

१ २ १ २ ३ १ १ २ २उ ३ १ ३ १ १
सवीरोदक्षसाधनोवियस्तस्तम्भरोदसी।
१ २ ३ १ २ ३ १र २र ३ १ २
हरिःपवित्रेअव्यतवेधानयोनिमासदम् ॥ ३‡ ॥ ३

* ऋ० वे० ७, ५, ३, ४।

† जामिः—सोमस्य भगिनी'—इति वि०।

‡ ऋ० वे० ७, ५, ३, ५।

"दक्षसाधनः" बल-साधनः "सः" सोमः* "वीरः" समर्थो भवति, "यः" सोमः "रोदसी" द्यावापृथिव्यौ "वि तस्तम्भ" स्व-तेजसा व्यस्तत्वात् आच्छादयदित्यर्थः। किञ्च "हरिः" हरित-वर्णः सोमः "वेधा न" यथा विधाता यजमानः स्व-गृहमासी-दति, तद्वत् "योनिं" स्व-स्थानं कलशम् "आसदम्" आसत्तु पवित्रे "अव्यत" आवृणोत् सम्बद्धो भवति ॥ ३ ॥ ३

५ ३र १ ४ ५
॥ महागौरीवितम् ॥ प्रसु। न्वाना३। यअन्धसा:।
१ र १ र २ ४
मर्त्तानवष्टतद्वचार२३:। आपस्वाना३१२३म्। अरा५ध
१ र २ ४ ५ ४
साम्। हातामखा३ १ २ ३म। नभोवा। गा ५ वो ६
५
हाइ(१) ॥ १७† ॥ [१]

५ ३र २र ३ ४ ५ १ १ ३
॥ गीतमम् ॥ प्रसुन्वानायअन्धसा:। मर्त्तोनवो।
२ १ १ ३ ३र ४ १र र १ ३
ष्टतद्वचा२:। अपा। औहो२३४वा। आनमराधसा

* 'सः—सोमः प्रजापतिः नृपो वा'—इति वि०।

† ऊ० गा० १प्र० २ख० १७सा०।

२३४५म्। द्वता। औद्दोर२३४वा। मखा। औद्दोर२३४वा। नभ्र्५गवाः। द्दोइ। डा(१) ॥ १८* ॥ [२]

॥ महागौरीवितम् ॥ प्रसु। न्वाना३। यअन्धसाः। मर्त्तोनिवष्टतद्वचा२३ः। आपश्वाना३१२३म्। अरा५धसाम्। हातामखा३१२३म्। नभोवा। गा५वोद्दा यि ॥(१) आजा। मिरा३। त्के अव्यता। भुजेनपुत्र ओणियो२३ः। सारञ्जारा३१२३ः। नयो५षणाम्। वारो नयो३१२३। निमोवा। सा५दो६हायि ॥(२) सबी। रादा३। त्तसाधनाः। वियस्तस्तम्भरोदसा २ ३ यि। हारिःपवा३१२३यि। त्वे आ५व्यता। वायिधानयो३१२३। निमोवा। सा५दो६हायि(३) ॥ १९† ॥ [३]

---

* ऊ० गा० १प्र० २अ० १८सा०।

† ऊ० गा० ६प्र० २अ० १९सा०।

५ र ४ १ २ ४ र ५ २ १
॥ ओकोनिधनम् ॥ आजा३मिरत्के अव्यता । भुजा
१ १ र र १
यि । नपुत्त्रओ२णायो ३: । मरञ्जारोनयो२षाणा२
१र ५ २ १र ३ ५ र र
म् । वरोना२३४यो । निमा । सा२दा२३४औहोवा ।
३ ५
ओ२३४का:(२) ॥ १८* ॥ [४]

१ २ र र १ १ २ १
॥ औरलम् ॥ मवोरोदा । त्वामा२धनाः । वियस्त
२ १ २ ३ ५ १ २
स्ता३ । भारोदा२३४सायि । हरि:पवायि । त्र न्वा२
१ २ र १ र २ १ ४ २
व्यता । वेधाना२३यो३ । ना२३यिमा३ । सा३४५दो
५
ह्हायि(३) ॥ १९† ॥ [५]

५ २ ४ र ५ ४ ५ २ १ र २ १
॥ माधम् ॥ प्रसुन्वा३नायअन्धसाः । मर्त्तोनवा२ ।
३ २ २ ५ १ २ १ र २ र १ २ १ १ १ १
ष्टता३४५त् । वा२३४चा: । अपश्वानमराधसा२३४५म् ।
१ २ ३ १ १ २ २ ५ ४
हाताओ२३४वा । माखाओ२३४वा । नभृ५गवाः ॥(१)
५ र र १ ४ ५ र ४ ५ २ १ २ १ ३ २
आजामा३यिरत्के अव्यता । भुजायिनपू२त्न त्रओ३

* ऊ० गा० ६प्र० २ख० १८सा० ।
† ऊ० गा० ६प्र० २ख० १९सा० ।

४५। णी२३४यो:। सरज्जारोनयोषणा२३४५म्। वा

राश्रो२३४वा। नायाश्रो२३४वा। निमा५सदाम्॥(२)

सवीरो३दत्तसाधना:। वियास्तस्तार। भरो३४५। दा

२३४सी। हरि:पवित्रेश्रव्यता२३४५। वायिधाश्रो२३४

वा। नायाश्रो२३४वा। निमा५सदाम्। हो५ई।

डा(३)॥२०*॥[६]

॥गौतमम्॥ श्राजामिरत्केश्रव्यता। भजायिनपूत्।

चश्रोणियोर:। मरा। श्रौहो२३४वा। जारोनयोष

णा२३४५म्। वरा। श्रौहो२३४वा। नाया। श्रौहो

२३४वा। निमा५मदाम्। हो५ई। डा(२)॥२१†॥[७]

॥श्यावाश्वम्॥ प्रसू३१। न्वा३ना। यश्च। धा३स:।

एहिया। मा। तोनवश्चा। तत्। वचा२:। एहिया२।

---

* ऊ० गा० ६प्र० २ख० १०सा०।

† ऊ० गा० ६प्र० १ख० १सा०।

१२ २ ४ ५ २र १र
अपस्वानामा३रा३। धा२३४साम्। ऐद्दा २यि। एद्दि

२१ १ ४ २ ४
या २। हतामखान्ना३भू३। गा३५वो६हायि ॥२*॥ [८]

१२ २ १ १ २ १र
॥ औद्लम् ॥ प्रसुन्वाना। याश्रा २न्धसाः। मर्त्तो

२ १२ २ ५ १२ २ १
नवा३। ष्टातद्दा२३४चाः। अपस्वानाम्। आरा २ध

१ २ १र २ १ ४ २
साम्। हतामा२३खा३म्। ना२३भू३। गा३४५वो६

५ १र २र १ १ २ १र २
हायि॥१। आजामिरा। त्के आ २व्यता। भुजे नपू३

१ २ ३ ५ १२ २ १ १
त्। त्रा श्रोणा२३४योः। सरज्जाराः। नायो २षणाम्।

२ १र २ १ ४ २ ५
वरोना२३यो३। ना२३यिमा३। सा३४५दो६हायि ॥(२)

१२र२ १ १ २ १ २ १ २ ३
सवीरोदा। चासा २धनाः। वियस्तस्ता३। भारोदा

५ १ २ १ १ २र१र
२३४सायि। हरिःपवायि। जेत्रा २व्यना। वेधाना२३

२ १ ४ २ ५
यो३। ना२३यिमा३। सा३४५दो६हायि(३) ॥३†॥ [९]

---

* ऊ० गा० ११प्र० १ख० ७मा०

† ऊ० गा० ११प्र० २ख० ३मा०।

५ ३र २र ३ ४ ५ २ १ २ १
॥ गौतमम् ॥ प्रसुन्वानायअन्धसः । मर्त्तोनवा ।

२ १ ३ २ ३र ५ १र २र १३
ष्टतद्वचा२ः । अपा । औहो२३४वा । श्वानमराधसा

१ १ १ १ ३ २ ३र ५ ३ २ ३र
२३४५म् । हता । औहो२३४वा । मखा । औहो२३

५ ४ ५र र ३ २ ३र ३ ५ २ १
४वा । नभृ५गवाः ॥(१) आजामिरत्केअव्यता । भुजा

२ १ २ र १ ३ २ ३र ५
यिनपूत् । चओणियो२ः । सरा । औहो २ ३ ४ वा ।

१र १र र ३ १ १ १ १ ३ २ ३र ५ ३ २
जारोनयोषणा२३४५म् । वरा । औहो२३४वा । नया ।

३र ५ ४ ५ र ३र २ ३ ४र ५
औहो२३४वा । निमा५मदाम् ॥(२) मवोरोदत्तमाध

२ १ २ १ १र १ ३ २ ३र
नाः । वियास्तस्ता । भरोदसाराय । हरा । औहो

५ २ १ र २ ३ १ १ १ १ ३र २ १र ५
२३४वा । पवित्रेअव्यता२३४५ । वधा । औहो२३४वा ।

३ २ १र ५ ४ ४
नया । औहो २ ३ ४ वा । निमा५मदाम् । हो५ई ।

डा(३) ॥ १३* ॥ [१०]

२ १ ४र ५ २ ३ ५
॥ आकूपारम् ॥ प्रसुन्वा२३नाय । अन्धा२३४साः ।

---

* ऊ० गा० ११प्र० २अ० १३सा० ।

मर्त्ती२नवा। ष्टतद्वचाः। अपश्वाना२म्। अराध-
साम्। हताामाखा२३म्। ना२३भू३। गा३४५वो६हा
यि ॥(१) आजामा२३यिरत्के। अव्या२३४ता। भुजा
रयिनपूत्। चओ३णियोः। मरज्जारो२। नयोपणाम्।
वरोनायो२३। ना२३यिमा३। सा३४५दो६हायि ॥(२)
सवोरो२३दत्त। माधा२३४नाः। विया२स्तस्ता। भरो
दसायि। चरिःपावा२यि। चअव्यता। वेधानायो
२३। ना२३यिमा३। सा३४५दो६हायि(३) ॥ १६* ॥ [११]

॥ दैवोदासोत्तरम् ॥ प्रा४सुन्वाना। द्दो। यअन्ध
सा६ए। मर्त्तानवष्टतद्वचोअपश्वानमराधा३साम्। हता
मखा३४। औद्दोवा। ना२३४भू। गवो२३४५ई।
डा(३) ॥ १४† ॥ [१२]

* ऊ० गा० १५प्र० १ख० १६सा०।

† ऊ० गा० १६प्र० १ख० १४सा०।

॥ प्लुष्ट्वाप्लुष्टीयम्॥ प्रसुन्वानायअन्धसा:। मर्त्तो नवष्टतद्दा२३चा:। अपस्वानमराधा२३साम्। हतामा २३खा३म्। ना२। भृगा३४औहोवा। वा२३४५:॥(१)

आजामिरत्केअव्यता। भुजेनपुत्रओणा२३यो:। सर ज्जारोनयोषा२३णाम्। वरोना२३यो३। ना२३यो ३। ना२यिम्। आसा३४औहोवा। दा२३४५म्॥(२)

सवीरोदक्षसाधना:। वियस्तम्भरोदा२३सायि। हरि: पवित्रेअव्या२३ता। वेधाना२३यो३। ना२यिम्। आ सा३४औहोवा। दा२३४५म्(३)॥ १७*॥ [१३]

॥ वैश्वामित्रम्॥ प्रसुन्वानायअन्धस:। मर्त्तोना२३४ वा। ष्टा३ताद्दा३चा:। आपस्वाना२३९ह्वा३यि। अरा २धा२ ३ ४माम्। हतामाखौवाओ२ ३ ४वा। नभृपुग

* ऋ० मा० ६प्र० १अ० १७मा०।

१र ४र ३र४५ २ ३ ५
वाः ॥(१) आजामिरत्केअव्यत। भुजायिनार३४पू।
२ १ १ २ १२र१ २ १ ३
आ३ओणा३योः। सारञ्जारा२३द्वा३। नयोरषार३४
५ १ २र ३ ५ ४
णाम्। वरो। नायोवाओ२३४वा। निमा५सदाम् ॥(२)
३४र ३र४५ २ १ ५ २ १२ १
सवीरोदक्षसाधनः। वियास्ता२३४स्ता। भा३रोदा३सा
१ २ १ २ १ ३ ५
यि। द्वारिःपवा२३यिद्धा३यि। त्रेआ२व्या२३४ता।
१ २र ३ ५ ४ ४
वेधाः। नायौवाओ२३४वा। निमा५सदाम्। ह्वो५
ई। डा(३)॥ १८*॥ १४

२ र र २ १र
॥ स्वारकौत्सम्॥ प्रसुन्वानायाऽ३अन्धसाः। मर्त्तोन
१ २ २ र १ १२ २
वष्टता१द्वा३चाः। अपश्वाना३म्। आ३राधा३साम्।
१ र३ ५ ३१ ४
आऽ२यि। द्दतामखो२३४द्वायि। नभू३गा५वा६५६॥(१)
२र र २ १र २ २ १
आजामिरत्केऽ३अव्यता। भुजेनपुत्रओ१णा३योः। सर
र २ १२ १ १ र ३
ञ्जारो३। ना३योषा३णाम्। आऽ२यि। वरो ययो२३

* ऊ० गा० १९प्र० १ख० १९सा०।

४ह्वायि। निमा३मा५दा६५६॥(२) सवोरोदचा३साध

ना:। वियस्तस्तम्भरो१दा३मायि। हरि:। पवा३यि।

त्रे३आव्या३ता। आऽ२यि। वेधानयोर२३४ह्वायि। नि

मा३मा५दा६५ईम्(३)॥२०*॥१५

॥उरुत्रयम्॥ प्रत्नुंवानायअन्धमा:। मर्त्तोनवष्ट

तद्वा२३चा:। अपश्वानमराधा२३साम्। हतामखा२

म्। नाऽ२भृ। गा२। या२३४औहोवा। वा२३४औ

होवा। वा२३४५:॥(१) आजामिरत्केअव्यता। भुजे

नपुत्रओणा२३यो:। सरज्जारोनयोषा२३णाम्। वरोन

यो२। नाऽ२यिमा। सा२। या२३४औहोवा। दा

२३४५म्॥(२) सवोरोदत्रमाधना:। वियस्तस्तम्भरो

दा२३मायि। हरि:पवित्रेअव्या२३ता। वेधानयो२।

* क० ग्रा० १८प्र० १ख० २०गा०।

१ १ ३ ५र र ३ १ १
नाऽ २ यिमा । माराया २ ३ ४ औहोवा । हा २ ३
१ १
४ ५म्(३) ॥ २१* ॥ [१६]

२र १र २र १ २ १ २ १र
॥ काण्वरथन्तरम् ॥ प्रात्वानायअन्धसा । मर्त्तानवा ।
२ १ २ २ र र ३ ५र २ १र
ष्टाइतादाइचाः । अपश्वानमराधसा२३४मैहो । ह्वता
५ २ १ २ १ ३ २
मा२३४खाम् । नभूइआउवा२३ । ए३ । गवआ ॥(१)
२र र १ २ र १ २ १ २ १र २ १ २ २
आजामिरत्केअव्यता । भुजेनपूत् । त्वाइओणाइयोः ।
र र र ३ ५२ २ १र ५ २
सरञ्जारोनयोषणा२३३मैहो । वरोना२३४यो । निमाइ
२ २ ३ २ २र र १र २ १र २ १
१उवा२३ । ए३ । सदमा ॥(२) सावीरोदक्षसाधनाः ।
२ १ २ २ २ १ र ३
वियस्तस्ता । भाइरोदाइसायि । हरिःपवित्रे अव्यता
५र २र १र ५ २ २
२३४ऐहो । वेधाना२३४यो । निमाइ१उवा२३ । ए३ ।
२ ३ २
सदमा(३) ॥ ७† ॥ [१७] ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

* ऊ० गा० १६प्र० २ख० २१सा० ।
† ऊ० गा० २२प्र० २ख० ७सा० ।

अथ द्वितीय-खण्डे —

अभ्रातृव्यइति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

अभ्रातृव्यो अनात्वमनापिरिन्द्रजनुषासनादसि।

युधेदापित्वमिच्छसे॥ १*॥

हे "इन्द्र!" त्वं "जनुषा" जन्मनैव "अभ्रातृव्यः" ["व्यन् सपत्ने (४, १, ४५)"—इति व्यन् प्रत्ययः] सपत्न-रहित इत्यर्थः, "अना" अनेतृकः ["ऋतश्छन्दसि (५, ४, १५८)"-इति कपः प्रतिषेधः] अनियन्तृक इत्यर्थः, "अनापिः" बन्धु-वर्जितश्च, "सनादसि" चिरादेव भ्रातृव्यादि-वर्जितोऽसि, यत्र त्वया "आपित्व" बान्धवम् "इच्छसे" इच्छसि, तत्र "युधेत्" युद्धेनैव युद्धं कुर्वन्नेव स्तोतृणां सखा भवसि॥ १॥

अथ द्वितीया।

नकीरेवन्तꣳसख्यायविन्दसेपीयन्तितेसुराश्वः।

यदाकृणोषिनदनुꣳसमूहस्यादित्पितेवहूयसे॥ २†॥ ४

*, छ० आ०,५, १, २, १ (१भा० ८१६४०) = ऋ० वे० ६, २, ३, ४।
† ऋ० वे० ६, २, ३, ५।

हे इन्द्र! "रेवतं" केवल-धनवन्तं यागादि-रहित मयष्टार माढा मन्यं ,मानवं "सख्याय" सखिभावाय "न किः विन्दसे" न लभसे नाश्रयसीत्यर्थः। अयष्टारो जनाः किं सन्तीत्यतआह—"सुराश्वः" [टु ओ श्वि गति-वृद्ध्योः; सुरया वृद्धाः तद्वत्] प्रमत्त-नास्तिकाः। "ते" त्वां "पीयन्ति" [पीयति हिंसा-कर्मा] हिंसन्ति तवाश्रयतीत्यर्थः। "यदा" त्वं "नदनु" [नद अव्यक्ते शब्दे (भ्वा० प०)] यं स्तोतारं "कृणोषि" मदीयोऽयमिति यदा भावयसि, तदानीं संवहसि धनादिकं तस्मै वहसि। "आदित्" अनन्तरमेव तेन लब्धधनेन स्तोता "पिता इव" पालयिता जनक इव "हूयसे" स्तुतिभिराहूयसे स्तूयस इत्यर्थः॥ २॥ ४

॥ उक्ष्यामद्वीयवम्॥ अभ्रातृ३व्योअनातुवाम्। अनापाऽयिरा२यि। इजनुषासना२३दसायि। यूधेदापायि। त्वमा२३यिच्छसाउ। वा३॥(१) युधेदा३पित्वमिच्छसायि। नकायिरा१यिवा२। तऽसखियायवार३यिन्दसायि। पायियन्तितायि। सुरा२३ श्वाउ। वा३॥(२) पीयन्ता३यितेसुराश्ववाः। यदाकाऽणो२। षि

१ १ २ १ २
तदनु॒सम॒२३हसायि। आदित्यितायि। वह्२३यमा

२र १११
उ। वा३। स्तौषे३४५(३)॥ १०*॥ ४

आत्वासहस्रमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

१ २ ० ३ ३ ३ ३ २ १ १ २र ३ १ २
आत्वासहस्रमाशतंयुक्तारथेहिरण्यये।

२ २ ३ १ २ ३ २ ३१२ ३ १ २
ब्रह्मयुजोहरयइन्द्रकेशिनोवहन्तुसोमपीतये॥ १‡॥

हे "इन्द्र!" "त्वा" त्वां "सहस्रं" सहस्र-सङ्ख्याका "हरयः" त्वदीया अश्वाः "आ वहन्तु" आनयन्त्वस्मद्यज्ञं, तथा "शतं" शत-सङ्ख्याकाश्च भवदीयाश्वाः त्वामावहन्तु [ यद्यपि द्वावेवास्य हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति। ननु युगपदेनेकैरश्वैः कथं वाहयितुं शक्यत इत्यत आह—युक्ता इति ] "हिरण्यये" स्वर्ण-विकारे [ हिरण्य-शब्दाद् विकारार्थे विहितस्य मयटः "ऋत्व्यवास्त्व्य (६, ४, १७५)"—इत्यादौ म-लोपो निपात्यते ] तादृशे "रथे" "युक्ताः" सम्बद्धाः [ बहूनामश्वानां शीघ्र-गमनाय रथे नियुक्तत्वाद् युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः ]। कीदृशा हरयः? "ब्रह्म-

* ऊ० गा० ७प्र० १ख० १०गा०

† "अभीवर्त" "स्तोत्रीयम्'—इति वि०।

‡ छ० आ० ३, १, १, २ (३भा० ५०पृ०) = ऋ० वे० ८, ७, १४, ४।

युजः" ब्रह्मणा परिवृढेणेन्द्रेण युक्ताः [ यद्वा, ब्रह्मणास्मदीयेन स्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः ] "केशिनः" केशाः सटाः तैर्युक्ताः। किमर्थम् इन्द्रस्य वहनम्? तत्राह—"सोम-पीतये" सोमस्य पानाय यथास्मदीयं सोमं पिबेत्, तथा वहन्त्वि-त्यर्थः ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
आत्वारथेहिरण्ययेहरीमयूरशेप्या।

३ १ २ ३ १ ३ १ २ ३ १ २ ३ १ २
शितिपृष्ठावहतांमध्वोअन्धसोविवक्षणस्यपीतये ॥ २* ॥

[ पूर्वं हर्यो विभूतिरूपा अश्वाः इन्द्र मावहन्त्विति प्रार्थि-तम्, अधुना तावेवेन्द्र मावहतामिति प्रार्थ्यते—]"हिरण्यये" हिरण्मये "रथे" युक्तौ "मयूरशेप्या" मयूरवर्णः शेपो ययोस्तौ [ सुपां सुलुगिति (७,१,३९) विभक्तेर्डादेशः ] "शितिपृष्ठा" श्वेतपृष्ठौ† एवम्भूतौ "हरी" अश्वौ हे इन्द्र! "त्वा" त्वाम् "आ वहताम्"। किमर्थम्? "मध्वः" मधुर-रसस्य "विवक्षणस्य" वक्तुमिष्टस्य स्तुत्यस्य‡ यद्वा वोढव्यस्य प्राप्तव्यस्य "अन्धसः" अन्नस्य सोमरूपस्य "पीतये" पानार्थम् ॥ २ ॥

* ऋ० वे० ५, ७, १४, ५।

† 'शितिपृष्ठा—नीलपृष्ठौ'—इति वि०।

‡ 'अतिशयेन विवर्धितभूतस्य'—इति वि०।

अथ तृतीया।

२ ३ १ १ २ ३ १ २ ३ १ २

पिबात्वा३स्यगिर्वणः सुतस्य पूर्वपाइव।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २

परिष्कृतस्यरसिनइयमासुतिश्चारुर्मदायपत्यते॥ ३* ॥ ५

हे "गिर्वणः" गीर्भिर्वननीयः स्तुतिभिः सम्भजनीयेन्द्र! "सुतस्य" अभिषुतस्यास्य सोमस्य [क्रियाग्रहणं कर्त्तव्य मिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी (२,३,६२)] इम मभिषुतं सोमं "नु" क्षिप्रं "पिब"। तत्र दृष्टान्तः—"पूर्वपाइव"† [पूर्वः पूर्वेभ्यो देवेभ्यः प्रथमभावी सन् पिबतीति पूर्वपा वायुः, सहीन्द्रवायवे मुख्ये ग्रहे सर्वेभ्यो देवेभ्यः पूर्वं पिबति "यस्य देव दधिषे पूर्वपेयम्"—इति निगमान्तरम्; तादृशः] वायुरिव त्वमपि सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः। कीदृशस्य सोमस्य? "परिष्कृतस्य" अभिषवादिभिः संस्कृतस्य ["सम्पर्युपेभ्यः (६,१,१३८)"—इति करोतेर्भूषणे सुट्, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम्], "रसिनः" रसवतः। अपिच "इयमासुतिः"‡ अयमासवो मदकरः "चारुः" शोभनः सोमरसः "मदाय" हर्षाय हर्ष-जननाय "पत्यते" सम्पद्यते [पत्लृ गतौ (भ्वा॰ प॰), यद्वा पत्यतिरैश्वर्य्य-कर्मा। मदाय—मदस्य पत्यते इष्टे मदोत्पादने शक्त इत्यर्थः]॥ ३॥ ५

---

* ऋ॰ वे॰ ५, ७, १४, १।

† 'पूर्वपातारो ये ते यथा पिबन्ति तद्वत् पिबन्त'—इति वि॰।

‡ 'आसुतिरापतितिरित्यर्थः'—इति वि॰।

॥ अभीवर्त्तम् ॥ आत्वा३सा२हस्रमाशतोवा । यूक्ता रथे । हिराण्या१या२यि । ब्राह्मयुजौ३१२३४ । हरय इ । न्द्रकायिशा१यिना२ः । वहान्त्व१सोर२ । मपा३यि । ता२३४५यि ॥(१) आत्वा३रा३थायिहिरण्ययोवा । हारी मयू । रशायिपा१या२ । यितिपृष्ठा३१२३४ । वहता म्मध्वोआन्धा१सा२ः । विवाक्षा१णा२ । स्यपा३यि । ता २३४५ । या२३४५यि ॥(२) पिबा३तू३वस्यगिर्वणोवा । स्सुतस्यपू । र्वपाआ१यिवा२ । पारिष्कृता३१२३४ । स्य रसिनइ । यमाम्स३ता२यिः । चारुर्मा१दा२ । यपा३ । त्या२३४५ । ता२३४५यि(३) ॥ १५* ॥ १

॥ भारद्वाजम् ॥ आत्वासहा । स्रमाशा१ता२म् । यूक्तारथेहिरण्यये । ब्रह्मायू१जा२ः । हा,रयइ । न्द्रका

* ऊ० गो० ७प्र० १ख० १५सा० ।

यिम्राश्यिना २:। वहान्नू१सो२३। मा२पा२३४औहो
वा। ता२३४य॥(१) आत्वारथायि। हिराण्या१या२
यि। हारीमयूरशेप्या। भ्रितायिपा१ष्ठा२। वाहता
म्म। प्वोभ्रान्धा१सा२:। विवाचा१णा२३। स्वा२पा२
३४औहोवा। ता२३४ये॥(२) पिबातुवा। स्यगायिर्वा
१णा२:। हतस्यपूर्वपाइव। परायिष्का१र्त्ता२। स्वार
सिनइ। यमाह्व१ता२यि:। चारुम्मा१दा२३। या२पा
२३४औहोवा। त्यो२३४ते(३)॥ १२*॥ २

॥ अभिनिधनं काण्वम्॥ औहौहोहायि। आयाही।
आत्वा। सा२३४हा। स्रामाभ्रा२३४ताम्। यूक्तारा२३४थायि।
हीरण्ययायि। ऐहोयि। आ२३४यिही। भ्राऽस्मायू२३
४जो। हारायारा२३४ई। द्राकेभ्रिनाः। ऐहोयि। आ

* औ० गा० १८प्र० २ख० ११गा०।

५ २ ३ ५ ३ २ ४
२३४यिही। वा इन्द्व२३४सो। मपाइयितापयाइ५ईयि॥(१)

२र १ २ १ २ १ २ ३ ५
औहोहोहायि। आयिही। आत्वा। रा२३४थायि।

२ ३ ५ २ ३ ५ २र १र
हायिरण्या२३४यायि। हारीमा२३४यू। राशेपिया।

१र १ ३ ५ २ ५ २
ऐहोयि। आ२३४यिही। मायितायिपा२३४र्षा। वा

३ ५ २र १ २र १ ३
हाता२३४म्मा। ध्वोअन्धसाः। ऐहोयि। आ२३४यि

५ २ ३ ५ ३ २ ४
ही। वायिवन्ता२३४णा। स्यपाइयितापयाइ५ईयि॥(२)

२र १ २ १ २ १ २ ३ ५
औहोहोहायि। आयिही। पायिबा। तूर३४वा।

२ ३ ५ १ ३ ५ २र १र २र १
स्यागिर्वा२३४णाः। सूतस्या२३४पू। र्वपाइवा। ऐहो

३ ५ २ ३ ५ २ ३
यि। आ२३४यिही। पारिष्का२३४र्त्ता। स्यारासीर२३

५ २ १र २र १ १ ५ २
४नाः। इयमासुतायि। ऐहोयि। आ२३४यिही। चा

३ ५ ३ २ ४ ३
रुर्म्मार३४दा। यपाइत्यापूता ६ ५ ६ यि। आ२३४

५
भी(३)॥३*॥[३]५

---

* ऊ० गा० १२प्र० ३ख० ३सा०।

अथ आसोतेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १र २र ३ १ २ ३ १ २
आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम् ।
३ १ २ ३ १ २
वनप्रक्षमुदप्रुतम् ॥ १ * ॥

हे ऋत्विज! "आसोत" सोमम् अभिषुणुत [ षुञ् अभिषवे (स्वा० उ० ), लोटि छान्दसो ( २, ४, ७२ ) विकरणस्य लुक्, "तप्तनप्तनथनाश्च ( ७,१,४५ )"—इति तस्य तबादेशः] । किञ्च, "परिषिञ्चत" परितस्तं वसतीवर्यादिभिः सिञ्चत । कीदृशम् ? "अश्वं न" अश्वमिव वेगिनं "स्तोमं" स्तोतव्यम्, "अप्तुरम्" अन्तरिक्षस्थितानामुदकानां प्रेरकम् "रजस्तुरं" तेजसां प्रेरकम्, "वनप्रक्षम्" उदकवत् चरणशीलम्, "उदप्रुतम्" उदके गच्छन्तं प्लवमानं सोममभिषुणुत अभिषिञ्चत च ॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ १ १ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रधारंवृषभम्पयोदुहम्प्रियन्देवायजन्मने ।
३ १ ३ २ ३ १ २ ३ १र ५र ३ २३ २ ३ २
ऋतेनयऋतजातोविवावृधेराजादेवऋतम्बृहत् ॥२†॥ ६

* छ० आ० ६, २, ४, ३ ( २भा० ११८४० ) = ऋ० वे० ७, ५, १८, २ ।

† ऋ० वे० ७, ५, १८, ३ ।

"सहस्रधारं" बहुधारोपेतं, "वृषभं" कामानां वर्षकं, "पयो-दुहं" चीरवत् सारभूतं रसं सिञ्चन्तं "प्रियं" प्रीणयितारं सोमं "देवाय" देव-सम्बन्धिने "जन्मने"* देवेभ्यस्तदर्थम् अभिषुणुत। "ऋतजातः" उदकाज्जातः "यः" "राजा" सोमः "ऋतेन" वसतीवर्याख्येनोदकेन "वि वावृधे" विशेषेण वर्द्धते। कीदृशः? "देवः" द्योतमानः स्तोतव्यो वा, "ऋतं" सत्यभूतः, "बृहत्" महान्। तमासुनुतेति पूर्व्वेण समन्वयः॥

"पयोदुहम्"-"पयोवृधम्"—इति पाठौ॥ २॥ ६

३र ४र ५र २र ३ ४ ५ ५
॥ वाचःसाम॥ आसोतापा। द्योरिषिञ्चता ६ ए।
१ २ र १ ७ १ २ ७
आश्वन्नस्तो। मामप्र राऽ२म्। राजस्तुरम्। वानप्रा
१ ४ २ ५
चा२३म्। ऊ२३द्दा३। प्र२३४५तो६५चाइ(१)॥१†॥ [१]
३र ४र ५र २र ३ २ ५ ५
॥ वाचःसाम॥ आसोतापा। द्यो। रिषिञ्चता६ए।
१ २ र १ ७ १ २ १ ७
आश्वान्नस्तो। मामप्रुराऽ२म्। राजस्तुरम्। वानप्रा
१ ४ २ ५ ३ ४ ५
चा२३म्। ऊ२३द्दा३। प्र३४५तो६चायि॥ (१) वनप्र
७ २ ३ ४ ५ ५ १ २ १ ७
चाम्। द्यौयि। उदप्र ता६मे। साचस्वधा। राम्वृ

* 'जन्मवतां मूलभूताय' इति वि०।

† ऊ० गा० १प्र० २अ० १भा०।

षभा२। पायोदुहम्। प्रायन्दायिवा२३। या२३जा३। न्मा३४५नोहाथि॥(२) प्रियन्देवा। हो। यजन्मनाइए। आर्त्तनयः। आर्त्तजाता२। वायिवावृधे। राजादा १ यिवा २ ३ः। आ २ ३ त्ता ३ म्। बृ३ ४ ५ हो ६ हायि(३)॥ १७ *॥ [२]

॥सफम्॥ आसोता३परि। षिञ्चा२३४ता। अ श्वन्नस्तोमा२म्। अप्तु रा२रा३जा३। स्तु३२ ३ ४राम्। वना। प्रत्ताम्३दा३। प्र ३४५नोहाथि॥(१) वनप्रा३ त्तमु। दप्र२३ताम्। सहस्रधारा२म्। वृषभाया३ यो३। दू३२३४हाम्। प्रियाम्। देवाया३जा३। न्मा ३४५नोहाथि॥(२) प्रियन्दे३वाय। जन्मा२३४नायि। ऋतेनयाआ२। तजातो३वा३यि। वा३ २ ३ ४र्धायि।

---

* ऊ० गा० ७प्र० १ख० १७गा०।

२ १ २ १   १र २ ४ २ ५
ऋतेनयाआ२। तजातोवा३यिवा३। वा३२३४ऽयि।
२ १र२ १   १ २ ४ २ ५
ऋतेनयाआ२। तजातो३वा३। यि। वा३२३४ऽयि।
२ र १   र २ ४ २ ५
राजा। देवाआ३ त्ता३म्। बृ३४५ हो ६हायि(३)

॥ १३* ॥ [३] ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे—

अग्निर्वृत्राणीति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ २ ३ १ २   ३ १ २ ३ १ १
अग्निर्वृत्राणिजङ्घनद्द्रविणस्युर्विपन्यया।
१ २ ३ १र २र
समिद्धःशुक्रआहुतः॥ १† ॥

"विपन्यया" सुस्तूयमानः "द्रविणस्युः" द्रविणं धनं स्तोतॄ-
णामिच्छन् [ यद्वा, हविर्लक्षणं धनमात्मन इच्छन् "अग्निः"

---

* ऊ० गा० १२प्र० १ख० १३सा० ।

† अ० ध्या० १, १, १, ४ ( १भा० ९८४० ) = ऋ० वे० ४, ५, २७, २ ।

"वृत्राणि" आवरकाणि रक्षः-प्रभृतीनि तमांसि वा "जङ्घनत्" हिंसन्तु। कीदृशोऽग्निः? "समिद्धः" सम्यक् दीप्तः अतएव "शुक्रः" शुक्लवर्णः "आहुतः" हविर्भिरभिहुतः॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ १ ३ १ २ ३ १ ३ १ २
गर्भंमातुःपितुष्पिताविदिद्युतानोअक्षरे*।
१ २ ३ २ १ २ ३ २
सीदन्नृतस्ययोनिमा॥ २†॥

[ अत्र मातृ-पितृ-शब्दाभ्यां भूद्यावौ अभिधीयेते "द्यौः पिता, पृथिवी मातेति श्रुतेः ] "मातुः" भूम्याः गर्भे" गर्भस्थाने मध्ये "अक्षरे" क्षरण-रहिते वेद्याख्ये स्थाने‡ "वि दिद्युतानः" विशेषेण दीप्यमानः "पितुः पिता" द्युलोकस्य पालयिता हविषां प्रदानेन, एवम्भूतोऽग्निः "ऋतस्य" यज्ञस्य "योनिम्" उत्तरवेद्याख्यं "धिष्णं" [सप्तम्यर्थे द्वितीया (३, १, ८५)] "आसीदन्" उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जङ्घनदित्यन्वयः॥ २॥

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
ब्रह्मप्रजावदाभरजातवेदोविचर्षणे।
१ ३ १ ३ १ २ १ २
अग्नेयद्दीदयद्दिवि॥ ३¶॥ ७

* "अक्षरम्"—इति क० पु० पाठः।

† ऋ० वे० ४, ५, २७, ४।

‡ 'अक्षरे—अक्षीयमाणे स्थाने'—इति वि०।

¶ ऋ० वे० ४, ५, २७, ५।

हे "जातवेदः" जातानां वेदितः ! "विचर्षणे" विशेषेण द्रष्टः अग्ने ! "प्रजावत्" पुत्र-पौत्र-सहितं "ब्रह्म" अन्नम् "आ भर" आहर "यद्" ब्रह्म "दिवि" द्युलोके "दीदयत्" दीप्यते। देवेषु यत् प्रशस्तमन्नं राजते तदाहरेत्यर्थः ॥ ३ ॥ ७

अस्यप्रेषेति त्रृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

३ २ ३ २ ३ १ २ ३ १ २
अस्यप्रेषाहेमनापूयमानो
३ २ ३ २ ३ १ २ ३ १ २
देवोदेवेभिःसमपृक्तरसम् ।
३ २ ३ २ ३ १ २ ३ १ २
सुतःपवित्रम्पर्येतिरेभन्
३ २ ३ १ २ ३ २ ३ १ २
मितेवसद्मपशुमन्तिहोता ॥ १* ॥

"अस्य" सोमस्य "प्रेषा" [ प्रेषतिर्गत्यर्थः क्विपि रूपं, "सावेकाच ( ६,१,१६८ )"—इति विभक्तेरुदात्तत्वम् ; ] प्रेरणेन, "हेमना" हिरण्येन "पूयमानः"[ "हिरण्यपाणिरभिषुणोति"—इति हिरण्य-सम्बन्धः, तादृशः] "देवः" दीप्यमानः सोमः "रसम्" आत्मीयं "देवेभिः" देवैः सह "समपृक्त" सम्पर्चयति संयोजयति [पृची सम्पर्के (अदा०आ०)] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं "पर्येति"

---

* ऋ० वा० ६, १, ७, ४ ( २भा० ११५पृ० ) = ऋ० वे० ७, ४, ११, १ ।

परिगच्छति। कमिव? "होता" देवानामाह्वाता ऋत्विक् "मिता इव" निर्मितान् "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान् यथा पर्य्येति तद्वत् ॥ १ ॥

अथ द्वितीया।

भद्रावस्त्रासमन्या॒ऽ३ऽवसानो
महान्कविर्न्निवचनानिशꣳसन्।
आवच्यस्वचम्वोःपूयमानो
विचक्षणोजागृविर्द्देववीतौ ॥ २* ॥

"भद्रा" भद्राणि कल्याणानि "समन्या" [समनमिति सङ्ग्राम-नाम (२, १७, १६), तत्र साधुरिति यत्] सङ्ग्राम-योग्यानि "वस्त्रा" वस्त्राणि आच्छादकानि तेजांसि "वसानः" आच्छादयन् "महान्" "कविः" क्रान्तदर्शी अतएव "निवचनानि" नितरां वक्तव्यानि स्तोत्राणि† "शंसन्" "विचक्षणः" विशेषेण सर्वस्य द्रष्टा "जागृविः" जागरणशीलः। हे सोम! एवम्भूतस्त्वं "देववीतौ" देवानां वीतिर्भक्षणं यस्मिन् तद्देववीतिर्यज्ञः तस्मिन् "चम्वोः" अधिषवण-फलकयोः‡ "आ वच्यस्व" पात्राण्यागच्छ [वचिर्गत्यर्थः (भ्वा० प०) व्यत्ययेन श्यन्] ॥ २ ॥

* ऋ० वे० ७, ४, ११, २।

† 'वचनानि—ऋग्यजुः-साम-लक्षणानि'—इति वि०।

‡ 'चम्वोः—अधिषवण-चर्मणोरुपरि'—इति वि०।

अथ तृतीया।

१ २ ३ १ २ ३ २ ३ १ २
समुप्रियोमृज्यतेसानोअव्ये

३ १ २ १ २ ३ १ २ ३ २
यशस्तरोयशसाङ्क्षैतोअस्मे।

२ १ २ ३ १ २ ३ १ २ ३
अभिस्वरधन्वापूयमानो

३ १ २ ३ २ ३ १ २
यूयम्पातस्वस्तिभिःसदानः॥ ३ *॥ ८

"यशसां" यशस्विनां मध्ये "यशस्तरः" अतिशयेन यशस्वी "क्षैतः" क्षितो भावः "प्रियः" प्रीणयिता सोमः "सानौ" समुच्छ्रिते "अव्ये" अवि-भवे पवित्रे "अस्मे" अस्मदर्थं "सम्मृज्यते" ऋत्विग्भिः परिपूयते "उ" [—अवधारणे] "पूयमानः" त्वं "धन्वा" अन्तरिक्षे "अभि स्वर" अभितः शब्दय "यूयम्" [प्रजायां बहुवचनम्†] हे सोम! त्वं "नः" अस्मान् "स्वस्तिभिः" कल्याणतमैः पालनैः "सदा" सर्वदा "पात" रक्षत पालयेत्यर्थः॥ ३॥ ८

२ २ ३ २ ३२
॥ उद्भवायिवासिष्ठम्॥ उद्भवायि। अस्या३ ४औ

४२ ५ १२ २ १ २ २ ३ ४ ५ ३२ २ ३२
होवा। प्रेषा। हे३मना। पूयमानाः। देवा३४औ

४२ ५ १२ २ १ २ २ ४ ५ ३ २
होवा। देवायि। भी३ःसम। पुक्षरसाम्। सुता३

* ऋ० वे० ७, ४, ११, ३।

† 'यूयं पात—बहुवचनमिदं सह देवैरित्यर्थः'—इति वि०।

२र र १ १र १ २ ३४५ ३१
४औहोवा। पवायि। आ३परि। एतिरेभान्। मिता

३र र ५ १ २ १ २ २ ४
३४औहोवा। वसा। द्मा३पशु। मा३४३। तौ२हो

३ १ ३र र४ ५ १ ११
५ता६५६ ॥(१) भद्रा३४औहोवा। वस्त्रा। समनि।

२ ३४ ५ ३ १ ३र ४र ५ १ ११
यावसानाः। महा३४औहोवा। कवायिः। निवच।

२ ३ ४ ५ ३र २ ३र ४र १ २ १ र
नानिमृ५सान्। आवा३४औहोवा। चस्त्रा। चमुषोः।

२ ३ ४ ५ ३ २ ३र ४र ५ १ १र १
पूयमानाः। विचा३४औहोवा। रणो। जागृविः।

१ २ ४ ३ २ ३र ४र ५
दा३४३यि। वा३चा५यिता६५६उ ॥(२) समू३४औहोवा।

१ २ १ र २ ३र ४ ५ ३ २ ३र ४र ५
प्रियो। मृज्यते। सानोअव्यायि। यशा३४औहोवा।

१ ११ र २ ३र ४ ५ ३ २ ३र ४र ५
स्तरो। यशसाम्। चैतोअस्मायि। अभा३४औहोवा।

१ २ १ र २ ३ ४ ५ ३ २ ३र २ ४ ३र
स्वरा। धनुवा। पूयमानाः। उज्ञवायि। यूया३औ

४र ५ १र २ १ १ २ ४
होवा। पाता। स्ववस्ति। भा३४३यिः। सा३दा५

ना६५६(३) ॥ ६ * ॥ [१] ८

---

* ऊ० गा० ७प्र० २ख० ६सा०

अथैतोन्विन्द्रमिति त्र्यृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१२ १२ १२ ३१ २१२३१ २
एतोन्विन्द्रꣳस्तवाम शुद्धꣳशुद्धेनसाम्ना।

२ ३१ २ ३ २ ३१ २ ३१२ ३ १ २
शुद्धैरुक्थैर्वावृध्वाꣳसꣳशुद्धैराशीर्वान्ममत्तु॥ १ *॥

[ अत्रेतिहासमाचक्षते—पुरा किलेन्द्रो वृत्रादिकान् असुरान् हत्वा ब्रह्महत्यादि-दोषेणात्मान मपरिशुद्ध मित्यमन्यत अथ तद्दोष-परिहारार्थं यदेन्द्र ऋषीनवोचत्—यूय मपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति। ततस्ते च शुद्धाशुद्धीयाख्येन साम्ना अस्यैव परिशुद्ध मकार्षुः। पश्चात् पूतायेन्द्राय यागादि-कर्मणि सोमादीनि हवींषि च प्रादुरिति। एषोऽर्थः शाट्यायनक-ब्राह्मणे प्रतिपादितः—"इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्यो अमन्यत सोऽकामयत शुद्धमेवमासन्नं शुद्धेन साम्ना स्तुयुरिति स ऋषीनब्रवीत् स्तुतमिति ततएव ऋषयः सामापश्यन् तेनास्तुवन्नेतोन्विन्द्रमिति ततो वा इन्द्रः पूतः शुद्धो मेध्यो भवदिति। तथाच अस्या ऋचोऽयमर्थः—] ऋषयः परस्परं ब्रुवन्ति—"नु" क्षिप्रम् "एत उ" आगच्छतैव। आगत्य च "शुद्धेन" शुद्धाशुद्धीयाख्येन साम्ना, तथा "शुद्धैः" शुद्धि-हेतुभिः "उक्थैः" अस्यैव इन्द्रम् शुद्धमपापिनं कृत्वा "स्तवाम" स्तुयाम। ततः "साम्ना" अस्यैव "वावृध्वांसं" पाप-राहित्येन वर्द्धमानं तमिममिन्द्रं "शुद्धैः"

---

* ऋ० सं० ४, २, १, ९ (१भा० ७१४पृ०) = ऋ० वे० ६, ६, ११, २।

शुद्धत्पादकैर्गव्यादिभिः "आशीर्वान्" आश्रयणवान् [ "छन्दसीरः (८, २, १५)"—इति मतुपो वत्वम्, तादृशः सोमः ] "ममत्तु" तमिन्द्रं मादयतु [ माद्यतेश्छान्दसः (२,४,७६)श्लुः ] ॥

"शुद्धैराशीर्वान्"-"शुद्धआशीर्वान्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २
इन्द्रशुद्धोनआगहिशुद्धःशुद्धाभिरूतिभिः।

३ २ ३ १र २र ३ १ २
शुद्धोरयिन्निधारयशुद्धोममद्धिसोम्य ॥ २ * ॥

हे "इन्द्र!" "शुद्धः" अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं "नः" अस्मान् "आ गहि" आगच्छ "शुद्धाभिः" "ऊतिभिः" ऊतयो मरुतः [ अवन्ति सर्वत्र गच्छन्तीति वा ] तेऽपि सामभिः शस्त्रैश्च परिपूताः तैः मरुद्भिः सह "शुद्धः" पाप-रहितः त्वम् आगहि। आगत्य च "शुद्धः" त्वं "रयिं" धनं अस्मासु "निधारय" अतितरां स्थापय। किञ्च, हे "सोम्य" सोमार्ह! "शुद्धः" त्वं "ममद्धि" सोमेन माद्य [ मदी हर्षे (दि० प०) लोटि "बहुलञ्छन्दसि" ( २, ४, ७६ )"—इति शपः श्लुः ] ॥

"ममद्धिसोम्य"-"ममद्धिसोम्यः"—इति पाठौ ॥ २ ॥

---

* ऋ० सं० ६, ६, ३१, २।

अथ तृतीया।

१ २ ३ १र० २र ३ २ ३ १र १र ३ १ २
इन्द्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे।
३ २ ३ १ २ ३ १र २र
शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि॥ ३ * ॥ ९

हे "इन्द्र!" "शुद्धः हि:" [—अवधारणे†] शुद्धएव त्वं "नः" अस्मभ्यम् "रयिं" धनं प्रयच्छ। तथा "शुद्धः" त्वं "दाशुषे" हविर्दत्तवते यजमानाय "रत्नानि" रमणीयानि कनक-गवादीनि देहि। ततः "शुद्धः" पाप-रहितः त्व "वृत्राणि" अपामावरकान् कर्म-विघ्नकारिणं शत्रून् पापानि वा "जिघ्नसे" हंसि। ततः "शुद्धः" शत्रु-हनन-दोष- परिहाराय अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं वाजमन्नमस्मभ्यं "सिषाससि" प्रदातुमिच्छसि ‡ [यदा शत्रूनहं हन्यां तदा शुद्धत्यादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेत्येवमस्मभ्यं धनमन्नञ्च दातुमिच्छसीत्यर्थः]॥ २॥९

२र र १
॥ शुद्धाशुद्धीयोत्तरम्॥ एतोन्विद्रंस्तवा३मा। शु
२ १ १ २ २ १र
द्धंशुद्धे। न। साम्ना२। शुद्धायिद्ध३क्था३यिः। वा
१ ५ २ १र २ १ २ १
वार्द्धार३४ंसाम्। शुद्धैरा२३श्री। वान्ममत्तु। इडा

---

* ऋ० वे० ६, ६, ११, ५।

† 'हि समादर्थे, शुद्धस्त्वं यस्मात् रयिं धनं शुद्धं निधारय' -इति वि०।

‡ 'सिषासति—साधयसि'—इति वि०।

२३ ॥(१) इन्द्रश्रुद्दोनआगा३च्छी। श्रुद्दःश्रुद्दा। भिद्ध। तायिभा२यिः। श्रुद्दोरा३यो३म्। निधा२रा२३४या। श्रुद्दोमा२३मा। धीसोमिय। इडा२३ ॥(२) इन्द्रश्रुद्दो चिनोरा३यो३म्। श्रुद्दोरत्नानिदा। श्रूषा२यि। श्रुद्दो वा३र्चा३। णिजा२म्ना२३४साथि। श्रुद्दोवा २ ३ जाम्। सायिषास्सि। इडा २ ३ भा ३ ४ ३। ओ २ ३ ४ ५ई। डा(३) ॥ १२ * ॥ [१] ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

तृतीयः खण्डः ॥ २ ॥

---

अथ चतुर्थ-खण्डे—

अग्नेस्तोममिति तृचात्मकं सूक्तम्,

तत्र प्रथमा।

अग्ने स्तोमम्मनामहे सिद्धमद्यदिविस्पृशः।

देवस्यद्रविणस्यवः ॥ १ † ॥

---

* ऊ० गा० ७प्र० २अ० १२मा०।

† ऋ० सं० ४, १, ५, २।

"द्रविणस्यवः" द्रविणं धनमिच्छन्तो वयं "दिविस्पृशः" सूर्यरूपेण आकाशं व्याप्नुवतो "देवस्य" द्योतमानस्य "अग्नेः" "सिद्ध" पुरुषार्थानां साधकं "स्तोमं" स्तोत्रम् "अद्य" अस्मिन्नहनि "मनामहे" ब्रूमः ॥ १ ॥

अथ द्वितीया।

१ १ १ २ २ ३ २ ३ १र २र३ २
अग्निर्जुषतनोगिरोहोतायोमानुषेष्वा।
१ २ ३ १ २ १ २
सयक्षद्दैव्यञ्जनम् ॥ २ * ॥

"होता" देवानामाह्वाता होम-निष्पादको वा "अग्निः" "मानुषेषु" "आ" वसति। "यः" अग्निः "नः" अस्माकं "गिरः" स्तुतीः "जुषतां" सेवताम् "सः" अग्निः "दैव्यं जनं" देव-सम्बन्धिनं जनं† "यक्षत्" यजतु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ १ ३ २ ३ २ ३ १ २
त्वमग्नेसप्रथाअसिजुष्टोहोतावरेण्यः।
१ २ ३ १र २र
त्वयायज्ञंवितन्वते ॥ ३ ‡ ॥ १०

---

* ऋ० वे० ४, १, ५, ३।

† 'दैव्यं जनं—देवानां स्वभूतं वसु-रुद्र-मरुत्-प्रभृतिकं जनम्'—इति वि०।

‡ ऋ० वे० ४, १, ५, ४।

हे "अग्ने!" "जुष्टः" सर्वदा प्रीतः "वरेण्यः" सर्वैर्वरणीयः "होता" त्वं "सप्रथाः असि" सर्वतः पृथुर्भवसि। [तथाहि यास्कः— "सप्रथाः सर्वतः पृथुः (निरु० नै० ६,७)"—इति]। किञ्च, सर्वे यजमानाः "त्वया" साधनेन "यज्ञं" "वि तन्वते"* ॥ ३ ॥ १०

अभित्रिपृष्ठमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

२ १ २ ३ १र ३ १
अभित्रिपृष्ठंवृषणंवयोधा
३ ३ १ २ ३ १ २
मङ्गोषिणमवावशन्तवाणी।
२ ३ १ २ ३ १ २ ३ १२ ३ ३
वनावसानोवरुणोनसिन्धु-
१ २ ३ १ २ ३ १ २
र्विरत्नधादयतेवार्याणि ॥ १ ‡ ॥

"त्रिपृष्ठं" त्रीणि पृष्ठानि स्तोत्राणि सवनानि वा यस्य स तथोक्तस्तं "वृषणं" वर्षकं "वयोधाम्" अन्नस्य दातारम् "अङ्गोषिणम्" अपोषवन्तं सोममभिलक्ष्य "वाणीः" स्तोतॄणां वाचः "अवावशन्त" शब्दायन्ते। "वना" वनानि उदकानि "वसानः" आच्छादयन् "वरुणो न" वरुणो यथा सिन्धूनाच्छादयति तद्वत्।

---

* 'ऋत्विजः विस्तारयन्ति'—इति वि०।

† 'पञ्चमस्याह्नः समाप्त्या'मध्यन्दिनम्'—इति वि०।

‡ छ० आ० ५, १, ४, ६ ( २भा० १२० पृ० )=ऋ० वे० ७, ३, २६, २।

"सिन्धुः" स्यन्दनशीलः, "रत्नधाः" रत्नानां दाता सोमः "वार्य्याणि" धनानि "दधति" प्रयच्छति स्तोतृभ्यः ॥

"अङ्गोषिणम्"-"अङ्गूषाणम्"—इति पाठो, "सिन्धुः"-"सिन्धून्"—इति च ॥ १ ॥

अथ द्वितीया ।

१ २   ३ १ २   ३ १ २ ३
शूरग्रामः सर्ववीरः सहावान्

१ २   ३ १ २ ३ १ २
जेता पवस्व सनिता धनानि ।

३ १ २   ३ १ २   ३ १र
तिग्मायुधः क्षिप्रधन्वा समत्सु

२र   ३ १र   ३र ३ १ २
अषाढः साह्वान् पृतनासु शत्रून् ॥ २* ॥

हे सोम ! त्वं "पवस्व" । कीदृशस्त्वम् ? "शूरग्रामः" शूराणां ग्रामः सङ्घो यस्य सः, "सर्ववीरः" सर्वे वीरा यस्य स तथोक्तः, "सहावान्" सहनवान् "जेता" जयशीलः "सनिता" सम्भक्ता "धनानि" धनानां, "तिग्मायुधः" तीक्ष्ण-प्रहरण-साधनः,† "क्षिप्रधन्वा" क्षिप्र-सहनशील-धन्वा, "समत्सु" सङ्ग्रामेषु "अषाढः" असोढ़ा, "साह्वान्" अभिभवन् । कुत्र ? "पृतनासु" शत्रु-सेनासु । कान् ? "शत्रून्" ॥ २ ॥

---

* ऋ० वे० ७, ३, २६, २ ।

† 'तीक्ष्णायुधः—असि-परशु-पाश-प्रभृतिभिरायुधैः सम्पन्नः'—इति वि० ।

अथ तृतीया ।

३ १ २ ३ १ २ २ १
उरुगव्यूतिरभयानिकृण्वन्
२ ३ १र २र ३ १ २
त्समीचीनेआपवस्वापुरन्धी ।
३ १र २र ३ २ ३ १र १र
अपःसिषासन्नुषसःस्वा*ऽ३ऽर्गाः
२र ३ २ ३ २ ३ १ २
सञ्चिक्रदोमहोअस्मभ्यंवाजान्॥ ३† ॥ ११

हे सोम ! "उरुगव्यूतिः" विस्तीर्ण-मार्गः त्वम् "उभयानि" स्तोतृभ्यः "कृण्वन्" कुर्वन्, "पुरन्धी"‡ इमे द्यावापृथिव्यौ "समीचीने" सङ्गते कुर्वन्, "आ पवस्व" आक्षर । "अपः" "उषसः" "स्वः" आदित्यं "गाः" रश्मींश्च "सिषासन्" सम्भक्तुमिच्छन् "सं चिक्रदः"¶ सङ्क्रन्दसे । "महः" महतः महान्ति "वाजानि" अन्नानि अस्मभ्यं दातुमिति शेषः ॥ ३ ॥ ११

॥ सम्पावेयश्वम् ॥ ओ३हायि । ओ३हा । ओहा ।
१ ५ २ २ २ २ १ २ ३
हुयार । ओ३हा३ए । अभिन्निपा । छा३वुष । णास्व

* "स्व"—इति ख॰ पाठः ।

† ऋ॰ वे॰ ७, २, २६, ७ ।

‡ 'पुरं धारयितः'—इति वि॰ ।

¶ 'चिक्रदः—शब्दं कुर्वन—इति वि

४ ५ योधाम्। २ १र अक्षोषिणाम्। २ १र यवाव। २ ३ ४ ५ ग्रम्नवाणीः। २ व
१र नावसा। २ १ नो३वह। १ २ ४ ५ णौनसिधूः। १ विरत्मधाः। २ १ हय
र ते। १ वा३४३। २ ४ रीया५णाई५६यि॥(१) १र १ र प्ररग्रामाः।
२ १र सर्वंवी। १ २ ४ ५ रःसहावान्। १र १र जेतापवा। १ १ स्वा३सनि। १ ता
३ ४ ५ धनानी। १ १र तिग्मायुधाः। १ १ क्षिप्रध। २ ३ ४ ५ न्वासमत्सु। २ १र अषा
ढःसा। २ १ क्षा३न्युत। १ ना३४३। १ ४ सू३श्रा५त्रू६५६न्॥(२)
१ १ उरुगव्य। २ ती३भर। १ २ ४ ४ यानिक्ष्णवान्। २ १र र समीचीने।
२ १ आ३पव। २ ३ ४ ५ स्वापुरन्धी। १ १ अपःषिषा। २ १ सा३नुष। १ सः
३ ४ ५ सुवर्गाः। १ १ ओ३हायि। १ १ ओ३हा। २र २ ओहा। १ हया२।
४ २ २ चो३हा३ए। १ सञ्चिक्रदो। १ र महोप। १ म्मा३४३। १ भ्या
४ वा५जा६५६न्(३)॥ १७* ॥ [१] ११

* ऋ० मा० ७म० १म० १०सा०।

अथ त्वमिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २र ३ १ २
त्वमिन्द्रयशाअस्यृजीषीशवसस्पतिः ।

२ ३ १ २ १ २३ ३ १ ३ १ २ ३ १ २
त्वंवृत्राणिहꣳस्यप्रतीन्येकइत्पूर्वनुत्तश्चर्षणीधृतिः ॥ १* ॥

हे "इन्द्र ! "त्वं" "शवसस्पतिः" शवसोऽन्नस्य बलस्य वा पालयिता, "ऋजीषी" ऋजीषोऽभिषुतः सोमः तद्वान्, त्वं "यशा असि" यशस्वी भवसि । कथमस्य यशस्वित्वं ? तदाह— "अप्रतीनि" बलिभिरपि अप्रतिगतानि "वृत्राणि" रक्षांसि "अनुत्तः" अन्यैर्नेतुमशक्यः त्वम् "एकइत्" एकएव असहाय एव "चर्षणीधृतिः" रक्षकत्वेन यजमानादि-मनुष्याणां धारकः "पुरु" बहुलं यथा भवति तथा "हंसि" सम्प्रहरसि । अतएवास्य यशस्वित्वम् ॥

"शवसस्पतिः"-"शवसस्पते"—इति पाठौ, "इत्पूर्वनुत्तश्चर्षणीधृतिः"—"नएकइदनुत्ताचर्षणीधृता"—इति च ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
तमुत्वानूनमसुरप्रचेतसꣳराधोभागमिवेमहे ।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
महीवकृत्तिःशरणातइन्द्रप्रतेसुम्नानोअश्नवन् ॥ २† ॥१२

* छ० आ० ३, २, १, ६ (१ भा० ५११पृ०)=ऋ० वे० ६, ६, १३, ५ ।

† ऋ० वे० ६, ६, १३, ६ ।

हे "असुर" बलवत्! प्राणवत्! वा हे "इन्द्र!" यः उक्त-गुणोऽस्ति "तं" च "प्रचेतसं" प्रकृष्ट-ज्ञानं "त्वा" "उ"[—इत्यव-धारणे] पितृवत् पोषकं त्वामेव "राधः" धर्मादि-साधनं धनं "नूनम्"*इदानीम् "ईमहे" याचामहे। तत्र दृष्टान्तः—"भाग-मिव" यथा कश्चित् पितृतो भागभूतं धनं याचते, तद्वत्; इन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्मात् भागभूतं धनं यष्टारो वयं याचामहे। किञ्च हे इन्द्र! "महीव कृत्तिः" [कृत्ति र्यशोऽन्नं वा कृतीच्छेदने (रु० प०) करणे क्तिन्। कृतन्त्यनेनेति, इति यास्को] कृत्तिरिव "ते" तव "शरणा" शरणं गृहम् अन्तरिक्षं द्युलोके महद् वर्त्तते [अत्र यास्कः—"कृत्तेर्यशोवान्नं वा। महीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव (निरु० नै० ५, २२)"—इति]। किञ्च, "ते" तव स्व-भूतानि "सुम्ना" सुम्नानि मन्त्रादि-विषय-सुखानि च "नः" अस्मान् "प्राश्नुवत्" प्रकर्षेणाश्नुवतां व्याप्नुवन्तु [अश्नोतेर्लेट्यडागमः (३, ४, ९४)]॥ २॥ १२

॥ अभीवर्त्तम्॥ तुवा३मा३यिन्द्रयशा३असोवा। आ ज्जीषीम। वसास्या१ता२रयिः। त्ववम्बृचा३१२३४। णि चछ्यप्रतीनिए। कआयित्पू१रू२। 'अनूत्ता१आर२। षणा३यि। धार३४५। तार३४५यिः॥(१) अनू३त्ता३श्व

* 'निश्चितम्'—इति वि०।

षणीधृतोवा। आनुत्तस्य। षणायिधा१र्त्ता२यिः। तामुत्वानू३१२३४। नमस्तुर। प्रचायिता१सा२म। राधोभा१गा२म। इवा३यि। मा२३४५। हा२३४५यि॥(२) राधो३भा३गमिवेमहोवा। राधोभागम्। इवायिमा१हा२यि। माहोवका३१२३४। तिःशरणा। तआआ१यिन्द्रा२। प्रतायिम्न१म्ना२। नोआ३। आ२३४५। वा२३४५न(३)॥ १८*॥ [१]

॥ द्विहिङ्कारम्वामदेव्यम॥ तुवमा२३यिन्द्रयशाअसायि। आज्जीषीशवसस्पतिस्त्वमवृत्राणिहंस्यप्रतीनआयिकओहो३। ऊम्मा२। पृ२३ह्व। अनुत्तस्यार्षणोहो३। ऊम्मा२। धृतायिः। औ२३होवा॥(१) अनुत्ता२३स्य षणीधृतायिः।० आनुत्तस्यर्षणीधृतस्त्तमुत्वानूनमस्तुरा५प्र

* ऊ० गा० ७प्र०२ख० १८सा०।

२र २ १ १ २ १र र र १ २र
चोहोइ । ऊम्मा२ । मा२३साम । राधोभागाऽमिवी

२ १ १ २ ४ ५ २र१र
होइ । ऊम्मा२ । मघा । औ३होवा ॥(२) राधोआ

४ ५र १ र र र र र
३गमिवेमघायि । राऽधोभागमिचेमहेमहीवह्वा क्तिःशरणा

२ ३र २ १ १ २ १र २
ऽनयौहोइ । ऊम्मा२ । आ२३यिन्द्रा । प्रतेसुम्नाऽन

३र २ १ १ ४ ५ ४
यौहोइ । ऊम्मा२ । अवान् । औ२३होवा । ह्रो५ई ।

डा(३) ॥ ७ * ॥ [२]

१ १ १ २ १र २ र
॥ यज्ञम् ॥ त्वमिन्द्रा । यशाः । असायि । ऋजी

१र १ १ २ १ १ ३ २ १ र
षीभ्रवसः । पतायिः । त्वम्वृत्राणीइहचऽसिया । प्रती

१ २ १ ३ ५र र
नाए२ । कट्टत्पूर्व२होइ । तस्व । षारणा२३४औहो

३ ५ १ २ १ १ १र
वा । धा२३४र्त्ताः ॥(१) अनुत्तश्वा । अनुत्तश्वा । पणी ।

२ र १ २ र २
धृतायिः । अनुत्तस्वर्षणी । धृतायिः । तमुत्वानू३नम

३ २ १ १ १र
सुरा । प्रावा२यि । नासा२म् । राधा२हो१यि ।

---

ऊ० गा० १६प्र० २ष्य० ७सा० ।

भागम्। आ२यिवा२३४औहोवा। मा२३४हे ॥(२)

राधोभागाम्। राधोभागाम्। इवे। महायि। राधो

भागमिवे। महायि। महीवका३र्त्तिःशरा। णाता२

यि। आयिन्द्रा२। प्रता२यिहो१यि। सुम्ना। नो२

आ२३४औहोवा। आ२३४वान्(३)॥ १४ * ॥ [३] १२

यजिष्ठन्त्वेति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा ।

यजिष्ठन्त्वाववृमहे देवन्देवत्रा होतारममर्त्त्यम्।

अस्ययज्ञस्यसुक्रतुम्॥ १ † ॥

हे अग्ने ! "यजिष्ठं" यष्टृतमं "त्वा" त्वां "ववृमहे" वृणीमहे सम्भजामहे। कीदृशं त्वाम्? "देवत्रा" देवेषु मध्ये "देवम्" अतिशयेन दानादि-गुणकम्, "होतारं" देवानामाह्वातारम्, "अमर्त्त्यम्" अविनाशनम्, "अस्य" "यज्ञस्य" यागस्य "सुक्रतुं" सुष्ठु कर्त्तारम्॥ १ ॥

* ऊ० गा० १८प्र० ९ख० १४गा० ।

† छ० आ० ३, ?, ५, ९ ( १भा० २८३ प० ) = ऋ० वे० ६, १, १९, १।

अथ द्वितीया ।

२ १ २र ३ १ २ २ १ २ ३ २ ३ १ २
अपान्नपातꣳसुभगꣳ*सुदीदितिमग्निमुश्रेष्ठ†शोचिषम् ।
१ २ ३ १ ३ १ २ ३ २ ३ २उ ३ १ २ ३ २
सनोमित्रस्यवरुणस्यसोअपामासुम्नंयक्षतेदिवि ॥ २‡ ॥१३

"ऊर्जः" अन्नस्य "नपातं" न पातयितारं¶ [ यद्वा, नप्तारं चतुर्थं हविर्लक्षणेनान्नेन आपो जायन्ते, अद्भ्यश्चौषधि-वनस्पतय-स्तेभ्य एव जायत इति चतुर्थत्वम्§ । "नभ्राण्नपात् ( ६, ३, ७५ )"—इति नञ् प्रकृतिभावः ] "सुभगं" शोभन-धनं "सुदीदितिं" सुष्ठु दीदयन्तं "श्रेष्ठशोचिषं" प्रशस्यतम-तेजस्कम् अग्निं स्तौमीति शेषः । स तादृशोऽग्निः "नः" अस्मदर्थं "दिवि" द्योतमाने देवयजने द्युलोके वा "मित्रस्य" देवस्य "वरुणस्य" च "सुम्नं" सुखम् "आ" अभिलक्ष्य "यक्षते" यजतु । तथा सोऽग्निः "अपाम्" अब्देवतानाञ्च सुम्नमभि यजतु ॥ २ ॥ १३

३ ४ २ ४ ५
॥ साध्यम् ॥ याऽ५जि । छग्ना३वा३वा३वृमद्याथि ।
२र १ र २ र २ १ १ १ ७
देवन्देवत्राहोता२३राम् । आमर्त्तियम् । यास्ययाज्ञा

* "ऊर्जीनपातं"—इति ऋ० पाठः ।

† "अग्निंश्रेष्ठ"—इति च ऋ०-पाठः ।

‡ ऋ० वे० ६, १, २८, ४ ।

¶ ऋग्वेदीयपाठमवलम्ब्यैवं व्याख्यानम् ।

§ 'अपां नपातम्—अपां पौत्रमग्निम् । अपां पुत्रका वृक्षाः, तेषु सञ्जातं पुत्र-पौत्रम्'—इति वि० ।

१ ४ २ ५ २
२३। स्यार२३सू३। क्रा३४५तो६हायि ॥(१) आऽ५त्य।

४ २ ४ ५ ३ १र र २ १र
यशा३स्या३सुक्रतूम्। अपान्नपातऌसुभार२३गाम्। स्वदी

२ १ ७ १ ४ २
दितिम्। आग्निमूश्रे२३। ष्ठार२३ग्रो३। चा३४५यिषो

५ ३ ४ २ ४र ५ १
६हायि ॥(२) आऽ५ग्निम्। उश्रे३ष्ठा३ग्रोचिषाम्। स

र २ १ र २ र १ ७
नोमित्रस्यवरु२३णा। स्यासोअपाम्। आसुम्नाया२३।

१ ४ २ ५
आ२२ता३यि। हा३४५यिवो६हायि(३) ॥ २* ॥ [१]

१ र १ २ र १ र
॥ ऐध्मवाहसम् ॥ यजिष्ठन्त्वाववृमाहायि। देवन्देव

र र र
त्राहोतारममर्त्तियाम्। अस्ययज्ञस्यसुदूहा। अस्ययज्ञ

१ ५ ४ ५
स्यसूऽद्हा। जयायि। जषोर२३४वा। क्रा५तो६हा

२ १ २ १र र
यि ॥(१) असायज्ञस्यसुक्रातूम्। अपान्नपातऌसुभगऌ

र र र र र
सुदीदितायिम्। अग्निमुश्रेष्ठशोऽद्हा। अग्निमुश्रेष्ठाशो

५ ४ ५
ऽद्हा। जवायि। जवोर२३४। वा। चा५यिषो६हा

---

* ऊ० गा० ८प्र० १ष० २सा० ।

२ र र र १ र
यि ॥(२) अग्निमुश्रेष्ठशोचायिषाम्। सुनोमित्रस्यवरुण
र १
सोषपाम्। आसुम्नंयक्षता ऽ इहा। ऊवायि। ऊवो२
५ ४ ५
३४। वा। दा५यिवोईहायि(३) ॥ ३* ॥ [२] १२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चम-खण्डे —

यमग्नइति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १उ ३ १ र १ २ ३ १ २ २
यमग्नेपृत्सुमर्त्यमवावाजेषुयञ्जुनाः।
२उ ३ १ २ र १ २
सयन्ताशश्वतीरिषः† ॥ १‡ ॥

हे "अग्ने!" "पृत्सु" सङ्ग्रामेषु "यं" "मर्त्यं" यजमानम्
"अवाः" अवसि रक्षसि, "यं" पुरुषं "वाजेषु" सङ्ग्रामेषु
"जुनाः" अवसि, "सः" नरः यजमानः "शश्वतीरिषः" नित्यान्य-

---

* ऊ० गा० १८प्र० १ख० ३गा०।

† "स्वाहा"—इति यजुष्यधिकः पाठः।

‡ ऋ० वे० १, ९, २२, २ = य० वे० ६, २९।

मानि "यन्ता" नियन्तुं समर्थो भवति [पृत्सु—"पदादिषु मांस्पृत्स्नूनामुपसङ्ख्यानम् (६,१,६३)"—इति पृतना-शब्दस्य पदादेशः "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्। अवाः—अवः अकाराकारयोर्विपर्ययः, यद्वा लेटाडागमः, "इतश्च (३, ४, ९७)"—इति सिप इकार-लोपः। जुनाः—जुइति गत्यर्थः सौत्रो धातुः, लङ्, सिप्, क्र्यादिभ्यः श्ना ; "बहुलञ्छन्दस्यमाङ्योगेऽपि (६,४,७५)"—इत्यड़ागमाभावः ; यद्वृत्तयोगात् (८,१,३०)" अनिघातः। यन्ता—तृनो नित्स्वादाद्युदात्तत्वम् (६,१,१९७)। शश्वतीः—"उगितश्च (४,१,६)"—इति ङीप्॥ १॥

अथ द्वितीया।

१ २ ३ १र २र
नकिरस्य सहन्त्य पर्येता कयस्यचित्।
१ २ ३ १ २
वाजो अस्ति श्रवाय्यः॥ २*॥

हे "सहन्त्य!" शत्रूणामभिभवन-शीलाग्ने! "अस्य" त्वद्भक्तस्य यजमानस्य "कयस्यचित्" कस्यापि "पर्येता नकिः" आक्रमिता नास्ति। किञ्चास्य यजमानस्य "श्रवाय्यः" श्रवणीयः "वाजः अस्ति" बल-विशेषोऽस्ति† ॥ २॥

---

* ऋ० वे० १, १, २२, ९।

† 'वाजमन्नं'—इति वि०।

अथ तृतीया।

१२ २र ३१२ ३१२ ३१२
सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता।

१२ ३१२
विप्रेभिरस्तुसनिता॥ ३* ॥ १४

"विश्वचर्षणिः" सर्वैर्मनुष्यैरुपेतः† "सः" अग्निः "अर्वद्भिः" अश्वैः‡ "वाजं" सङ्ग्रामं "तरुता" तारयिता "अस्तु" "विप्रेभिः" मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः "सनिता" फलस्य दाता¶ [ विश्वचर्षणिः—विश्वे चर्षणयः अस्य "बहुव्रीहौ विश्वं सञ्ज्ञायाम् ( ६, २, १०६ )"—इति पूर्वपदान्तोदात्तत्वम्। अर्वद्भिः—ऋ गतौ ( भ्वा० प० ), "अन्येभ्योऽपि दृश्यते ( ३,२,७५ )"—इति वनिप्, भिसि "अर्वणस्त्रसावनञः (६, ४, १२७ )"—इति नकारस्य तृ-इत्ययमादेशः। तरुता—तॄ प्लवन-तरणयोः (भ्वा०प०), अस्मात् "ग्रसित-स्कभित- (७, २, ३४ )—इत्यादौ तृन्नन्तो निपातितः, निपातनादेवेकारस्योत्वम् ] ॥ ३ ॥ १४

---

* ऋ० वे० १, १, २३, ४।

† 'विश्वस्य द्रष्टा'—इति वि०।

‡ 'अर्वद्भिः—तृतीयाबहुवचनं चतुर्थीबहुवचनस्य स्थाने द्रष्टव्यम्, अर्वद्भ्यः'—इति वि०।

¶ 'विप्रेभिः—विप्रेभ्यः सनिता, त्वां मुक्त्वा न कश्चिदन्यो दाता'—इति वि०।

अथ साकमुक्षइति हचात्मकं द्वितीयं सूक्तम्।

तत्र प्रथमा।

२ १२ ३ १ २ ३
साकमुक्षोमर्ज्जयन्तखसारो

१ २ १ २ ३ २ ३ १ २
दशधीरस्यधीतयोधनुत्रीः।

१ ३ १ २ ३ १२ १२ ३
हरिःपर्य्यद्रवज्जाःसूर्य्यस्य

१ २ ३ २ ३ २ ३ २
द्रोणन्ननक्षेअत्योनवाजी॥ १*॥

"साकमुक्षः" सह युगपत् सिञ्चाः [उक्ष सेचने (भ्वा०प०) क्विपि रूपम्, तादृश्यः] "खसारः" कर्म्म-करणार्थम् इतस्ततः सुष्ठु गच्छन्त्यः अङ्गुलयः "मर्जयन्त" सोमं शोधयन्ति [मृजू शोध-नालङ्करणयोः (अदा० प०)]। तथा "दश" दश-सङ्ख्याकाः "धीतयः" [अङ्गुलि-नामैतत् (निघ० २, ५, ७)] "धीरस्य" समर्थस्य यज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति। ततः "हरिः" हरितवर्णः सोमः "सूर्य्यस्य" "जाः" प्रादुर्भूता जाया दिशः ताः "पर्य्यद्रवत्" परितो गच्छति [सूर्य्यस्य तेजसा हि आविर्भवन्तीति दिशान्तस्य जायात्वम्] "अत्यः" अतनशीलः "वाजी न" अश्वइव स्थितः सोमः "द्रोणं" द्रोणकलशं "ननक्ष" व्याप्नोति [नक्षतिर्व्याप्ति-कर्मा (निघं० २, १८, २)]॥ १॥

---

* ऋ० भा० ६, १, ५, ६ (२भा० ११६४०) = ऋ० वे० ७, ४, २, १।

अथ द्वितीया।

१ २ ३ २ २र ३ १र
सम्मातृभिर्न्नशिशुर्वावशानो
२र ३ १ २ ३ २
वृषादधन्वेपुरुवारोअद्भिः।
२ ३ १र ३र२ १ २ ३ १र
मर्य्योनयोषामभिनिष्कृतंयत्
२र ३ १ २ ३ १ २
सङ्गच्छतेकलशउस्रियाभिः ॥ २* ॥

"वावशानः" देवान् कामयमानः "वृषा" कामानां वर्षकः अतएव "पुरुवारः" बहुभिर्वरणीयः सोमः "अद्भिः" मातृभूताभिः वसतीवरीभिः "सं दधन्वे" सन्धायते। तत्र दृष्टान्तः—"मातृभिर्न शिशुः" कामयमानः पुत्रो यथा मातृभिः पयःप्रदानेन सन्धायते [धवि गत्यर्थः (भ्वा० प०) कर्म्मणि लिटि रूपम्] "मर्य्यो न" मनुष्यो यथा "योषां" युवतिम् अभिगच्छति तद्वत्, "निष्कृतं" संस्कृतं स्वस्थानम् "अभि यन्" अभिगच्छन् "कलशे" द्रोणाभिधाने "उस्रियाभिः" अद्भिः गोविकारैः क्षीरादिभिर्वा "सङ्गच्छते" [गमेरकर्मकात् "समोगम्यृच्छिभ्याम् (१, ३, २९)"—इत्यात्मने पदम् ॥ २ ॥

---

* ऋ० वे० ७, ४, ३, २।

† 'आदित्यरश्मिभिः'—इति वि०।

अथ तृतीया ।

२ १र २र३ २ ३ १ १ ३
उतप्रपिप्यऊधरघ्न्याया

२ १ १ २ ३ १
इन्दुर्धाराभिःसचतेसुमेधाः ।

३ २ ३ २ ३ १ २ ३ २ ३ १
मूर्द्धानङ्गावःपयसाचमूष्वभि

२ ३ १ २ ३ २ ३ २
श्रीणन्तिवसुभिर्न्ननिक्तैः ॥ ३* ॥ १५

"उत" अपि च "अघ्नायाः" ["अघ्ना"—इति गो-नाम (निघ० २, ११, १)] अहं तथाविधाया गोः "ऊधः" पयः-स्थानं सोमः "प्रपिप्ये" ओषध्यादिषु सोमः प्रविश्य प्रकर्षेण-प्याययति [प्यायतेर्लिङि "लिड्यङोश्च (६, १, २९)"—इति पी-भावः] "सुमेधाः" शोभन-प्रज्ञः सोऽयम् "इन्दुः" सोमः "धाराभिः" "सचते" समवेति सङ्गच्छते । ततो "गावः" "चमूषु" [चमन्ति भक्षयन्त्यत्र सोममिति चम्वो ग्रहादयः, तेषु] स्थितं "मूर्द्धानं" समुच्छ्रितमिमं सोमं "पयसा" उदकेन "अभि श्रीणन्ति" अभित आच्छादयन्ति† । तत्र दृष्टान्तः— "निक्तैः" प्रक्षालितैः "वसुभिः" वस्त्रैः यथा आच्छादयन्ति तद्वत् ॥ ३ ॥ १५

---

* ऋ० वे० ७, ४, २, २ ।

† 'अभिश्रीणन्ति, मिश्रयन्ति'—इति वि० ।

॥ इन्द्रवत्सामसितम् ॥ औहोवाहा ३ होयि। इन्द्रा।
साक्षमुक्षो। मर्जय। तन्नमारा:। दप्रधोरा। स्था
३धीत। योधमुक्षो:। हरि:पर्य्या। द्रवज्जा:। हरि
यस्या। द्रोणाननना। सो३मति। यो३४३। ना३वा५
जा६ ५ ६यि ॥(१) सम्मातभायि:। नग्निप्रु:। वाकश्रा
ना:। वृषादधा। स्वे३पुरु। वारोअह्नायि:। मर्य्यो
मयो। घा३मभि। निष्कृतंयान्। सङ्गच्छतायि। क
लशे। ज३४३। वो३या५भा६५६यि: ॥(२) उतप्रपायि।
प्या३ऊध:। अघ्नियाया:। इन्दुर्द्धारा। भौ३:सच।
तेसुमेधा:। मूर्द्धानङ्गा। वा३:पय। साचमृषू। औ
होवाहा३होयि। इन्द्रा। औभिश्रीणा। तो३वसु। भा
३४३यि:। ना३ना५यिक्ता६५६यि:(३) ॥ ७ ॥ [१]

---

* ऊ० गा० ८प्र० १ख० ७सा०।

॥ पार्थम् ॥ ओ३हो३होयि। साकमुक्षो। मर्ज्जं
य। तस्वसाराः। दशधीरा। स्या३धीत। योधनु
नोः। हरिःपर्य्या। द्रवज्जाः। हरियस्या। द्रोणन्न
ना। जे३अति। यो३४३। ना३वा५जा६५६यि ॥(१)
सम्मातृभायिः। नमिप्रुः। वावशानाः। वृषादधा।
न्वे३पुरु। वारोअद्भ्यायिः। मर्य्यानियो। षा३मभि। नि
ष्कृतंयान्। सङ्गच्छतायि। कलशे। उ३४३। स्तो
३या५भा६५६यिः ॥(२) उतप्रपायि। प्या३ऊधः। अघि
यायाः। इन्दुर्द्धारा। भो३ःसच। तेसुमेधाः। मूर्द्धा
नङ्गा। वा३ःपय। साचमूषु। ओ३हो३होयि। अभि
श्रीणा। तो३वसु। भा३४३यिः। ना३ना५यिक्ता६५६
यिः(३) ॥ ८ ॥ [२]

* ऊ० गा० १६।१ १अ० ८खा०।

॥ औशनम् ॥ साकाम्। उक्षामर्ज्जयन्ता। स्वसा

३राः। दशधीरा। स्याइधीन। योधनुत्रीः। हरिः

पर्य्यद्रवज्जाःसू। रियार३या। द्रोणन्नना। नेइअति।

यो३४३। नाइवा५जा६५६यि ॥(१) साम्मा। नृभिर्म्म

भिग्नुर्वा। वशा३नाः। वृषादधा। न्वे३पुरु। वारो

अन्नायिः। मर्य्योनयोषामभिनायिः। कृता२३यान्।

सङ्गच्छतायि। कलशे। ऊ३४३। सी३या५भा६ ५ ६

यिः ॥(२) उता। प्रपिप्यऊधरा। घिया३याः। इन्द

द्गीरा। भी३ःसच। तेन्नुमेधाः। मूर्द्धानङ्गावःपयसा।

चमू२३षू। अभिश्रीणा। ती३वसु। भा३४३यिः। ना

३ना५यिक्ता६५६यिः(३) ॥ ४ ॥ [३] १५

---

* ऊ० गा० १८प्र० २ख० ४सा०।

अथ पिबासुतस्येति प्रगाथात्मकं तृतीयं सूक्तम्,—

तत्र प्रथमा ।

१२ ३१२३२३१२ ३१२
पिबासुतस्यरसिनोमत्स्वानइन्द्रगोमतः ।

३१२ ३१२३२ १ २ ३१२
आपिर्नोबोधिसधमाद्योवृधेऽ३ऽस्माँऽअवन्तुतेधियः ॥ १* ॥

हे "इन्द्र !" "रसिनः" रसवतः "गोमतः" गोर्विकारैः पयः-प्रभृतिभिः श्रपण द्रव्यैर्युक्तस्य "नः" अस्मदीयस्य "सुतस्य" अभिषुतस्य ["क्रियाग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदान-त्वाच्चतुर्थ्यर्थे (२, ३, ६२.)—षष्ठी] ईदृशं सोमं "पिब", पीत्वा च "मत्स्व" तृप्तो भव । अपि च त्वं "सधमाद्ये" सह मादयितव्ये सहितैरस्माभिस्तर्पयितव्ये सोमे "आपिः" आपयिता बन्धुः सन् "नः" अस्माकं "वृधे" वर्द्धमानाय "बोधि" बुध्यस्व "ते" त्वदीया "धियः" बुद्धयः अनुग्रहात्मिकाः "अस्मान्" स्तोतॄन् "अवन्तु" रक्षन्तु ॥

"सधमाद्ये"-"सधमाद्यः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३१२ ३२३१२३१२ २२ ३१२
भूयामतेसुमतौवाजिनोवयम्मानस्तरभिमातये ।

२२३१२ ३१२३१२३१२
अस्माँश्चित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय ॥२†॥१९

* उ० आ० ३, ४, ५, ७ (१भा० ४९५पृ०) = ऋ० वे० ५, ७, २५, १ ।

† ऋ० वे० ५, ७, २५, २ ।

हे इन्द्र! "सुमतौ" शोभनायां बुद्धौ अनुग्रह-बुद्धौ "वाजिनः" हविष्मन्तो वयं "भूयाम" वर्त्तमाना भवाम "अभिमातये" अभिमन्यत इत्यभिमातिः शत्रुः * तस्मै तदर्थं "नः" अस्मान् "मा स्तः" माहिंसीः [स्तृञ् हिंसायाम् (क्रया० प०) माङि लुङि छान्दसत्त्वे लुक् ]। अपितु "अभिष्टिभिः" अभ्येषणीयाभिः प्रार्थनीयाभिः "चित्राभिः" चायनीयाभिः बहुविधाभिर्वा त्वदीयाभिः "ऊतिभिः" "अस्मान्" "अवतात्" [अव रक्षणे (भ्वा० प०) ]। तथा "नः" अस्मान् "सुम्नेषु"† सुखेषु "आ यामय"‡ आयतान् कुरु सर्वदा सुखिन एव कुरु॥ २॥ १६

५ ४ २ ४ ५ ४ ५ १ २ २
॥ अभीवर्त्तम्॥ पिबा३सू३तस्य२सिनोवा। मात्स्वान

१ २ १ २ १ २ ४ ५र
इ। द्रगोमा१ता२ः। आपिर्नोवा३१२३४। धिसधमा।

२ १ १ १ २ १ २ १
दियेवा१हा२यि। अस्मा२आ१वा२। तुता३यि। धा

२ १ १ १ १ ५ ४ २ ४ ५र ४ ५
२३४५। या२३४५ः॥(१) अस्मा२३आ३वन्तुतेधियोवा।

१ २ १ १ २ १ २ १
आस्मा२अव। तुतायिधा१या२ः। भूयामता३१२३४

२ ४र५र २ १ २ २ १ २
यि। सुमतीवा। जिनोवा१या२भ्। मानास्ता१रा२।

---

* 'अथवा कश्चिद्रोगः'—इति वि०।

† 'सुम्नेषु—यज्ञेषु'—इति वि०।

‡ 'आपय्येत्यर्थः'—इति वि०।

२ २ १ ३ ११११ ५र ४ २
भिमा३। ता२३४५। या२३४५यि ॥(२) माना३स्ता३

४ ५र ४ ५ १ २ १ २ १ र
रभिमातयोवा। मानस्तर। भिमाता१या२यि। श्वासा

२ ३ ४ ५र २ १ २
ध्विचा३१२३४। भिरवतात्। अभायिष्टा१यिभा२यिः।

र १ २ ३२ १ २ १ १
आनाःच्छश्न्ना२यि। षुया ३। मा २ ३ ४ ३। या २ ३

१ १
४५(३) ॥ ८* ॥ [१]

४ ३र ४ ३ ४ ५ ४ ५ र ३ २
॥ उत्सेधम् ॥ पिबासुतस्यरसिनः। मत्स्वा। नश्रा

३र ४र ५ १ १र २
३४औहोवा। द्रगोमताऽ२ः। हा३१उवा२३। ऊ३४

५ ३र २ ४र ५र ४ ५ १ २ १
पा। आपा३यिर्नोबो। औहोवाहायि। धायिसधमा।

२ र १ २र २ ५ ३ २
दियेवाड्डं। हा३१उवा२३। ऊ३४पा। अस्मा

४ ५र ४ ५ ३ २ ४
३ए्थव। औहोवाहायि। तुता३यिधा५या६५६ः ॥(१)

४ ३र ४ र ५र र १ १ ३र ४ ५
अस्मा एअवन्तुतेधियो। स्मान्। अवा ३ ४ औहोवा।

१ १र २ ५ ३ २र ४
तुतेधियाऽ२ः। हा३१उवा२३। ऊ३४पा। भूया३म

* ऊ० गा० ८प्र०१ख०८सा०।

ता। औहोवाहायि। द्युमतीवा। जिनोवायम्।
हा३१उवा२३। ऊ३४पा। माना३स्तर। औहोवाहा
यि। भिमा३ताप्रयाइ५इ ॥(२) मानस्तरभिमातये। मा
नः। स्तरा३४औहोवा। भिमातयाऽ२यि। हा३१उवा
२३। ऊ३४पा। अस्मा३भ्यिन्ना। औहोवाहायि।
भायिरवतात्। अभिष्टायिभिः। हा३१उवा। ऊ३४
पा। आना३ःसुम्ने। औहोवाहायि। पुया३माप्रया
इ५इ। ऊ२३४५(३) ॥ १५* ॥ [२]

॥ निषेधम् ॥ पिबासुतस्या३रसिनाः। मत्स्वानआ
यि। द्रगोमता२ः। इहा३। आपा३यिन्नोबो। हा
हो२३४हा। धायिसधमा। दिव्रेआ२३हायि। इहा३।
आस्मा३५आवा। हाहो२३४हा। तुता३यिधाप्रयाइ५

* ऊ० गा० १८प्र० १ख० १५सा० ।

२ र २र १ ११ १र १
ई:। अस्माँ३ऽअवन्तू३तेधियाः। अस्माँऽअवा। तुतेधि
११ ११ ४५ २ ३ ५ १
या२:। इहा३। भूया३मातायि। हाहो२३४हा। सु
२र१ १र १ र ११ ११ ४५
मतीवा। जिनोवा२३याम्। इहा३। माना३स्तारा।
२ ३ ५ १ १ ४ २र
हा.हो२३४हा। भिमा३ता५याई५ईयि॥(२) मानस्तर
२र र १ ११ २ र १ ११
मी३मातयायि। मानास्तरा। भिमातया२यि। इहा
११ ४ ५ २ ३ ५ १ २१
३। आस्मा३स्मायित्रा। हाहो२३४हा। भायिरवतात्।
२ १ २ ११ ११ ४५ २
अभिष्टा२३यिभायि:। इहा३। माना३:स्मायि। हा
३ ५ ३२ ४ ३११११
हो२३४हा। पुया३मा५याई५६। हे२३४५(३)॥१६*॥[३]

॥ षष्ठम्॥ पिबा३सुतस्यरसिनाः। मत्स्वानइन्द्रगो
५४ १२४ ५ १ र र
मता२३होइया। आपिर्नोबोधिसधमाद्येवृधा २ ३ योइ
१ १र १र र र र १
या। अस्माँ३आ२३स्तु। तुतायिधा२ इया ३ ४ ३: ॥(१)
२ १र २ १ २
अस्मा३ँ३ऽअवन्तुतेधियाः। अस्माँऽअवन्तुतेधियार ३ यो
५४ १२४ र ५ १र र १

---

* ऊ० गा० १३प्र० १अ० १६खा०।

इया । भूयामतेसुमतौवाजिनोवया२३७ह्वोइया । मा

नस्तार२३रा । भिमाता२३या३४३यि ॥(२) माना३स्तर

भिमातयायि । मानस्तरभिमातया२३यिहोइया । अस्मा

च्चित्राभिरवतादभिष्टिभा२३यिह्वोइया । आनःसू२३म्ना

यि । धुयामा२३या३४३ । औ२३४५ई । डा(३) ॥१२*॥[४]

॥ जमदग्नेःसाम ॥ पिबासुतस्यरसिनोमत्स्वाह्वाउ ।

ना२ः । इन्द्रा२गोमता२३ः । ह्वाउ । आपिर्ना२बो ।

धिसाधमा२ । दियेवृधा२३ । ह्वाउ । अस्मा७अवा

२३ । हा । तुते३ह्वो२ । या२३४औह्वोवा । धियज्ञ

२३४५ ॥(१) अस्मा७अवन्तुतेधियोह्माह्वाउ । मा२ ।

वन्त्२तेधिया२३ः । ह्वाउ । भया्मा२ते । सुमतौवा

२ । जिनोवया२३म् । ह्वाउ । मानास्तरा२३ । हा ।

* ऊ० गा० १६प्र० ९ख० १९था० ।

२ १ १ ४ २ ५र र १ ४ २ १ १ १ १
भिमा३होर। या२३४औहोवा। तयज्ञ २ ३ ४ ५॥(२)

२र र र र र १ १ १र
मानस्तरभिमानयेमानोहाउ। स्ता२ः। अभा२यिमा

२ १र र १ ७
तया२३यि। हाउ। अस्मान्वा२यिता। भिरावता२

१ २ र १ ७
त्। अभिष्टिभा२३यिः। हाउ। आनाःसुम्ना २ ३ यि।

१ ४ २ २ १ ४ २ ५र र १ ४ २
षा। षुया ३ हो २। या २ ३ ४ औहोवा। मयज्ञ

१ १ १ १
२ ३ ४ ५(३) ॥ १६* ॥ [५] १६

अथ त्रिरस्मैसप्तेति द्वचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ १ २
त्रिरस्मैसप्तधेनवोदुदुह्रिरे

३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमेव्योमनि।

३ २ ३ १र २र ३ २ ३
चत्वार्यन्याभुवनानिनिर्णिजे

१ २ ३ २ ३१र २र
चारूणिचक्रेयदृतैरवर्द्धत ॥ १† ॥

---

* ऊ० गा० १८प्र० २ख० १६गा०।

† छ० आ० ६, १, २, ७ (२भा० १८८पृ०) = ऋ० वे० ७, १, २२, १।

"परमे व्योमनि" विविधमोममवनं गमनं देवानामत्रेति व्योमा यज्ञः, तस्मिन् स्थिताय यद्वा परमे व्योमनि अन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्यां" सत्यं यथार्थभूतम् "आशिरम्" आश्रयमाणं "दुदुह्रिरे" दुहन्ति [यद्वा, त्रिःसप्त द्वादश मासाः पञ्चर्त्तवः अथ इमे लोका असावादित्य एकविंश इति, एतैः सर्वैः सह गोषु उत्पद्यते तद्गावो दुहन्तीति]। किञ्चायं सोमः "अन्या" अन्यानि "चत्वारि" "भुवनानि" उदकानि वसतीवरीस्तिस्रैकधना इति, तानि चतुःसङ्ख्याकानि "चारूणि" कल्याणानि उदकानि "निर्णिजे" निर्णेजनाय परिशोधनाय "चक्रे" करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैरेव "वर्द्धितः" वर्द्धितवान् तदा करोति॥

"दुदुह्रिरे," "परमेव्योमनि"-"दुदुह्रे," "पूर्वेव्योमनि"—इति पाठौ॥१॥

अथ द्वितीया।

१र २र ३ १ २ ३ १ २
सभक्षमाणो अमृतस्य चारुण

१ २उ ३ १ २ ३ १ २
उभे द्यावा काव्येना विशश्रथे।

१ २ ३ २ ३ १ ३ १ २ ३
तेजिष्ठा अपो मंहना परिव्यत

१ २ ३ २ ३ १ २ ३ १ २ ३१
यदी देवस्य श्रवसा सदो विदुः॥२*॥

---

* ऋ० वे० ७, १, १३, १।

"सः" "भक्ष्यमाणः" "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य ["क्रियाग्रहणमिति कर्म्मणः सम्प्रदान-सञ्ज्ञा, "चतुर्थ्यर्थे बहुलम् (२, ३, ६२)"—इति षष्ठी] चारूदकं भक्ष्यमाणः [इकारलोपश्छान्दसः (३, ४, ९७)] भिक्ष्यमाणः यष्टृभिः याच्यमानः सन् "उभे" "द्यावा" [द्यावादेशस्य द्वन्द्वे विहितत्वात् उत्तरपदाभावेऽपि द्वन्द्वः प्रतीयते] उभे द्यावापृथिव्यौ "काव्येन" कवि-कर्म्मणा "वि शश्रथे"* विहृतकारातिशयेन निमित्तेन प्रस्र-नोदकेन सम्पूरयतीत्यर्थः। किञ्च "तेजिष्ठाः" अतिशयेन दीप्तानि "अपः" उदकानि "मंहना" महत्त्वेन "परि व्यत" तदा परित आच्छादयति। "यदि" यदा ऋत्विजः "देवस्य" द्योतमानस्य सोमस्य "सदः" स्थानं "श्रवसा"† हविषा युक्ताः सन्तः "विदुः" यागार्थं जानन्ति लभन्ते तदा आप्नोतीति। [विद ज्ञाने (अदा० प०) "सिजभ्यस्त (३, ४, १०९)"—इति झेर्जु-सादेशः॥

"भक्ष्यमाणः"-"भिक्ष्यमाणः"—इति पाठौ॥ २॥

अथ तृतीया।

१ २ ३ १र २र ३ १
तेअस्यसन्तुकेतवोमृत्यवो

२ ३ १ २ ३ १र २र
दाभ्यासोजनुषीउभेअनु।

---

* 'विशश्रथे—विविधं शिथिलीकरोति'—इति वि०।

† 'श्रवसा—अन्नेन बलेन वा'—इति वि०।

१ १ २ १ २ ३ १२ २ १
येभिर्नृम्णा च देव्या च पुनत

१२ ३ १ १
आदिद्राजानम्मनना अगृभ्णात ॥ ३* ॥ १७

"अस्य" एतादृशस्य सोमस्य "केतवः" प्रज्ञापकाः सर्वैश्चाय-नीया रश्मयः। कीदृशाः? "अमृत्यवः" मरण-धर्म्म-रहिताः अत-एव "अदाभ्यासः" ["दभेश्चेति वक्तव्यम् (७, ३, ६८ वा०)"—इति ख्यत्] परैरहिंस्यास्त्वेतादृशा अस्य रश्मयः "उभे" "जनुषी" जन्मना स्थावर-जङ्गमात्मके द्वे "अनु" लक्षीकृत्य "सश्चु" रचन्तु [ओषधीनामग्रे सोमो रेतो निषिञ्चति यस्मः मनुष्याणाञ्च धाराः स्रवति खलु] सोऽयं "येभिः" यैः केतुभिः "नृम्णा" नृम्णानि बलानि "देव्या" देवार्हाणि चान्नानि "पुनते" प्रेरयति। "आदित्" अभिषवानन्तरमेव† "राजानं" सोमं "मनना:" मननीयाः स्तुतयः "अगृभ्णत" परिगृह्णन्ति प्राप्नु-वन्तीत्यर्थः "हृग्रहोः"—इति छान्दसो भकारः ॥ ३ ॥१७

१ ५र ४ ५र ४ ५र र
॥ मारुतम् ॥ त्रा२ ३ ४यिः। अस्मैसप्तधेनवोदुद्रौ।

४ ५ २ १र र २ र १
ओ्रोन्नायिरायि। सत्यामाशिरम्पूरव्यम्ब्यि। वियोमानी२।

---

* ऋ० वे० ७, १, २३, ३।

† 'आत्'-'इत्'—इति पदपूरणौ—इति वि०।

१र   र         २   १         २   ३
चत्वार्य्यन्याभुवना। निनिर्णायिजा२३यि। चारुणा२३

५   १र १ १र   ५ २   ४         १
४यिवा। क्रेयहतैः। आवा३ह्रा५ताई५६ ॥(१) सा२३

५ र र   ४   ५र   ४   ५   १ र र र र
४ः। भक्षमाणोअमृतस्यचौ। चारुणाः। उभेद्यावाका

र   २   २       र र   र       २
व्येना। विश्रआथा२यि। तेजिष्ठाअपोमᳲहना। परि

२   ३   ५   १ १ १र   १ २
व्याता२३। यादीदा२३४यिवा। स्यश्रवसा। सादो३

४   १   ५   र ४ ५र   र
वा५यिदूई५६ः॥(२) ते२३४। अस्यसन्तुकेतवोअमी।

४   ५   १ र र र   २र १   १र
होर्त्यावाः। अदाभ्यासोजनुषी। उभेआनू२। येभि

र   र   २   १   २   ३   ५
र्नृम्णाचदेव्या। चपुनादा२३यि। आदिद्रा २ ३ ४जा।

२१ १र   १ २   ३
नमननाः। आगा३म्णा५ताई५६(३) ॥ १२* ॥ [१] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

मः खण्डः ॥ ५ ॥

---

* ज० गा० ६प्र० ९ ख० १२सा० ।

अथ षष्ठे खण्डे—

अभिवायुमिति त्वचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ २ ३ २ ३क २र ३ २
अभिवायुंवीत्यर्षागृणानो
१ ३ १र १र ३ १ २
ऽ३ऽभिमित्रावरुणापूयमानः।
३ १र २र ३ १२ ३ १
अभीनरन्धीजवनꣳरथेष्ठा
३ १ ३ १२३१ १
मभीन्द्रंवृषणंवज्रबाहुम्॥ १* ॥

हे सोम! "गृणानः" स्तूयमानस्त्वं "मित्रावरुणा" मित्रावरुणौ च पानाय "अभि" गच्छ। किञ्च "नरं" सर्वस्य नेतारं, "धीजवनं" बुद्ध्या समं वेगं कुर्वाणं,† "रथेष्ठां" रथे तिष्ठन्तम् [अनेनाश्विनावभिधीयते; एकवचनन्तु प्रत्येक-विवक्षया समुदाय-विवक्षया वा; एतादृशावश्विनौ चाभिगच्छ]। तथा "वृषणं" कामानां वर्षकं "वज्रबाहुं" वज्र-युक्त-हस्तम् "इन्द्रं" च त्वं पानाय "अभि" गच्छ ॥ १ ॥

---

* ऋ० वे० ७, ४, २०, ४।

† 'धीजवनं—धीर्बुद्धिः तया जवनं वेगवन्तम् अथवा मनोजवैरश्वैः गन्तारम्' —इति वि०।

अथ द्वितीया ।

२ १ १र २ १ १ २ ३ ३ ३ २ ३ १ १ ३ १ १
अभिवस्त्रासुवसनान्यर्षाभिधेनूःसुदुघाःपूयमानः ।
३ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अभिचन्द्राभर्त्तवेनोहिरण्याभ्यश्वान्रथिनोदेवसोम ॥ २* ॥

हे "सोम !" अस्माकं "सुवसनानि" सुपरिधानानि "अभि" गमय [ यद्वा, सुवसनानि शोभन-वस्त्र-सहितानि "वस्त्रा" वस्त्राण्याच्छादकानि धनानि "अभि" गमय। किञ्च "पूयमानः" पवित्रेण त्वं "सुदुघाः" सुष्ठु पयसो दोग्ध्रीः "धेनूः" नवप्रसूतिका गाः "अभि" प्रापय। अपिच "चन्द्राणि" आह्लादकानि† "हिरण्यानि" "भर्त्तवे" भरणाय पोषणाय "नः" अस्माकम‡ "अभि" गमय। तथा हे "देव" स्तोतव्य ! हे "सोम !" "रथिनः" रथवतः अश्वान् अस्माकम् "अभि" प्रापय ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
अभीनोअर्षदिव्यावसून्यभिविश्वापार्थिवापूयमानः ।
३ २उ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ १ २
अभियेनद्रविणमश्नवामाभ्यार्षेयञ्जमदग्निवन्नः ॥ ३¶ ॥१८

हे सोम ! पवित्रेण "पूयमानः" त्वं "दिव्या" दिव्यानि

* ऋ० वे० ७, ४, १०, ५ ।

† 'चन्द्राणि—कान्तानि'—इति वि० ।

‡ 'नः—अस्मभ्यम्'—इति वि० ।

¶ ऋ० वे० ७, ५, २१, १ ।

दिवि भवानि "वसूनि" धनानि "नः" अस्माकम् "अभ्यर्ष" अभिगमय तथा "पार्थिवा" पार्थिवानि पृथिव्यां भवानि "विश्वा" विश्वानि सर्वाणि धनान्यभिगमय। तथा "येन" त्वदीयेन सामर्थ्येन "द्रविणं" धनं "वयम्" "अश्नवाम" अभि व्याप्नुयाम तत् सामर्थ्यम् "अभि" गमय। किञ्च "आर्षेयम्" ऋषीणामृषिपुत्राणां योग्यं धनं "जमदग्निवत्" जमदग्नेर्यथा त्वं प्रापय एवं "नः" अस्माकमपि अभ्यर्ष [ यद्वा, आर्षेयम्, ऋषीणां योग्यं मन्त्रं जमदग्नेः स्वभूतं मन्त्रं यथा स्वादुतमम् अकार्षीः एनमस्माकं तादृशं मन्त्रं स्वादुतमं कुर्विति मन्त्रद्रष्टा स्तोता कुत्सो नाम ऋषिः प्रार्थयते ] ॥ ३ ॥ १८

१ २ २ १र १
॥ पार्थम् ॥ ओ३द्धो३द्धोयि। अभिवायूम्। वी३

१ २ ३ ४ ५ २ १ २ १ र १ ३ ४ ५
तिप। षागृणानाः। अभिमित्रा। वरुणा। पूयमानाः।

२ र १ ३ १ २ ३ ४ ५ २ १
अभीनराम्। धी३जव। न॑रथेष्ठाम्। अभिइन्द्राम्।

२ १ १ २ ४
वृषणम्। वा ३ ४ ३। ज्रा३वा५ऌ ६ ५ ६ म् ॥ (१)

२ १ २ १ २ ३ ४ ५ २ १र १ १
अभिवस्त्रा। सुवस। नानियर्षा। अभिधेनूः। सुदु

र २ ३ ४ ५ २ १० २ १ र २ ३४
घाः। पूयमानाः। अभिचन्द्रा। भर्त्तवम्। नोहिर

५ २ १ २ १ २ २ ४
ण्या। अभियश्वान्। रथिनः। दा३४३यि। वा३सो

२ र १र २ १ २३४५
पुमा६५६ ॥(२) अभीनोआ। पा२दिवि। यावद्गनी।
२ १ २ १ २ १ ३ ४ ५ २ १र
अभिविश्वा। पा२र्थिवा। पूयमानाः। अभियेना।
२ १ २ ३ ४ ५ २ २ २ १र
द्रविणम्। अश्ववामा। औ२होर्होयि। अभियषँ।
२ १ १ २ ४
या ३ जमत्। आ ३ ४ ३। ग्ना ३ यिवा ५ न्ना ६ ५ ६ः
(३) ॥ १४* ॥ [१] १८

अथ† यज्जायथाइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१र २र ३ १ २ ३ १ २
यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय।
१ २ ३ १ २ ३ १ २ ३ १र २र
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतोदिवम्॥ १‡ ॥

हे "अपूर्व्य"¶ त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित! हे "मघवन्" मंहनीय-धनवन्! "इन्द्र!" "वृत्रहत्याय" वृत्रहननाय§ "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोऽसि "तत्" तदानीमेव

---

* ऊ० गा० ८प्र० १अ० १४सा०।

† 'उक्तोऽभिभवः। उक्तः इष्टाः। उक्तोऽभिजित्। इदानीं स्वरसामानः'—इति वि०।

‡ ऋ० वे० ६, ६, ११, ५।

¶ 'अपूर्वगुण!'—इति वि०।

§ 'वृत्रघ्न—इन्द्रोऽभिधीयते, तस्मै वृत्रहत्याय हविर्दद्म इति वाक्यशेषः'—इति वि०।

"पृथिवीं" प्रथमानां भूमिम् "अप्रथयः" प्रथितां दृष्टामकरोः । "उत" अपि च "तत्" तदानीमेव "दिवं" द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धामकार्षीः [एतादृशं वीर्यं त्वदन्यस्य न सम्भवतीत्यर्थं द्योतयति अपूर्व्वेति पदम्] ॥

"उतोदिवम्"-"उतद्याम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ २ ३ १र २र
तत्तेयज्ञोअजायततदर्कउतहस्कृतिः ।
१र २र ३ १ २ ३ २ ३ १उ ३ १ २
तद्विश्वमभिभूरसियज्जातंयच्चजन्त्वम् ॥ २* ॥

हे इन्द्र! "यद्" यदा त्वम् अजायथाः तदानीं "ते" त्वदर्थं "यज्ञः" अग्निष्टोमादिः "अजायत" सोम-पानार्थमभूत् । "उत" अपिच "तद्" तदानीं "हस्कृतिः" [हस हसने (भ्वा०प०) हासकारी प्रीत्यर्थं क्रियमाणो हर्ष-सूचको द्वितीय-मन्त्रोऽपि अजायत । किञ्च तदा "यद्" "जातं" भूतजातं "यच्च" "जन्त्वम्" [कृत्यार्थे त्व-प्रत्ययः] जनितव्यं विश्वमस्ति "तत्" "विश्वं" सर्व्वम् "अभिभूः असि" स्व-महिम्ना अभिभूतवानसि ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १र २र ३ १र २र ३ २
आमासुपक्वमैरयआसूर्य्यꣳरोहयोदिवि ।
३ १र २र ३ २ ३ २ ३ १ २ ३ २
घर्मन्नसामन्तपतासुवृक्तिभिर्जुष्टङ्गिर्वणसेबृहत् ॥ ३ † ॥ १९

---

* ऋ० वे० ६, ६, १२, ६ ।   † ऋ० वे० ६, ६, १२, ७ ।

हे इन्द्र! "आमासु" अपक्वासु गोषु "पक्वं" पयः "ऐरयः" प्रेरय [ तथा च मन्त्रः—"आमासुचिद्दधिषे पक्वमन्तः" इति। किञ्च, "दिवि" द्युलोके "सूर्य्यम्" "आरोहयश्च" [ पूर्वं पणयो-नामासुरा अङ्गिरसां गा अपहृत्यान्धकारावृते कस्मिंश्चित् पर्वते स्थापितवन्तः, ततोऽङ्गिरसः इन्द्रं स्तुत्वा गाः पुनरस्मभ्य-माहरेति तैरुक्तम् इन्द्रो गवां स्थानं तमसावृतं दृष्ट्वा तत्र गो-प्रदर्शनाय द्युलोके सर्वप्रकाशकं सूर्य्यमारोहितवान् ] स्थापित वानसि [ "चादि-लोपे विभाषा ( ८, १, ६२ )"—इति पूर्वस्य ऐरयइत्यस्य न निघातः। अथ परोक्षतोऽर्द्धर्चः—] हे स्तोतारः! "सुवृक्तिभिः" शोभनाभिः स्तुतिभिः "न तपत" इन्द्रं तीक्ष्णीकुरुत [ इन्द्रं स्तुतिभिः यथा तपन्ति तद्वत् ]। ततः "गिर्वणसे" गोभिर्वननीयायेन्द्राय "जुष्ट" प्रीतिकरं पर्याप्तं वा "बृहत्" महत् बृहदाख्यं वा "साम" गायत ॥३॥१९

अथ मत्स्यपायीति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१र २र ३ २ ३ १ २ ३ १र २र
मत्स्यपायितेमहःपात्रस्येवहरिवोमत्सरोमदः।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वृषातेवृष्णइन्दुर्वाजीसहस्रसातमः॥ १* ॥

हे "हरिवः" हरिभ्यां तद्वन्निन्द्र! "महः" महान् पूज्यो-ऽयं सोमः "पात्रस्येव" पात्रेणेव सोमपात्रेण यथा धार्यते सोमः,

* ऋ० वे० ६, ४, १८, १।

तत्सदृशेन त्वया [ तृतीयार्थे षष्ठी ( २, १, ८५ )। यद्वा, 'पात्रस्य' 'ते' तव स्वभूतः 'मदः' महान् सोमइति वा योजना ] "अपायि" पीतः [ आशंसाया विवक्षितार्थत्वात् भूतेऽर्थे प्रयोगः ] यतः पिब अतो "मत्सि" माद्यसि मादयस्व वा। "मत्सरः" मद-साधनः, "मदः" तर्पयिता; "वृषा" वर्षिता, "इन्दुः" क्लेदयिता आह्लाद-कारीत्यर्थः, "वाजी" अन्नवान् अन्नकार्य्य-तृप्ति-सद्भावात् अन्नवानित्युच्यते, "सहस्रसातमः" अपरिमित-दातृतमः सहस्र-पुरुष-सम्भजन-पर्यन्त-शक्त्यतिशयी वा एवं महानुभावः सोमः सम्पादितस्तं पिबेत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ २ ३उ ३ २ ३ १ २
आनस्तेगन्तुमत्सरोवृषामदोवरेण्यः।
३ १ १ ३ १ १ ३ १र ३र
सहावाꣳइन्द्रसानसिःपृतनाषाडमर्त्यः ॥ २* ॥

हे इन्द्र! "ते" त्वां "मत्सरः" मर्षण-साधनः सोमः "आगन्तु" आगच्छन्तु। कीदृशोऽयम्? "वृषा" वर्षकः "मदः" तर्पयिता, "वरेण्यः" वरणीयः, "सहावान्" सहायवान् अस्मद्दत्तेन सोमेन सहायवान् सन् "सानसिः" अस्माभिः सम्भजनीयः, "पृतनाषाट्" शत्रुसेनायाः अभिभविता अमर्त्यश्च भवेति ॥ २ ॥

---

* ऋ० वे० १, ४, १८, २।

